VOL-IV

ISSN 2394-5109
UGC Sl. No. : 63733

# तर्कतरङ्गिणी

विश्वविद्यालयानुदानायोगाङ्गीकृता वार्षिक-राष्ट्रिय-शोधपत्रिका २०१६-१७
UGC Apprived Annual national research journal-2016-17

आन्वीक्षिकी न्यायविद्या

तर्कशास्त्रम् वाकोवाक्यम्

सम्पादकः
डॉ. महेशझा

नव्यन्यायविभागः
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A श्रेण्यां प्रत्यायितम्)
श्रीसदाशिवपरिसरः, पुरी, ओडिशा

VOL-IV

ISSN 2394-5109
UGC Sl.No. : 63733

# तर्कतरङ्गिणी

विश्वविद्यालयानुदानायोगाङ्गीकृता वार्षिक-राष्ट्रिय-शोधपत्रिका २०१६-१७

**UGC Apprved Annual national research journal-2016-17**



**नव्यन्यायविभागः**

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A श्रेण्यां प्रत्यायितम्)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

VOL-IV

ISSN 2394-5109
UGC Sl.No. : 63733

# तर्कतरङ्गिणी

# TARKATARANGINI

विश्वविद्यालयानुदानायोगाङ्गीकृता वार्षिक-राष्ट्रिय-शोधपत्रिका २०१६-१७

UGC Apprved Annual national research journal-2016-17

**प्रकाशक:**

नव्यन्यायविभाग:

श्रीसदाशिवपरिसर:, पुरी-७५२००१

## सम्पादकमण्डलम्





| | | |
|---|---|---|
| संस्करणम् | : | २०१७ |
| अनुकृतय: | : | ३५० |
| मूल्यम् | : | १७५/- |
| अक्षरसंयोजनम् | : | दाश् कम्प्यूटर, माउसीमाँ मन्दिर, पुरी |
| मुद्रणालय: | : | अन्नपूर्णा प्रिण्टर्स, पुरी |

**प्रो. अतुलकुमारनन्दः**
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
(भारतसर्वकारस्य
मानवसंसाधनविकासमन्त्रालयाधीनम्)
श्रीसदाशिवपरिसरः, पुरी, उत्कलाः

**Prof. Atul Kumar Nanda**
**Principal**
RASHTRIYA SANSKRIT SANSTHAN
(Established Under Auspices of the Ministry of H.R.D.
Department of Education, Govt. of India.)
(Deemed university)
Shree Sadashiva Campus,
Puri (Odisha)

---



# प्राचार्यवाक्प्रसूनाञ्जलिः

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।।

अयमुपदेशः धर्मनिर्णयार्थं तर्कस्य महत्त्वं दर्शयति । धर्म अस्य जीवनस्य सारं तत्त्वं तस्य निकषं तर्कः। एवमेव वादे, संशये, प्रमाणग्रहे, दृष्टान्तादिसमस्ततत्त्वनिर्धारणे साक्षात्परम्परया तर्कस्यावश्यकतां विलोक्य इदं तर्कशास्त्रमिति तर्कप्राधान्यात्कथ्यते । वादिप्रतिवादिनोः विवादे तर्कः एव सिद्धान्तं स्थापयति । तर्काभावे च वादिदौर्बल्यं मतदौर्बल्यं वा कल्प्यते । अत एव –

व्याकरणेन विनान्धो बधिरः कोशवर्जितः । छन्दःशास्त्रं विना पङ्गुः मूकस्तर्कविवर्जितः ।।

इत्युक्तिरपि सङ्ग्च्छते । प्रमाणप्राधान्येऽप्यस्मिञ्छास्त्रे प्रमाणानुग्राहकतया तर्कः एव प्रमाणं द्रढयति । अयं हि तर्कः प्रतिक्षणं समस्तमानवजीवनं बहूपकरोति । कठिनस्याप्यस्य शास्त्रस्य महानुपयोगः व्यवहारेऽस्तीति नहि तिरोहितम् ।

नव्यन्यायविभागेऽस्मिन् विभागाध्यक्षस्य नेतृत्त्वे महदायासेन तर्कतरङ्गिणीत्यभिधाना शोधपत्रिका प्रकाश्यत इति महतः आनन्दस्य विषयः । नैरन्तर्येण ईदृशकार्येण विभागोऽयं संवर्धतामिति कामये ।

इत्थं –

अतुलकुमारनन्दः

प्राचार्यः

# सम्पादकीयम्...



सर्वेषां शास्त्राणामुपकारकतया आन्वीक्षिक्यापराभिधानस्य न्यायदर्शनस्य सुप्रसिद्धिः सुतरां सुप्राचीना, स्मृतिपुराणादिषु तस्य चतुर्दशविद्यास्थानानामेकतरत्वेनोक्तत्वात् । न्यायशब्दार्थविवरणप्रसङ्गे भाष्यकारः प्राह ''प्रमाणैरर्थपरीक्षणं न्यायः, प्रत्यक्षागमाश्रितमनुमानम्, प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रमिति'' । परार्थानुमानवत् प्रतिज्ञादिवाक्यपञ्चकसमुदायोऽपि न्यायशब्देन व्यपदिश्यते । सोऽयं न्यायः प्रत्यक्षादिनिखिलप्रमाणमूलकतया परमन्याय्यत्वेन व्यपदिष्टः भाष्यकारेण । न्यायशास्त्रस्य पक्षप्रतिपक्षभावेन विचारप्रधानतया परार्थानुमानप्राधान्यात् परार्थानुमानस्य च न्यायसाध्यत्वान्- न्यायप्रधानमिदं शास्त्रमिति गोतमीयतन्त्रस्य न्यायशास्त्रमिति विशेषतः संज्ञा । न्यायशास्त्रमन्तरा वेदा अपि नार्थं बोधयेयुः । नाङ्गानि तदर्थान् निश्चाययितुं प्रभवेयुः । न मीमांसापि प्रभवेत् स्वीयाः युक्तीः ग्रथयितुम् । न वा धर्मशास्त्रपुराणादयो समर्थाः भवन्ति स्वीयार्थप्रद्योतने लब्धप्रतिष्ठाः। यतो हि न्यायशास्त्रं मीमांसाङ्गमिति विदितमेव विदुषाम् । प्रमाणाधीना हि प्रमेयव्यवस्थितिः । प्रमाणान्यपि लक्षणादिभिः निरूपितस्वरूपाण्येव प्रमेयस्थापनाय प्रभवन्ति नापरता । किञ्च वेदाः धर्मशास्त्राणि पुराणव्याकरणादयः सर्वेऽपि स्वीयेष्वर्थेषु प्रतिष्ठापितेषु एव प्रेक्षावदुपादेयां प्रतिष्ठां लभन्ते नान्यथा । सर्वस्यापि प्रमेयस्य सर्वाङ्गीणा प्रतिष्ठा परीक्षकस्य तीक्ष्णया प्रेक्षापूर्वकपरीक्षयैव भवतीति नास्त्यत्र विदुषां वैमत्यम् । अतः प्रमाणादिनिरूपणपरमनोहरयुक्तिसन्दर्भस्य तर्कशास्त्रस्याध्ययनं सर्वोपकारकं सम्भावयन्ते बुधा इति नूनं तत्त्वजिज्ञासुभिः वैदिकीविद्येयं समधिगन्तव्या सर्वसामान्यैरप्यार्षविद्येयं शरणीकरणीयेति धिया प्रतिवर्षमिव ऐषमः शोधपत्रिकेयं प्रकाश्यमानाऽस्ति । २०१७-२०, २१ फ्रेब्रवरीमासे राष्ट्रियसंस्कृतसंस्थानानुकूल्येन नव्यन्यायविभागपक्षतः समायोजितायां राष्ट्रियशोधसङ्गोष्ठ्यां प्रतिभागिनः विद्वांसः आचार्याः शोधच्छात्रच्छात्राश्च शोधप्रबन्धान् प्रस्तुतवन्तः तेषां सङ्कलनोद्भूतेयं तर्कतरङ्गिणी । सारस्वतकर्मण्यस्मिन् सर्वविधसाहाय्यार्थमस्माकं कुलपतिवर्याणां प्रथितयशसामाचार्यपरमेश्वरनारायणशास्त्रिमहोदयानां, कुलसचिवानामाचार्य एस. सुब्रह्मण्यशर्म्ममहोदयानां, शास्त्रेषु कृतभूरिपरिश्रमाणामस्माकं प्राचार्यवर्याणामाचार्य - अतुलकुमारनन्दमहाशयानाञ्च कृते हार्दं सश्रद्धं कार्तज्ञ्यं प्रणतितातिं च विज्ञाप्य सहसम्पादकत्वेन दायित्वनिर्व्यूढ़वतां विभागीयाचार्याणां डॉ.गणपतिशुक्ल - डॉ.कुञ्जविहारीद्विवेदि - डॉ.पीताम्बरमिश्रमहोदयानां च कृते हार्दान् धन्यवादान् व्याहरामि । प्रकाशनकर्मणि सहायकस्य प्रियशोधच्छात्रस्य पूर्णचन्द्रदाशस्य च कृते हार्दिकं साधुवादः । सर्वान्ते च शास्त्रसंरक्षणपुरस्सरं न्यायरसिकानामस्माकं सर्वेषां विशेषतो विभागीयच्छात्रच्छात्राणां सर्वविधकल्याणार्थं सर्वान्तर्यामिभगवन्तं श्रीजगन्नाथं याचे ।

इत्थं–<br>
विदुषां विधेयः<br>
**डॉ.महेशझा**<br>
विभागमुख्यः सम्पादकश्च

VOL-IV

तर्कतरङ्गिणी-२०१६-१७
ISSN 2394-5109
UGC Sl.No. : 63733

# विषयानुक्रमणिका

# न्यायदर्शने व्याख्यापरम्परा

डॉ. किशोरनाथझा

**रत्नाकरो हि भवनं गृहिणी च पद्मा देयं किमस्ति भवते जगदीश्वराय ।**

**राधागृहीतमनसो मनसोऽस्ति दैन्यं दत्तं मया निजमनस्तदिदं गृहाण ।।**

शास्त्रस्याभिप्रायं परिज्ञातुं व्याख्याया: भवत्यावश्यकता ।व्याख्ययैव शास्त्रीयविषयाणां सिद्धान्तानां चावबोधो वैशद्येन जायते । संशीत्या विषयाणां यज् ज्ञानं विचिकित्सा च नैव शोभते ।

उद्देश्यद्वयं मनसि निधायैव व्याख्यायां प्रवर्तते धीधन: । यस्य विषयस्य व्याख्यां चिकीर्षति तस्य विषयस्यावबोधार्थं व्युत्पत्त्याधायकेन व्याकरणकोशादिसमुपकरणबलेन व्याख्याकृत् तथा प्रचेष्टते यथा विषय:, पाठकस्य हृदयङ्गमो भवेदेव । सफलस्य कुशलस्य च व्याख्याकृत: प्रचेष्टया साधारणजिज्ञासुरपि स्वल्पायासेन शास्त्रार्थमवगच्छतीति दृष्टमेकमुद्देश्यम् । आत्मसंप्रदायस्य गुरुपरम्परया समागतस्य शास्त्रीयसिद्धान्तजातस्य संरक्षणं संवर्धनञ्च भवति द्वितीयमुद्देश्यम् । अत एव यस्यां गुरुपरम्परायामसौ शिक्षितो दीक्षितो वा भवति व्याख्याकार: तत्सम्प्रदायस्याग्रगत्यौ सम्प्रदायसिद्धान्तानां संरक्षणसंवर्धनप्रचारेभ्यश्चात्मनो दायित्वं तन्निर्वहति ।

उदाहरणतया न्यायदर्शनस्य प्रसिद्धतमा व्याख्या वाचस्पतिमिश्रस्य तात्पर्यटीका परिग्रहीतुं शक्या । कृत्स्नस्यैव भारतीयदर्शनस्य व्याख्यायां सर्वथा समर्थ: वाचस्पतिमिश्रस्तात्पर्यटीकायां प्रत्यक्षलक्षणसूत्रव्याख्यावसरे कथयति - अयमहमात्मगुरोस्त्रिलोचनस्योपदेशपद्धतिमनुसृत्य प्रत्यक्षस्य यथार्थस्वरूपं सप्रमाणं व्याख्यातवानिति ।

**त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखै: ।**

**यथामानं यथावस्तु व्याख्यातमिदमीदृशम् ।।**

एतावता स्फुटं प्रतीयते यद्वाचस्पतिमिश्र: सम्प्रदायमात्मन: संरक्षन्नेव सूत्रभाष्यवार्त्तिकाणां तात्पर्यं - पल्लवयितुं प्राचेष्टत । आचार्योदयनस्य परिशुद्धिपङ्क्त्यापि पश्चादियं कथा परिपुष्टिमेति । तथाहि परिशुद्धावभिलपितं उद्योतकरकालो हि अमूषां न्यायविद्यानां यौवनं तच्च कालपरिपाकवशात् गलितमिव । किं नामात्र त्रिलोचनगुरो: सकाशादुपदेशरसायनमासादितममूषां पुनर्नवीभावाय दीयते । (१/१/१) । अत्र जिज्ञासा भवति-आत्मगुरुणा त्रिलोचनाचार्येण प्रणीताया: भाष्यव्याख्याया: अधुना लुप्ताया अपि तदानीमुपलब्धाया: न्यायमञ्जर्या: व्याख्यां नैव विधाय किमर्थं न्यायवार्त्तिकव्याख्यायां वाचस्पतिमिश्र: प्रावर्तत इति । अत्र समाधानं न्यायमञ्जर्या: शतत्रयं पूर्वतनस्य वार्त्तिकस्य सिद्धान्तानामुपरि बौद्धाचार्यै: प्रक्षिप्तानां पंकानां प्रक्षालनमथ च न्यायसिद्धान्तानां नैर्मल्यविधानं तत्समयस्यापेक्षा आसीत् । महापाशुपतस्य उद्योतकराचार्यस्य प्रसिद्धतमा कृति: वार्त्तिकनाम्नी मौलिकसिद्धान्त-प्रतिपादिनी तदानीं प्रचुरं प्रसारप्रचारमवाप्नुवती आसीत् तत्कृतेस्तदानीं व्याख्यायामुपेक्षा वचनीयतां गच्छेत् ।

कदाचित् व्याख्येयग्रन्थस्य सिद्धान्तजातेन साकं तद्व्याख्यातु: स्फुटं भवति वैमत्यं तथापि

व्याख्याकार: व्याख्येयग्रन्थस्याशयं स्फुटं प्रकाशयत्येव । व्याख्येयविषयजातं नैव प्रच्छादयति । स्वाभिप्रायमाविष्कृत्यात्मनो वैमत्यमुपपादयति । एतावता शास्त्रार्थस्य परिष्कारधारायां प्रवाहस्य तीव्रतैवायाति न तु मन्दगतिकता अवरोधो वा ।

यद्यपि न्यायभाष्यवार्त्तिकतात्पर्यटीकानामध्ययनावसरे कोऽपि चक्षुष्मान् पाठक: एतादृशं वैमत्यमवलो-कयितुमर्हति तथापि विषयपरिशुद्ध्यै दिग्दर्शनमिहोदाहरणमुखेन विधीयते ।

संशयसूत्रभाष्ये सूत्रमनुसृत्य संशयस्य कारणभेदप्रयुक्तं कार्यभेदमङ्गीकृत्य तत्पाञ्चविध्यं सोदाहरणमुपपादितम् । किन्तु वार्त्तिकेऽस्य त्रैविध्यमभिहितम् । वाचस्पतिमिश्रस्तु तात्पर्यटीकायां वार्त्तिककृन्मतमिह पुष्णाति । अतएव संशयस्य त्रैविध्यं सम्प्रदायसिद्धमभवत् । भाष्यकृत: संशयस्य पाञ्चविध्यं सूत्रानुसारिभाष्यमततया स्वीकृतम् ।

समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श: संशय: इति न्यायसूत्रम् । अत्र समानधर्मोपपत्तिरनेकधर्मोपपत्तिर्विप्रतिपत्तिश्चेति कारणत्रयं संशयस्येत्यत्र नास्ति कस्यापि पक्षस्य विमति: । किन्तु अव्यवस्थितोपलब्ध्यनुपलब्ध्यो: संशयसाधारणकारणत्वं न न्यायवर्त्तिककृतोऽनुमतं कारणभेदप्रयुक्तं संशयभेदकत्वं तयो: न्यायभाष्यकृता स्वीकृतमिति वैमत्यं परस्परं स्फुटमेव ।

एवं वार्त्तिकतात्पर्यटीकयोरपि बहुत्र पारस्परिकं वैमत्यमवलोक्यते । न्यायदर्शनस्य प्रथमसूत्रस्थितनि:-श्रेयसपदस्य तात्पर्यमभिलपन् वार्त्तिककार: नि:श्रेयसं दृष्टादृष्टभेदेन द्विविधं मनुते । प्रमाणादिपदार्थतत्त्वज्ञानाद्दृष्टं नि:श्रेयसमैहिकमभ्युदयं स्वीकरोति अदृष्टं पुनरात्मनस्तत्त्वज्ञानादपवर्गात्मकम् । अत्र सर्वविधप्रयोजनस्य निमित्तत्वमान्वीक्षिक्या: ब्रुवता वात्स्यायनेन सह मतैक्यं विदधाति वार्त्तिककार: । वाचस्पतिस्तु तात्पर्यटीकायां केवलमपवर्गमेव नि:श्रेयसमभिदधाति कण्ठत: कतिधा-सेयमात्यन्तिकी दु:खनिवृत्ति: श्रेय:, अदृष्टमेव नि:श्रेयसमभिप्रेतं सूत्रकारस्य, शास्त्रस्यात्यान्तिकदु:खोपरमरूपनि:-श्रेयसाधिगम: प्रयोजनमुक्तमिति तात्पर्यटीकापंक्तय: (न्यायचतुर्ग्रन्थिकाल पृ. २०, मिथिलासंस्कृतशोधसंस्थानम्)

अध्यपवर्गं प्रमेयातिरिक्तप्रमाणादिपञ्चदशपदार्थानामुपयोगमधिकृत्य उद्योतकर: व्यपदिशति-उपनिषदाद्य-ध्यात्मविद्याभ्य आन्वीक्षिक्या: पृथक्प्रस्थानज्ञापने एव तदुपयोग: न तू परमपुरुषार्थं मोक्षमेते साधयन्ति । तथा च वार्त्तिकपंक्ति:- तस्मादेते संशयादय: पदार्था: प्रमाणे प्रमेये चान्तर्भवन्तो विद्याप्रस्थानभेदज्ञापनार्थं पृथगुपदिष्टा: इति । वाचस्पतिस्तु आत्मादिप्रमेयाणां तत्त्वज्ञानस्यापवर्गे साक्षादुपयोगमुपवर्ण्य परम्परया तदतिरिक्तपदार्थानामपि तत्रैवोपयोगं स्वारस्येन कल्पयति । अत्रत्या टीका पंक्ति:- नायं सूत्रार्थ: सर्वेषां तत्त्वज्ञानं साक्षान्निश्रेयसोपयोगीति किन्त्वात्मादितत्त्वज्ञानम् तदितरत्तु पारम्पर्येण । तत्र जल्पादीनां पराहङ्कारप्रशमनमवान्तरव्यापार इति न नि:श्रेयसपरिपन्थिता किन्तु आनुकूल्यम् । परिशुद्धावुदयनाचार्यस्तु वाचस्पतिमिश्रमतं परिपुष्णाति । अयं कथयति छलादीनां प्रयोजनं न साक्षान्नि:श्रेयसे उपयुज्यते आत्मादिवत् नापि तद्व्यवस्थापनद्वारा प्रमाणवत् तत्त्वप्रतिपत्त्यु-पायभूतकथात्रयपरिशुद्धिद्वारा तत्परिज्ञानं नि:श्रेयसोपयोगीति । यथा चेह भाष्यानुवूल्येन वार्त्तिककथा सङ्गता भवति, तथा वाचस्पतिमिश्रमतमपि परवर्तिनैयायिकैरधिकं समादृतमिति प्रमाणयति परिशुद्धिकृतस्तदनुसरणम् ।

एवं – **प्रदीप: सर्वविद्यानामुपाय: सर्वकर्मणाम् ।**
**आश्रय: सर्वधर्माणां शश्वदान्वीक्षिकीमतेति ।।**

न्यायभाष्योद्धृतकारिकायास्तृतीयचरणव्याख्यायां वार्त्तिकेन सह तात्पर्यटीकाया: मतपार्थक्यम् । सर्वासां विद्यानां पुरुषप्रवर्तना धर्मास्तेषामाश्रय इति तात्पर्यटीका । वार्त्तिकस्तु धर्मद्वारेण विद्यानामेवाश्रय इति व्याचष्टे - सर्वविद्योपकारकत्वादाश्रय: सर्वासां विद्यानामियमान्वीक्षिकी उपकरोति । सुस्पष्टयति मदुक्तिमिह परिशुद्धिस्तथाहि वाचस्पतेरत्रत्यां तात्पर्यटीकामधिकृत्य सा कथयति विद्याशब्देन तद्धर्मान् लक्षयति इति न भाष्यव्याख्याविरोध: । उद्योतकराभिहितं पुनरत्र धर्माणां विद्यापारतन्त्र्यम् विवक्षया साधु भवतीति ।

ईश्वर: कारणं पुरुषकर्माफल्यदर्शनात् इति सूत्रव्याख्यायां वार्त्तिककार: पूर्वपक्षतया ईश्वरं निमित्तकारणं जगतोऽभिलपति । तात्पर्यटीकाकारस्तु वेदान्तसम्मतं जगतोऽभिन्ननिमित्तोपादानकारणं तं पूर्वपक्षतया स्वीकरोति । एवं वयं पश्यामोऽत्र संप्रदायसंरक्षणतत्पराणां व्याख्याकृतां सत्यपि पारस्परिके वैमत्ये शास्त्रस्य चिन्तनधारायां निरन्तरं प्रवाहोऽनवरोधश्च ।

तात्पर्यटीकाया: व्याख्या परिशुद्धिनाम्नी आचार्योदयनेनारचिता । अन्वर्थनाम्नीयं परिशुद्धि: । स्ववर्गीयैर्नैयायिकैकदेशिभि: प्रतिपक्षिभि: बौद्धमीमांसकादिभिश्च विहितानाक्षेपान् निराकृत्य स्वकीया: सम्प्रदायसिद्धा: सिद्धान्ता: परिशुद्धिमासादिता: । अतएव प्रौढगौडनैयायिक: सानातनि: वङ्गाभिजनस्तदानीं प्रसिद्ध: श्रीवत्साचार्यश्च स्वयूथ्यप्रमुखौ नामग्राहमिह निराकृतौ । ज्ञानश्रीमित्र: प्राभाकरमीमांसकश्च बहुत्र नामग्राहमनामग्राहं चापाकृतौ तत्र । व्याख्याकार: वस्तुनिर्देशात्मके मङ्गलाचरण एव स्वकर्तव्यं प्रतिजानाति स्फुटम् । यथा वार्त्तिककार: कथयति–

**यदक्षपाद: प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।**
**कुतार्किकाज्ञाननिवृत्तिहेतु: करिष्यते तस्य मया निबन्ध: ।।**

न्यायभाष्यप्रतिपादितन्यायसिद्धान्तान् निराकर्तुं समुद्यतान् दिङ्नागवसुबन्धुप्रभृतीनेवात्र कुतार्किकपदेन गृहीत्वा तेषां मतमपाकर्तुमयं वार्त्तिकं विरचयति । एवं वाचस्पतिमिश्रस्तात्पर्यटीकायां कथयति

**इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।**
**उद्योतकरगवीनामतिजरतीनां समुद्धरणात् ।।** इति ।

धमकीर्त्यादिभि: वार्त्तिकसिद्धान्तजातं तद्युक्तिजालं च निराकर्तुं प्रयतमानै: य: पङ्कप्रक्षेपो विहितस्तत्रैव मग्ना नितरां वृद्धामर्थात् प्राचीनां वार्त्तिककृत: गां वाणीं समुद्धर्तुं ममायं प्रयास: । पुनरत्र बौद्धानामाक्षेपरूपाणि दूषणानि ग्रन्थव्याख्याव्याजेन सर्वाणि निरस्तानि मयेत्यप्युक्तम्–

**ग्रन्थव्याख्याच्छलेनैव निरस्ताखिलदूषणा ।**
**न्यायवार्त्तिकतात्पर्यटीकास्माभिर्विधास्यते ।।**

वाचस्पते: शतत्रयं प्राक् वार्त्तिकरचनाऽभूत् । अतएव वार्त्तिकवाणीरूपाया: गोरतिजरती विशेषणं साध्वेव । स्वव्याख्योपसंहारे वाचस्पति: मङ्गलाचरणकृतामात्मप्रतिज्ञामनुस्मरन् चतुर्थाध्यायान्ते त्रिभि: श्लोकैस्त-त्पूर्तिमभिदधाति–

निवारितानेकनिबन्धमेघपंक्तिः स्फुरन्निर्मलदिग्विशेषा ।

टीकेयमुद्योतकरप्रसङ्गमातन्वती भाति शरद्द्वितीया ।।

अतीते वर्षर्तौ यथा शरदि नभः स्वच्छं प्रतीयते तथैव बौद्धाक्षेपरूपमेघपंक्तिजातस्य निवारणे सति शास्त्रं निर्मलमभूत । पुनश्च इयं टीका दूषणकण्टकं परिहृत्य कुनिबन्धस्य बौद्धसिद्धान्तजातस्य संपर्कमपहृत्य उद्योतकरगवीनामर्थात् वार्त्तिककस्य मार्गं द्योतयति प्रकाशयति –

**परिहृतदूषणकण्टकमपहत कुनिबन्धपंकसंपर्कम् ।**

**उद्योतकरगवीनां मार्गं द्योतयति टीकेयम् ।।**

ईदृशीयं टीका इति व्याकुर्वन् कथयति वाचस्पतिः वादमृणालदण्डां जल्पोर्मिमालां विशिष्टां सरसीस्वरूपाम् एतामवाप्य वार्त्तिककारः सूरिणामर्थात् सनातनन्यायविदां मनोम्बुजानि विकासितुं समर्थोऽस्ति –

**टीकामिमां वादमृणालदण्डां जल्पोर्मिमालां सरसीमवाप्य ।**

**अद्यायमुद्योतकरः समर्थो विकासितुं सूरिमनोऽम्बुजानि ।।**

आचार्योदयनस्तु इमां तात्पर्यटीकामधिकृत्य कथयति महत्त्वमस्य–

**स्वच्छाः स्वभावशुचयोऽतिशयेन गुर्व्यः**

**दुर्बन्धदुर्धरदुराग्रहदुर्विभाव्याः ।**

**टीकागिरः विशदपारदविप्रुषो वा**

**येषां वशे ननु वशे जगदेव तेषाम् ।।**

अत्र वाचस्पतिवचसां वैशद्यं पारदविप्रुड्भिस्तोलयति आचार्यः ।

**संशोध्यदर्शितरसा मरुकूपरूपा–**

**ष्टीकाकृतो प्रथम एव गिरो गभीराः**

**तात्पर्यतो यदधुना पुनरुद्यमो नः**

**श्रीवत्सवत्सलतया तु तया तथापि ।।**

अत्र श्रीवत्सनामा वङ्गाभिजनः इदानीं लुप्तस्य न्यायलीलावतीनाम्नः न्यायग्रन्थस्य प्रणेता वाचस्पतिमतविरोधी आसीत् । अतएव तया वत्सलतया इत्यस्य विपरीतलक्षणया तन्मतखण्डनाय ममोद्यम इति तात्पर्यमभिधत्ते शुद्धिकृत् । आचार्योदयनस्य तात्पर्यटीकायां निरतिशयो विद्यते समादरः यं व्यक्तस्तद् पद्ये । मङ्गलमारचयन् परिशुद्धिकृत् सरस्वतीमभिदधाति यत् हे सरस्वति साञ्जलिबन्धं वारंवारं प्रार्थये-मम वाचि चेतसि च तथा सावधाना भवतु ममास्यां व्याख्यायां स्खलनं न भवेद्वाचि मनसि चेति ।

**मातः सरस्वति पुनः पुनरेष नत्वा**

**बद्धाञ्जलिः किमपि विज्ञापयाम्यवेहि ।**

**वाक्चेतसोर्मम तथा भव सावधाना**

**वाचस्पतेर्वचसि न स्खलतो यथैते ।।**

पुनः कृत्रिमभयं प्रदर्शयन्नात्मनि कथयति –

**वाचस्पतेरुपरि तत्त्वविचारदक्ष–**
**स्तात्पर्यशुद्धिमकरोदुदयाभिधानः ।**
**आशङ्कमान इव नाशमसौ स्वकीर्तेः**
**वाचस्पतिः पुनरिवोज्ज्वलयाम्बभूव ।।** इति ।

अर्थात् अहं किं कर्तुं शक्नोमि, स्वयमेव वाचस्पतिः स्वकीर्तिनाशशङ्कया पुनरुज्ज्वलयां बभूव तात्पर्यटीकामियाम् ।

आत्मकृतिं तात्पर्यपरिशुद्धिं स्तुवन् आचार्यः कथयति–

**सद्वाणीभरमन्दराचलचलन्निर्मथ्यमानान्तर -**
**न्यायम्भोनिधिपारिजाततिलका वाचस्पतिप्रेयसी ।**
**प्रीत्याकारिं वराङ्गनेव विदुषां सन्तोषवाहिन्यसौ**
**श्रान्तानामुदयेन तर्कनिकरे तात्पर्यशुद्धिः सताम् ।।**

तर्कसमूहानां विचारेभ्यः श्रान्तानां नैयायिकानां प्रसादाय तात्पर्यशुद्धिं व्यरचयम् । सद्वाणीरूपमन्दराचलस्य मन्थानस्य चलनेन न्यायशास्त्रजलधेर्मन्थने सति यः पारिजात आविरभूत्, तस्य तिलकं विधाय तात्पर्यटीका स्वरूपा वाचस्पतिमिश्रस्य प्रियतमेयं कुलवधूरिव मतिमतां मनः प्रसादयति इति ।

इयं हि प्राचीनन्यायस्य व्याख्यापरम्परा भाष्यवार्तिकतात्पर्यटीकापरिशुद्धिरूपा सम्प्रदायस्य मूलधारां बिभर्ति । अतएवाभिनववाचस्पति मिश्रः न्यायतत्त्वालोके मङ्गल एवाभिदधाति चतुर्ग्रन्थिकारूपेण धारामिमाम्– 'यदप्यतिपटीयसी जयति सा चतुर्ग्रन्थिका' । इति ।

वाचस्पतिमिश्रोदयनाचार्ययोर्मध्ये अस्या एव व्याख्याधारायाः पोषकः अनिरुद्धाचार्यः विवरणपञ्जिकां तात्पर्यटीकाटिप्पणीं व्यरचयत् । उदयनाचार्यः परिशुद्धौ अमुमधिकृत्य लिखति – विवरणकाराणां संकुलानीव वचांसि । तदत्र निपुणेन प्रतिपत्त्रा भवितव्यमिति ।

जैनधर्मावलम्बी अभयतिलकाचार्यस्तु चतुर्ग्रन्थिकायाः व्याख्यामलङ्कारनाम्नीं व्यरचयत् या खल्वसाधारणं वैशिष्ट्यं बिभर्ति बड़ौदानगरतः प्रकाशिताऽस्ति । अयं हि जैनाचार्यः जैनदर्शनस्य तद्धर्मस्य वा विना स्पर्शेन न्यायशास्त्रीयं सम्प्रदायसिद्धं सिद्धान्तजातं विशदयति इत्येतदस्य वैशिष्ट्यमश्रुतादृष्टपूर्वम् । अनन्तरमिहायाति श्रीकण्ठाचार्यः पञ्चप्रस्थानन्यायटिप्पणकृत् । सूत्रैः साकं चतुर्ग्रन्थिका अत्र पञ्चप्रस्थानपदेन विवक्षिता । फलतः न्यायसूत्रकृत्समयतः नव्यन्यायस्याविर्भावात् प्राक् ख्रीष्टीयद्वादशशताब्दं यावत् प्राचीनन्यायस्य संप्रदायः साधु संरक्षितः संवर्धितश्च । तदीयां मूलधारा निरन्तरं नितरां वेगेनाग्रेसराऽभवदिति विभावयामः । व्याख्यातृणां पारस्परिकं सदपि वैमत्यं नाभूत् तद् गतिरोधकम् । न केवलं परिशुद्धेः प्रकाशव्याख्याकृद्वर्धमानोपाध्यायोऽपि तु उदयनाचार्यस्य समस्तकृतिजातस्य टीकामारचयन् जागरूकतामात्मनः प्रदर्शयति समर्थयति चोदयनसिद्धान्तान् ।

तस्मात् संप्रदायसम्मतानां सिद्धान्तानां विचारे विषयाणां शास्त्रार्थानां च वैशद्ये अभिपायावबोधनस्य च प्रचेष्टायां व्याख्याकृतां सावधानता प्रशस्यतां याति ।

व्याख्याकार: व्याख्यावसरे स्वकीयया प्रतिभया पूर्वजन्मार्जितेन संस्कारेण गुरूणां शिक्षया च शास्त्र स्वारस्यमवबोधयति मूलधारायां व्याख्यां संयोजयति च । एकदेशिनां मतानि तत्कालप्रसिद्धानि निर्दिशति । स्वारस्यमस्वारस्यं वा तत्रात्मन: प्रदर्शयति यथायथम् ।

एकदेशिन: द्विप्रकारका: भवन्ति । केचन मुख्यधारया समन्वयं विधाय तत्रात्ममतं संयोजयन्ति केचन पुन: सिद्धान्तभेदं सम्प्रदायमते वैमत्यं वा प्रदर्शयन्ति । प्रथमकोटौ यदि वङ्गाभिजन: सानातनि: कथायाश्चातुर्विध्यं वर्णयन्ति । द्वितीयकोटौ भासर्वज्ञ: एकदेशिषु प्रमुख: सम्प्रदायसिद्धमुपमानं नाङ्गीकरोति । न्याययुक्त्या बौद्धाचार्यान् निरस्यन्नपि विचारस्वातन्त्र्यं विद्योतयति ।

यद्यपि प्रत्येकं व्याख्याता व्याख्यावसरे प्रमाणतर्काभ्यां परिपुष्टमात्मनोऽनुभवमासाद्य व्याख्येयविषयान् वैशद्येन परिष्करोति । तथापि एक एव विषयो यदि विविधैर्व्याख्याकृद्भि: व्याख्यायते तर्हि तत्र बुद्धिभेदकृतं पारस्परिकं वैमत्यं व्याख्यासु स्वाभाविकम् । अतएव पश्यामो वयम् 'अन्ये तु', 'परे तु', 'केचित्तु', इत्यादि पदसन्दर्भान् । क्वचिन्नाम्नामुल्लेखोऽपि भवति । यथा न्यायतत्त्वालोके नवीनवाचस्पतिमिश्रकृतौ- 'इति न्यायलोचनकृत:,' 'इति भास्कर:' 'इति चिन्तामणिकृत:' 'इति विद्यासागरादय' इति । एतेन सिद्ध्यति विषयद्वयम्, विचारस्य सातत्यं सार्वभौमिकत्वमथ च पारस्परिक: सम्प्रदायभेद: । व्याख्याकार: प्राय: आत्मकर्तव्यं मनुते स्वसमयप्रसिद्धानां मतानां संग्रहेण विचारसातत्यप्रदर्शनम् । मुख्यधारयाऽस्य मतस्य भिन्नतायां तन्निराकरणेन सम्प्रदायस्य संरक्षणम् भवति, सति मतैक्ये तेषां मुख्यधारया तस्या: सम्पुष्टिर्भवति ।

व्याख्याकृत: दायित्वचतुष्टयमादाय किमपि व्याख्यातुं प्रवर्तन्ते विषयजातस्यार्थात् व्याख्येयस्यावबोधाय तस्य पल्लवनम् युक्तिप्रमाणदिभिरित्येकं दायित्वम् । एतदर्थमात्मनोऽपेक्ष्यते प्रक्रियेति द्वितीयं दायित्वम् । तत्कालप्रचलिताया: व्याख्येयविषयसंबद्धाया: मान्यताया: संकलनम् तृतीयं दायित्वं, विपक्षिभिरुत्क्षिप्तानां दोषधूलीनां बाधकप्रमाणानां वाऽपाकरणेन विषयपरिशुद्धिप्रयास इति चतुर्थं दायित्वम् । सत्सु बाधकप्रमाणेषु केवलं साधकप्रमाणेन न भवति सिद्धि: पदार्थस्य, अतएव बाधकप्रमाणनिराकृतिरप्यावश्यकी भवति कर्तव्यकोटौ चायाति व्याख्याकाराणां । सर्वञ्चैतद् दायित्वं संक्षेपेण प्रदर्शितमिह प्रागेव ।

आसु व्याख्यासु विषयाणां विशदप्रतिपादनेन साकं, ऊहापोह: उपोद्घलकयुक्तिप्रदर्शनं तु विहितमेव । कदाचित् व्याख्यातृणामात्मसिद्धान्तयोगोऽपि भवति । वैशेषिकदर्शनं प्रति पक्षपात: न्यायभाष्यस्य सन्दृश्यते । अतएव द्वादशप्रमेयाणां स्वरूपलक्षणं विदधन् वैशेषिकपदार्थानामुल्लेखं स्फुटं करोति भाष्यकार: 'अस्त्यन्यदपि प्रमेयं द्रव्यगुणकर्मसामान्यविशेषसमवाया इति । तद्भेदेन चापरिसंख्येया इति । अनुमानसूत्रस्य त्रैविध्यं प्रकारद्वयेन व्याख्यातं भाष्यकृता । स्वकीय: विशेषोऽभिप्रायोऽपि प्रस्तुत: ।

ईश्वरवाद: वार्त्तिककृतोऽवदानम् । नात: प्राक् ईश्वर: जगत: कर्तृतयाऽर्थात् निमित्तकारणतया, अदृष्टस्याधिष्ठातृतया, वेदस्य कर्तृतया च केनापि प्रतिपादित: । दार्शनिकान्तरमतोल्लेखावसरे ईश्वरवादस्य चर्चा न्यायसूत्रेषूपलभ्यते । अत्रोल्लिखितेषु अष्टसु मतेषु सप्तमतानि उद्योकराचार्येण निराकृतानि एक एवेश्वरवाद: अभ्युपगत: विदितैव इयं कथा न्यायवित्सु । प्राचीने काले ईश्वर आसीदुपासनाविषय: न तु दार्शनिकविचारस्य विषय: । बौद्धानामाविर्भावत: समुपस्थितेऽस्मिन् विवादे दार्शनिकविचारविषयतां गत:

ईश्वरः । तस्मात् सूत्रभाष्ययोर्नास्ति तथा महत्त्वमीश्वरस्य: यथावार्त्तिके ।

न्यायभाष्यकारस्तु स्वसमये प्रसिद्धानां मतानां संग्रहं विधाय तं युक्तिप्रमाणाभ्यां निराकरोत् पर्यग्रहीद्वेति दृष्टम् । येनैतच्छास्त्रीयचिन्तनस्य नैरन्तर्यं प्रतीयते ।

न्यायवाक्यस्वरूपनिरूपणावसरे दशावयववादं नैयायिकैकदेशिमतं साधूपपाद्य निराकरोत् भाष्यकारः सूत्रकृत्संमतं पञ्चावयववादं समर्थयत् । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि प्रसिद्धाः पञ्च अवयवाः न्यायस्य, यत्र चतुर्णां न्यायशास्त्रसिद्धप्रमाणानामेकार्थप्रतिपत्तौ समावेशः । प्रतिज्ञायामागमस्य, हेतौ अनुमानस्य, उदाहरणे प्रत्यक्षस्य, उपनये उपमानस्य समावेशः, लौहशलाकाकल्पानां परस्परं विश्लिष्टानां चतुर्णामेकत्र निगमने नियोजनमिति सिद्धान्तः । जिज्ञासा, संशयः, शक्यप्राप्तिः, प्रयोजनं, संशयव्युदासश्चेति पञ्चानां योगेन प्रसिद्ध्यति दशावयववादः । एषामर्थोपकारकत्वेऽपि अर्थसाधकत्वं नास्तीति न प्रयत्नप्रतिपादनीयमिति भाष्यकृत् विवेचयति स्म वैशद्येन । जिज्ञासा परस्यावबोधाय नैव जायते । विरुद्धयोः धर्मयोरेक एव धर्मस्तत्त्वं भवति । अतः विरुद्धकोटिद्वयावगाही संशयः नार्थस्य भवितुमर्हति साधकः । प्रमाणेषु प्रमेयजननशक्तिः शक्यप्राप्तिः, सा च प्रमातुः प्रमेयबोधाय प्रमाणं सफलयति न तु परप्रतिपादिका भवति । प्रयोजनम् अर्थसाधकवाक्यस्य फलं न तु साधकवाक्यस्यैकदेशः । संशयव्युदासः प्रतिपक्षे हेतोरभावं निश्चिनोति, स च प्रमाणस्य प्रामाण्यसाधने समुपकरोति न तु परप्रतिपादको भवति । तस्मात् साधकवाक्यैकदेशता साक्षादर्थसाधकता च परप्रतिपादकवाक्यात्मके न्याये दशावयववादनिराकृतिहेतुर्भवति ।

वात्स्यायनस्य न्यायभाष्यं सर्वस्मात् प्राचीनं व्याख्यानं पूर्णाङ्गमुपलभ्यते । यद्यपि आगमडम्बरनाटके बौद्धदर्शनग्रन्थेषु च केचन न्यायाचार्याः सन्ति समुल्लिखिताः विश्वरूपभाविविक्ताविद्धकर्णवित्तोक शतानन्दशङ्करनरसिंहनामधेयाः । संभवति एषु केचन न्यायभाष्यकारतः पूर्ववर्तिनः सूत्रव्याख्यातारः भवेयुः । परमेषां कृतिः उद्धरणतयैवोपलभ्यते न तु सुश्रृङ्खलाः क्रमबद्धाः पूर्णाङ्गाश्च । अतएव न्यायसूत्राणामर्थपरिज्ञानाय सर्वस्मात् प्राचीनं न्यायभाष्यमेवास्माकं शरणं विद्यते ।

न्यायदर्शने काश्मीरप्रस्थानस्य प्रतिनिधिर्जयन्तभट्टः न्यायमञ्जरीं प्राणैषीत्, यत्र न्यायसम्प्रदायस्य मुख्यधारया वर्तते समन्वयः । तथाहि ग्रन्थोपसंहारे स्वयमभिदधात्ययम्–

**इत्येवं सूत्रकारागममनुसरतानुज्झता भाष्यभूमिम्**
**स्थाने स्थाने परेषां मतमतुलगतिं क्षिण्वता तार्किकाणाम् ।**
**काञ्चिद्वाक्यार्थचर्चामपि विरचयतानुक्रमेणावतीर्णा**
**निर्णीताः स्वे निबन्धे निपुणमिह मया षोडशैते पदार्थाः ।।**

अत्र पद्ये परेषां तार्किकाणामित्यनेन बौद्धाचार्या अभिप्रेताः । यदुक्ता मया प्राक् भाष्यवार्त्तिकयोर्मतद्वैधवार्ता तस्य वैशद्येन विचारोऽत्र प्रवराचार्यपदाभ्यां विहितः जयन्तभट्टेन तार्किकवरेण्येन । भाष्यानुगामिनोऽत्र प्रवरपदेन वार्त्तिकानुगामिनश्चात्र आचार्यपदेन सन्ति अभिहिताः । न्यायमञ्जर्याः व्याख्यातचक्रदत्तः स्फुटमभिलपति कथा मिमाम् ।

पुनः ज्ञानश्रीमित्रः रत्नकीर्तिः कमलशीलेन सह शान्तरक्षितश्च तात्पर्याचार्यस्य वाचस्पतिमिश्रस्य मतं निराकर्तुमुद्यता अभूवन् । ये वां समुचितमुत्तरं प्रदाय वाचस्पतिमतं विद्योतयितुम् इहागच्छत्

आचार्योदयनः । न केवलमयं परिशुद्धावेवापितु आत्मतत्त्वविवेकन्यायकुसुमाञ्जल्योरात्मप्रकरणग्रन्थयोः बौद्धाचार्याणां ज्ञानश्रीमित्रादीनां मतानि निरस्य आत्मेश्वरयोः सिद्धिमकार्षीत् । अतएवात्मतत्त्वविवेकस्य बौद्धधिक्कार इत्यपि संज्ञा प्रसिद्धाभवत् । पश्चात् कालचक्रप्रभावेण ह्रासतां गते बौद्धदर्शने प्रबलस्य प्रतिपक्षिणोऽभावे चिन्तनधारेयं न्यायदर्शनस्य क्रमशः क्षीणतां कृशतामवाप्नोत् । तार्किकरक्षायां वरदराजस्तु आचार्योदयनं प्रतिपदमनुगच्छतीति दृश्यते ।

(२) न्यायसूत्राणां भिन्नप्रकारापि व्याख्या वृत्यभिधाना आचार्योदयनकालादेव प्राचलत् । अत्र सूत्राणामभिप्रायस्तु साङ्गोपाङ्गं विवृतो भवति किन्तु शास्त्रान्तरसंक्रमणाभावात् विशेषविचारस्य समावेशो न भवति । वृत्तिलक्षणमेव सकलसूत्रसारविवरणस्वरूपं काव्यमीमांसायां राजशेखरेणाभिहितम् । न्यायपरिशिष्टं बोधसिद्धिनाम्ना प्रथितमाचार्योदयनः पञ्चमाध्यायगतसूत्राणां वृत्तिं व्यरचयत्, अन्वीक्षानयतत्त्वबोधनाम्नी गङ्गेशोपाध्यायस्य पुत्रेण वर्धमानोपाध्यायेन पञ्चमाध्यायसूत्राणां वृत्तिरारचिता । प्रकाशिता च प्राक् प्रयागस्थ, गङ्गानाथझापरिसरे राष्ट्रियसंस्कृतसंस्थाने मानितविश्वविद्यालये । न्यायसूत्राणां विश्वनाथभट्टाचार्यप्रणीता वृत्तिः सर्वत्र भारते पाठ्यरूपेण समादृता चिरकालादेव । अस्याः वृत्तेरारम्भिकचतुस्सूत्र्याः वृत्तिमधिकृत्य तात्पर्यविवृतिनाम्नी व्याख्या विहिता महामहोपाध्यायेन बालकृष्णमिश्रेण, प्रकाशिता च सेत्यवगन्तव्यम् । गौतमीयसूत्रप्रकाशाभिधाना केशवमिश्र- मैथिलप्रणीता वृत्तिः सूत्रपाठनिर्धारणे अधिकं जागरूका सती सूत्राभिप्रायं विशदयति आत्मकृतेः वृत्तेरस्याः प्रशंसायामयं स्वयं वृत्तिवैशिष्ट्यं प्रतिपादयति–

**आस्ते यद्यपि पूर्वपण्डितकृता व्याख्यैव संख्यावता–**
**मानन्दाय तथापि केशवकवेर्वाचामियं गुम्फना ।**
**व्याख्यासौष्ठवशब्दलाघवमिथः संबन्धपूर्वापर–**
**प्रत्यर्थप्रतिबद्धनिर्मलगुणा कुत्रान्यतो लभ्यताम् ।।**

इयमेव स्थितिः रामभद्रसार्वभौमप्रणीतायां वृत्तौ दृश्यते या विद्वद्वरेण्येन प्रबालकुमारसेनमहाशयेन सम्पादिता कलिकातातः प्रकाशिता । वङ्गाभिजनस्य राधामोहनगोस्वामिनः न्यासूत्रवृत्तिरपि प्रकाशिता विद्यते । भट्टवागी- श्वरस्य न्यायतात्पर्यदीपिका प्रकाशिताऽस्ति । अत्र तात्पर्यटीकातः सूत्रसारांशोऽस्ति आहृतः । नवीनवाचस्पति-मिश्रस्य न्यायतत्त्वालोकनाम्नीवृत्तिः प्राचीननवीनन्याययोश्चिन्तयोर्मध्ये सेतुबन्धमाचरत् अतएव विशदा विस्तरा प्रौढतमा च विद्यते । न्यायसूत्रपरीक्षानाम्नी न्यायसूत्रवृत्तिः प्रसिद्धपण्डितगोकुलनाथोपाध्यायभागिनेयस्य वंशधरोपाध्यायस्य यद्यपि न प्रकाशिता किन्तु पूर्णाङ्गा समुपलभ्यते दरभंगास्थमिथिलासंस्कृतशोधसंस्थाने । अन्येषामपि नैयायिकानां वृत्तयः श्रूयन्ते । न्यायतत्त्वालोकभूमिकायां यथाज्ञातवृत्तयः वृत्तिकाराश्च मया समुल्लिखिताश्चेति दिक् प्रदर्शनम् । तस्मदिह उपसंहारे वक्तुं शक्यं यत् चिरादेव न्यायसूत्राणां द्विविधा व्याख्याधारा प्रवहन्ती विद्यते । यत्र व्याख्याभिः साकं चतुर्ग्रन्थिकायां जयन्तभट्टस्य न्यायमञ्जर्यामथ च सूत्राणां वृत्तौ च मौलिको विचारः बहुविधः समागतः । येन परिणाहो, गाम्भीर्यं, शास्त्रचिन्तनसातत्यं च न्यायव्याख्यापरम्परायाः समाकलनीयतां याति । इति शम् ।।

बिट्ठो, सरिसबपाही, मधुबनी

# नव्यन्यायशैल्या तर्कसंग्रहे प्रणीतात्मलक्षणविचारः

प्रोफेसर के.वि.सोमयाजुलुः

मुमुक्षूणां मोक्षप्राप्तये भ्रमप्रमादरहितं यथार्थज्ञानमावश्यकम् । इदमेव तत्त्वज्ञानमिति नाम्ना व्यपदिश्यते । एतस्मादेव तत्त्वज्ञानान्मुमुक्षवो मोक्षं विन्दन्ति, नान्यथा । इदञ्च तत्त्वज्ञानं न्यायदर्शनसम्प्रदायप्रवर्तकमहर्षिमण्डल- मण्डनायमानगोतममुनिना ईश्वरीयज्ञानमिति नाम्ना प्रत्यपादि । एतादृशस्य यथार्थस्येश्वरीयज्ञानस्याधिकरणमात्मा भवति ।अयञ्चात्मा पृथिव्यादिनवद्रव्येषु अन्यतमो राजते । तत्र द्रव्याणि कतीत्याकाङ्क्षायामन्नम्भट्टेन स्वप्रणीते तर्कसंग्रहे पृथिव्यप्तेजोवायुराकाशकालदिगात्ममनांसि नव द्रव्याणि प्रत्यष्ठापिषत । उक्तञ्च [1]तर्कसंग्रहे – ''तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवद्रव्याणि'' इति । तेषु नवसु द्रव्येषु आत्मनःकिं लक्षणमित्याका-ङ्क्षायामन्नम्भट्टेन [2]तर्कसंग्रहे – ज्ञानाधिकरणमात्मा । स द्विविधःजीवात्मा, परमात्मा, चेति । तत्रेश्वरः सर्वज्ञः परमात्मैक एव । जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च'' इति जग्रन्थि ।

श्रीमता अन्नम्भट्टेन ज्ञानाधिकरणमात्मा इतिग्रन्थमुखेन आत्मनो लक्षणं सूचना-रूपेण सूक्ष्मातिसूक्ष्मतया पर्यष्कारि । ज्ञानस्याश्रयो यस्स आत्मेति तदर्थः । तथा च ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणं फलति । एतस्य ज्ञानलक्षणस्य स्वीकारे विषयतासम्बन्धेनायथार्थज्ञानस्य घटादिष्वपि सत्त्वात् पूर्वोक्तज्ञानलक्षणस्योक्तरीत्या घटादावतिव्याप्तिस्स्यात् । अतस्तद्वारणाय पूर्वोक्तज्ञानलक्षणघटकज्ञाननिष्ठाधेयतायां समवायसम्बन्धावच्छिन्नत्वं निवेशनीयम् । दत्ते च तादृग्विशेषणे घटपटादिषु विषयतासम्बन्धेन ज्ञानाश्रयत्वस्य सत्त्वेऽपि समवायेन घटादिषु ज्ञानस्याभावान्नातिव्याप्तिः । अतः ज्ञानाधिकरणमात्मा इति वाक्यस्य समवायसम्बन्धेन ज्ञानाश्रयो यस्स आत्मेत्येव तत्र समन्वयः कर्तव्यः । केवलमधिकरणमात्मा इत्येतावन्मात्रोक्तौ घटपटाद्यधिकरणे भूतले पूर्वोक्तात्मलक्षणस्यातिव्याप्तिः स्यात् । अतस्तद्वारणाय पूर्वोक्तात्मलक्षणे ज्ञानपदमुपादेयम् । भूतलादौ घटपटादीनां सत्त्वेऽपि ज्ञानस्याभावादात्मलक्षणस्य तत्र नातिव्याप्तिः ।

ननु मुक्तिदशायामात्ममनस्संयोगाभावेन ज्ञानस्याभावादात्मनि पूर्वोक्तलक्षणस्याव्याप्तिरिति चेन्न । आत्मनि मुक्तिदशायामात्ममनस्संयोगाभावेन ज्ञानाभावेऽपि ज्ञानसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य तत्र विवक्षिततत्वेन पूर्वोक्तात्मलक्षणस्य परमात्मनि नाव्याप्तिः ।

### गदाधरभट्टाचार्यमतानुसारमात्मलक्षणस्य अव्याप्तिनिवारणप्रदर्शनम्

अयमत्र गदाधरभट्टाचार्यस्याशयः – आत्मलक्षणनिर्वचनावसरे विषयतासम्बन्धेन ज्ञाननिष्ठाधेयतानिरू-पिताधिकरणताश्रयत्वस्य घटादिष्वपि सत्त्वेन पूर्वोक्तात्मलक्षणस्य घटादवतिव्याप्तिवारणाय पूर्वोक्तज्ञाननिष्ठाधेयतायां समवायसम्बन्धावच्छिन्नत्वमिति विशेषणदानमाध्यमेन समवायसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपि- ताधिकरणाताश्रयत्वरूपात्मलक्षणस्य घटादौ अतिव्याप्तिवारणेऽपि अनित्यज्ञानवत्वस्यात्मलक्षणस्य परमात्मन्यत्राव्याप्तिस्स्यात् । एवं

नित्यत्वविशिष्टसमवायसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिता-धिकरणताश्रयत्वरूपनित्यज्ञानवत्वरूपात्मलक्षणस्य जीवात्मन्यव्याप्ति:स्यात् । नित्यत्वानित्यत्वोभयधर्माव-च्छिन्नसमवायसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वरूपस्य आत्मलक्षणस्याप्रसिद्धत्वात् स्वावच्छिन्नाधिकरणत्वसम्बन्धेन ज्ञानवत्वमात्मनो लक्षणं निर्वचनीयम् । तथाच गदाधरभट्टाचार्यमतानुसारं स्वावच्छिन्नस्वविषयककिञ्चिद्धर्मावच्छिन्नसमवायसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयता-निरूपिताधिकरणताश्रयत्वविशिष्टस्वावच्छिन्नज्ञानसमानाधिकरणद्रव्यत्वव्याप्यात्मत्वजातिमत्वमात्मनो लक्षणं फलति । स्पष्टञ्चेदं[1] पदकृत्यग्रन्थे ।

**''पदकृत्यसहितस्य तर्कसंग्रहस्थस्य विस्तृतात्मलक्षणस्य निरूपणम्''**

ज्ञानाधिकरणमात्मा इति [2]तर्कसंग्रहस्थवाक्यात् ज्ञानमाधेयतासम्बन्धेनाधिकरणे वर्तते इति सुस्पष्टं ज्ञायते । तत्र ज्ञानमाधेयपदार्थ: । तस्मिन्नाधेये ज्ञाने निष्ठत्वसम्बन्धेन आधेयतावर्तते । अधिकरणे आत्मन्याधिकरणता निष्ठत्वसम्बन्धेन वर्तते । ज्ञाननिष्ठाधेयताया: निरूपितत्वसम्बन्धेन आत्मनिष्ठाधिकरणतायामन्वय: । तथाच ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणं फलति । आत्मनि ज्ञानमस्तीत्युदाहरणे पूर्वोक्तात्मल-क्षणस्येत्थं समन्वय: । तथाहि – ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणम् । ज्ञाननिष्ठा या आधेयतेत्युक्ते आत्मनि ज्ञानमस्ति इत्याकारकप्रतीतिसिद्धा ज्ञाननिष्ठाधेयता स्वीक्रियते । तन्निरूपिता या अधिकरणतेत्युक्ते आत्मनिष्ठाधिकरणतातदाश्रयत्वमात्मनि वर्तते इति लक्षणसमन्वय: ।

**पूर्वोक्तात्मलक्षणस्य कालेऽतिव्याप्तिप्रदर्शनम्, तन्निवारणञ्च**

नन्वेवं पूर्वोक्तज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वरूपात्मलक्षणस्य काले अतिव्याप्ति: । तथाहि– ''सर्वाधार: काल:'' इति प्रतीत्या सर्वेषां पदार्थानां कालिकसम्बन्धेन कालेऽपि विद्यमानत्वात् कालस्यापि सर्वपदार्थेषु अन्यतमत्वात् ज्ञाननिष्ठा या आधेयतेत्युक्ते काले कालिकसम्बन्धेन ज्ञानमस्तीत्याकारकप्रतीतिसिद्धा कालिकसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयता स्वीक्रियते । तादृशकालिकसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिता-धिकरणताश्रयत्वस्य कालेऽपि सत्त्वेन पूर्वोक्तात्मलक्षणस्य कालेऽतिव्याप्ति: स्यात् ।

अतस्तद्वारणाय ज्ञाननिष्ठाधेयतायां समवायसम्बन्धावच्छिन्नत्वं निवेशनीयम् । दत्ते च तादृग्विशेषणे समवायसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणं फलति । समवायसम्बन्धावच्छिन्ना ज्ञाननिष्ठा या आधेयतेत्युक्ते समवायसम्बन्धेनैवात्मन्येव ज्ञानमस्तीत्याकारकप्रतीतिसिद्धा समवायसम्बन्धाव-च्छिन्नज्ञाननिष्ठाधेयता स्वीक्रियते । तन्निरूपिता या अधिकरणतेत्युक्ते सा आत्मनिष्ठैवाधिकरणता भवति, नतु कालनिष्ठा । यतो हि काले कालिकसम्बन्धेन ज्ञानस्य सत्त्वेऽपि समवायसम्बन्धेन तस्याभावादेतादृशात्मलक्ष-णस्यात्मनि लक्षणसमन्वय:, काले नातिव्याप्तिश्च ।

## पूर्वोक्तात्मलक्षणस्य जलेऽतिव्याप्तिशङ्का, तन्निवारणञ्च

नन्वेवमपि समवायसम्बन्धावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वरूपस्यात्मलक्षणस्य जलेऽतिव्याप्तिः । तथाहि – ज्ञाने द्वे आधेयेते वर्तेते । एका ज्ञानत्वावच्छिन्नाधेयता । अपरा गुणत्वावच्छिन्नाधेयता । यत्राधेयपदार्थे आधेयताद्वयं प्रसज्येत तत्र ''एकधर्मावच्छिन्नाधेयता एकैव स्वीकार्या, नत्वाधेयताद्वयम्'' इति न्यायादेकधर्मावच्छिन्नैकैवाधेयता स्वीकार्या । एवं तर्हि पूर्वोक्तात्मलक्षणे समवायसम्बन्धावच्छिन्ना ज्ञाननिष्ठा या आधेयतेत्युक्ते समवायसम्बन्धावच्छिन्नशीतस्पर्शरूपगुण - त्वावच्छिन्नशीतस्पर्शनिष्ठाधेयता स्वीक्रियते । तादृशसमवायसम्बन्धावच्छिन्नशीतस्पर्शत्वावच्छिन्नशीत - स्पर्शनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्य जले सत्त्वेन पूर्वोक्तात्मलक्षणस्य जलेऽतिव्याप्तिः प्रसज्यते ।

अतस्तद्वारणाय पूर्वोक्तात्मलक्षणघटकज्ञाननिष्ठाधेयतायां ज्ञानत्वावच्छिन्नत्वमिति विशेषणं निवेशनीयम् । दत्ते च तादृग्विशेषणे समवायसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिता - धिकरणताश्रयत्वमात्मनो लक्षणं फलति । समवायसम्बन्धावच्छिन्ना ज्ञानत्वावच्छिन्ना ज्ञाननिष्ठा या आधेयता इत्युक्ते समवाय- सम्बन्धेनैवात्मन्येव ज्ञानमेवास्तीत्याकारकप्रतीतिसिद्धा ज्ञानत्वावच्छिन्ना ज्ञाननिष्ठाधेयतैव तत्र स्वीक्रियते । न तु शीतस्पर्शनिष्ठाधेयता । यतो हि जले तादात्म्यसम्बन्धेन गुणत्वसाम्यमादाय शीतस्पर्शस्य सत्त्वेऽपि केवलगुणत्वसाम्यमादाय ज्ञानस्याविद्यमानत्वाज्ज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्य जलेऽसत्त्वेन आत्मनि एव सत्वेन च पूर्वोक्तात्मलक्षणस्यात्मन्येव समन्वयो जले नातिव्याप्तिश्च ।

## पूर्वोक्तात्मलक्षणस्य पृथिव्यामतिव्याप्तिशङ्का तन्निवारणञ्च

नन्वेवमपि पूर्वोक्तस्यैतादृशात्मलक्षणस्य पृथिव्यामतिव्याप्तिः । तथाहि – समवायसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठा या आधेयतेत्युक्ते गुणत्वसाम्यमादाय समवायसम्बन्धावच्छिन्नज्ञानत्वेतरगन्धत्वावच्छिन्नगन्धनिष्ठाधेयता स्वीक्रियते । तादृशसमवाय - सम्बन्धावच्छिन्नज्ञानत्वेतरगन्धत्वधर्मावच्छिन्नगन्धनिष्ठाधेय- तानिरूपिताधिकरणताश्रयत्वस्य पृथिव्यां सत्वात् पूर्वोक्तात्मलक्षणस्य पृथिव्यामतिव्याप्तिः ।

अतस्तद्वारणाय पूर्वोक्तात्मलक्षणघटकज्ञाननिष्ठाधेयतायां ज्ञानत्वेतरधर्मानवच्छिन्नत्वमिति विशेषण निवेशनीयम् । दत्ते च तादृग्विशेषणे समवायसम्बन्धावच्छिन्नज्ञानत्वेतरधर्मानवच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठा- धेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणं फलति । समवायसम्बन्धावच्छिन्ना ज्ञानत्वेतरगन्धत्वधर्मानवच्छिन्ना ज्ञानत्वावच्छिन्ना ज्ञाननिष्ठा या आधेयतेत्युक्ते समवायसम्बन्धावच्छिन्नज्ञानत्वेतरगन्धत्वधर्मानवच्छिन्नज्ञानत्वमा-त्रधर्मावच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठा - धेयतैवात्र स्वीक्रियते । तादृशसमवायसम्बन्धावच्छिन्नज्ञानत्वेतरगन्धत्वधर्मानवच्छिन्नज्ञानत्वमात्रधर्मा - वच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्य आत्मन्येव सत्त्वेन, पृथिव्यामसत्त्वेन च पूर्वोक्तात्मलक्षणस्य आत्मनि लक्षणसमन्वयः, पृथिव्यान्नातिव्याप्तिश्च ।

## पूर्वोक्तात्मलक्षणस्यात्मातिरिक्ताष्टद्रव्येष्वतिव्याप्तिशङ्का, तन्निवारणञ्च

नन्वेवमपि पूर्वोक्तस्यैतादृशात्मलक्षणस्यात्मातिरिक्ताष्टद्रव्येष्वतिव्याप्तिः । तथाहि – एतावता

प्रबन्धेन समवायसम्बन्धावच्छिन्नज्ञानत्वेतरधर्मानवच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठा - धेयतानिरूपिताधिकरणताश्रयत्वमात्म-लक्षणं फलति । एतादृशात्मलक्षणस्वीकारे आत्मातिरिक्तेष्वष्टद्रव्येष्वतिव्याप्ति: प्रसज्येत । यतस्तत्र तल्लक्षणसमन्वयावसरे समवायसम्बन्धावच्छिन्ना ज्ञानत्वेतरधर्मानवच्छिन्ना ज्ञानत्वावच्छिन्ना ज्ञाननिष्ठा या आधेयतेत्युक्ते आत्मातिरिक्ते पृथिव्याद्यष्टद्रव्यनिष्ठा समवायसम्बन्धावच्छिन्नज्ञानत्वेतरपटत्वघटत्वाख्योभयधर्मा-वच्छिन्ना द्रव्यत्वावच्छिन्नाधेयता स्वीक्रियते । तादृशसमवायसम्बन्धावच्छिन्नज्ञानत्वेतरपटत्वघटत्वाख्योभयध- र्मावच्छिन्नद्रव्यत्वावच्छिन्नद्रव्यनिष्ठा - धेयतानिरूपिताधिकरणताश्रयत्वस्यात्मातिरिक्तेषु पृथिव्याद्यष्टद्रव्येषु विद्यमानत्वात्पूर्वोक्तात्मलक्षण - स्यात्मातिरिक्तपृथिव्याद्यष्टद्रव्येष्वतिव्याप्तिस्स्यात् ।

अतस्तद्वारणाय पूर्वोक्तात्मलक्षणघटकसमवायसम्बन्धावच्छिन्नज्ञानत्वेतरधर्मा - नवच्छिन्नज्ञाननिष्ठाधेयतायां ज्ञानत्वेतरपटत्वघटत्वाख्योभयधर्मानवच्छिन्नत्वं निवेशनीयम् । दत्ते च तादृग्विशेषणे समवायसम्बन्धावच्छिन्नज्ञानत्वेतरपटत्वघटत्वाख्योभयधर्मानवच्छिन्नगुणत्वावच्छिन्न - ज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वमात्मनो लक्षणं फलति । एतल्लक्षणस्वीकारे आत्मातिरिक्तपृथिव्याद्यष्टद्रव्येषु समवायसम्बन्धावच्छिन्न-ज्ञानत्वेतरपटत्वघटत्वाख्योभयधर्मा - वच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयताया एव सत्वेन, समवायसम्बन्धावच्छि- न्नज्ञानत्वेतरपटत्वघटत्वाख्योभयधर्मानवच्छिन्नज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्याभावेन पूर्वोक्तात्मलक्षस्यात्मातिरिक्तपृथिव्याद्यष्टद्रव्येषु नातिव्याप्ति: ।

**पूर्वोक्तात्मलक्षणस्य परमात्मन्यव्याप्तिशङ्का तन्निवारणञ्च**

नन्वेवमपि पूर्वोक्तस्यैतादृशात्मलक्षणस्य परमात्मनि अव्याप्ति: स्यात् । तथाहि – पूर्वोक्तात्मलक्षणे ज्ञानपदेनेश्वरीयज्ञानातिरिक्तायथार्थज्ञानस्यैव ग्रहणात् समवायसम्बन्धावच्छिन्नज्ञानत्वेतरपटत्वघटत्वाख्योभय- धर्मानवच्छिन्नायथार्थीयभ्रमात्मकज्ञानत्वावच्छिन्नज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्य परमात्मन्यसत्वात् पूर्वोक्तस्यैतादृशात्मलक्षणस्य जीवातिरिक्ते परमात्मन्यव्याप्ति: । यतस्तत्र परमात्मनि भ्रमात्मकज्ञान- निष्ठाधेयतानिरूपिताधिकरणताश्रयत्वस्याभावात् ।

अतस्तद्वारणाय पूर्वोक्तमात्मलक्षणं जातिघटितं कार्यम् । तथा सति समवायसम्बन्धवच्छिन्नज्ञानत्वेतर-पटत्वघटत्वाख्योभयधर्मानवच्छिन्नयथार्थज्ञानत्वावच्छिन्न - यथार्थज्ञाननिष्ठाधेयतानिरूपिताधिकरणताश्रयवृत्तिद्रव्य-त्वव्याप्यात्मत्वजातिमत्वमात्मनो लक्षणं फलति । एतल्लक्षणघटकतादृशात्मत्वजाते: जीवात्मनीव परमात्मन्यपि सत्वात् पूर्वोक्तस्य निष्कृष्टस्य परिष्कृतात्मलक्षणस्यात्मनि लक्षणसमन्वय:, परमात्मनि नाव्याप्तिश्च । एतावन्तं सुदृढं समुद्रायमाणं मर्मगर्भन्निगूढाशयं मनसि निधाय श्रीमता अन्नम्भट्टेन स्वप्रणीते तर्कसंग्रहे ज्ञानाधिकरणमात्मा इति व्यरचीत्यलं पल्लवतल्लजकल्पानल्पजल्पनेनेति दिक् ।।

वरिष्ठाचार्य:
व्याकरणविभाग: राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालय:) श्रीसदाशिवपरिसर:, पुरी

# प्राणायामविधिस्तावत् समहत्त्वः प्रकीर्त्तितः

**प्रो. कमलेशमिश्रः**

[१]चित्तवृत्तिनिरोधलक्षणयोगस्याष्टाङ्गेषु[२] चतुर्थाङ्गत्वेन लब्धभूमिः प्राणायामः सर्वानुभवसिद्धः । प्राणायामान्मनोमलक्षयः[३] । क्षपितमनोमलचित्तस्यानेजत्त्वं ब्रह्मणि । अतः प्राणायामनिर्देशः ।

प्राणायामश्च प्राणवायुसंयमविशेषः । कण्ठस्थवायोः श्वासप्रश्वासलक्षणस्य गतिच्छेदः प्राणायामः[४] इति न्यायभूषणकाराः । सिद्धे आसने श्वासप्रश्वासयोर्गतिच्छेदस्य प्राणायामत्वमिति [५] पातञ्जलराद्धान्तः । श्वासो नाम सत्यासने बाह्यवायोरन्तरायनम् । प्रश्वासश्च कोष्ठवायोर्निःसरणं बहिः । श्वासप्रश्वासनियन्त्रणाच्चित्त-स्थैर्यमवश्यम्भावि । पूरकरेचककुम्भकानां प्राणायामत्वेन व्यवहृतिः । बाह्यगतिविच्छेदस्तु रेचकानन्तरम् । आभ्यन्तरगतिविच्छेदश्च पूरकानन्तरम् । कुम्भकवृत्तिरूपप्राणायामो रेचनपूरणप्रयत्नवर्जितः सहसा वायुगतिनिरोधः । रेचकपूरककुम्भकप्रकारेण शनैः शनै र्जेतव्यः प्राणायामो वनगजेन्द्रवत् ।

प्राणायामेऽधिकारस्तु नाडीशोधनानन्तरम् । नाडीशुद्धेरुपाय उपदर्शितः । तथाहि दक्षिणनासिकापुट-मङ्गुल्यावष्टभ्य वामेन वायुं पूरयेद्यथाशक्ति । ततोऽनन्तरमुत्सृज्यैवं दक्षिणेन पुटेन समुत्सृजेत् । सव्यमपि धारयेत् । पुनर्दक्षिणेन पूरयित्वा सव्येन समुत्सृजेद्यथाशक्ति । त्रिः पञ्चकृत्वो वा एवं अभ्यस्यतः सवनचतुष्टय-मपररात्रे मध्याह्ने पूर्वरात्रेऽर्धरात्रे च पक्षान्मासाद्विशुद्धिर्भवति इति[६] ।

अभीष्टाभ्यस्तासने उपविश्य प्राणायामाभ्यासः कर्त्तव्यः । मृगचर्मकुशाच्छादितकोमलासने सव्यसमारोपितेतरकरः फलमोदकनैवेद्येन शैलसुतासुतं समाराध्य सुखेनोपवेशनं कुर्यात् । समग्रीवशिरा वस्त्राच्छादितमुखो निष्कम्पशरीरो नासाग्रन्यस्तनयनः पूर्वाभिमुख उत्तराभिमुखो वा तिष्ठेत् । त्यक्तातिभोजनाभोजनः शास्त्रविधिना कुर्यान्नाडीशुद्धिम् । वर्जितनाडीशोधनः प्राणायामाभ्यासो व्यर्थश्रमभाक् । कर्त्तव्यताभागस्तत्र शास्त्रविश्रुतः । तथाहि -

नासाग्रे शशभृद्बीजं चन्द्रातपवितानितम् ।<br>
सप्तमस्य तु वर्गस्य चतुर्थं बिन्दुसंयुतम् ।।<br>
विश्वमध्यस्थमालोक्य नासाग्रे चक्षुषी उभे ।<br>
इडया पूरयेद्वायुं बाह्यं द्वादशमात्रकैः ।।<br>
ततोऽग्निं पूर्ववद्ध्यायेत्स्फुरज्ज्वालावलीयुतम् ।<br>
रेफं च बिन्दुसंयुक्तं शिखिमण्डलसंस्थितम् ।।<br>
ध्यायेद्विरेचयेद्वायुं मन्दं पिङ्गलया पुनः ।<br>
पुनः पिङ्गलयापूर्य घ्राणं दक्षिणतः सुधीः ।।<br>
तद्विरेचयेद्वायुमिडया तु शनैः शनैः ।<br>
त्रिचतुर्वत्सरं चापि त्रिचतुर्मासमेव वा ।।<br>
गुरुणोक्तप्रकारेण रहस्येवं समभ्यसेत् ।

प्रातर्मध्यंदिने सायं स्नात्वा षट्कृत्व आचरेत् ।।
सन्ध्यादि कर्म कृत्वैव मध्यरात्रेऽपि नित्यशः ।
नाडीशुद्धिमवाप्नोति तच्चिह्नं दृश्यते पृथक् ।। [७] इति ।

एतेन शरीरलघुता, कान्तिः, जठराग्निविवर्धनं नादाभिव्यक्तिश्च । न च जपेन नाडीशुद्धिः, तद्धेतुत्वेन तदनभ्युपगमात् ।

ततः प्राणायामः कार्यो रेचकपूरककुम्भकैः । वस्तुतः प्रणवस्य त्र्यात्मकत्वं रेचकपूरककुम्भकभेदात् ।
यो वेदादौ स्वरः प्रोक्तो वेदान्तेषु प्रतिष्ठितः ।।
तयोरन्तं तु यद्वार्गि वर्गपञ्चकपञ्चमम् ।
रेचकं प्रथमं विद्धि द्वितीयं पूरकं विदुः ।।
तृतीयं कुम्भकं प्रोक्तं प्राणायामस्त्रिरात्मकः ।
त्रयाणां कारणं ब्रह्म भारूपं सर्वकारणम् ।।[८] इति ।

तथा च वेदादौ स्वरोऽकारः । वेदान्तेषु प्रतिष्ठितः स्वर उकारः । अनयोः स्वरयोः पश्चात् पञ्चमवर्गस्य पवर्गस्य पञ्चमवर्णो मकार इति । अत्र प्रथमवर्णोऽकारो रेचकनाम्ना, द्वितीयवर्ण उकारः पूरकनाम्ना तृतीयवर्णो मकारश्च कुम्भकनाम्नाऽभिधीयन्ते । प्रकाशमयं ब्रह्मैव त्रयाणामेतेषां कारणमिति भावः प्रतीयते । अत्र रेचकः सृष्टिरूपः कुम्भकश्च स्थितिलक्षणः पूरकश्च संहाररूपो योगिनामुत्पत्त्यादेः करणतां यान्ति । प्रथमतः षोडशैर्मात्रैरापादतलमस्तकं पूरकं पश्चात् समाहिततया द्वात्रिंशकैर्मात्रैः कुर्याच्च रेचकम् । चतुःषष्ट्या मात्रया मूर्धदेशतः कुम्भकं कृत्वा संपूर्णघटवद्वायुं धारयेत् ।

अत्र मतान्तरमपि वर्त्तते । तथाहि –
तत्रादौ कुम्भकं कृत्वा चतुःषष्ठ्या तु मात्रया ।
रेचयेत् षोडशैर्मात्रैर्नासेनैकेन सुन्दरि ।।
तयोश्च पूरयेद्वायुं शनैः षोडशमात्रया ।
प्राणस्यायमनं त्वेवं वशं कुर्याज्जयी वशी ।। [९] इति ।

प्रकीर्त्तिताः पञ्च प्राणाः प्राणमाश्रिता वायवः । तेषु प्राणस्य मुख्यत्वम् । अयं प्राण ओष्ठनासिकयोर्मध्ये हृदये नाभिमण्डले पादाङ्गुष्ठाश्रितो राजते सर्वाङ्गेषु ।

प्राणायामद्वारा श्रेयःप्राप्तिः । षोडशसंख्याभिर्नित्यं प्राणायामाभ्यासान्मनोरथपूर्त्तिः । एतादृशप्राणायामाभ्यस्तश्च सर्वप्राणजयी । प्राणायामद्वारा शारीरिकदोषो भवति भस्मसात् । इन्द्रियजा मलाः प्राणायामैर्दह्यन्ते यथा ध्मायमानानां सुवर्णादीनां धातूनां मलाः । पितामातृगुरून् घातुकस्यापि प्रत्यहं शतं प्राणायामाः पापं नाशयन्ति । अत एवाह श्वेताश्वतरोपनिषद् –
प्राणायामशतं स्नात्वा यः करोति दिने दिने ।
मातापितृगुरुघ्नोऽपि त्रिभिर्वर्षैर्व्यपोहति ।।[१०] इति ।

**द्राघीयसीयं चर्चा प्राणायामविषयिणी शास्त्रेषु नानाभेदप्रक्रियाप्रतिपादनात् । वस्तुतः प्राणायामः प्राणापानसमायोगः श्वासप्रश्वासयोर्गतिविच्छेदो वा । मलनिवृत्तिः स्थिरता च प्राणायामप्रयोजनत्वेन कल्प्यते । प्राणायामानुष्ठानेन प्रकाशस्वरूपविवेकख्यातेरावरणीयं कर्म क्षीयते ।**

चित्तस्य स्थिरवृत्तित्वं श्वासप्रश्वाससंयमात् ।
इति पातञ्जलाज्ज्ञेयः प्राणायामसमाशयः ।।[११] इति ।

वस्तुतश्चित्तस्य स्थिरवृत्तित्वमेव प्राणायाममुख्यप्रयोजनम् । तच्च ब्रह्मणीति प्रथमतो निगदितं मया । प्राणायामद्वारा सुस्थमानवता, निर्मलता देवभावश्च सम्भवन्ति । मानवजीवनस्य पूर्णताप्राप्तौ प्राणायामो वरदहस्तः ।

प्राणायामो मलध्वंसी स्थैर्यमन्त्रप्रदायकः ।
प्राणायामविधिस्तावत् समहत्त्वः प्रकीर्त्तितः ।।
इति ।।


सहायकग्रन्थसूची पादटिप्पणीसंस्तुता ।

१. का - कारिका ।
२. त.ज्ञा.वि. - तत्त्वज्ञानविवृद्धिः, डॉ कमलेशमिश्रः (अहम्) मान्यताप्रकाशनम्, नवदिल्ली, २००९ ।
३. न्या.भू. - न्यायभूषणम् - भासर्वज्ञः, षड्दर्शनप्रकाशनप्रतिष्ठानम्, वाराणसी, फरवरी, १९६८ ।
४. यो.सू. - योगसूत्रम् (पातञ्जलयोगदर्शनम्) महर्षिपतञ्जलिः । चौखम्बा संस्कृतसंस्थानम्, वाराणसी १९८४ ।
५. श्वेता - श्वेताश्वतरोपनिषद्, ईशादि नौ उपनिषद्, शाङ्करभाष्यार्थ (१४२१), गीताप्रेस्, गोरखपुर ।


१. योगश्चित्तवृत्तिनिरोधः । यो.सू. १/२ ।
२. यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि । यो.सू. १/१९ ।
३. ततः क्षीयते प्रकाशावरणम् । यो.सू. २/५२ ।
४. न्या.भू., पृ. ५८८ ।
५. तस्मिन् सति श्वासप्रश्वासयोर्गतिच्छेदः प्राणायामः । यो.सू. २/४९
६. श्वेता. शा., अ.२, प्राणायामनिर्देशः ।
७. श्वेता. शा., अ.२, प्राणायामनिर्देशः ।
८. श्वेता. शा., अ.२, प्राणायामनिर्देशः ।
९. श्वेता. शा., अ.२, प्राणायामनिर्देशः ।
१०. श्वेता. शा., अ.२, प्राणायामनिर्देशः ।
११. त.ज्ञा.वि., का. ८४ ।


वरिष्ठाचार्यः
स्नातकोत्तरन्यायदर्शनविभागस्य,
निर्देशकोऽग्रीयसंस्कृतगवेषणाकेन्द्रस्य
श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य
श्रीविहारस्य पुरीस्थस्य

# न्यायशास्त्रदृष्ट्या आत्मज्ञानस्य मोक्षोपायत्वविचार:

प्रो.एन.आर.शठकोपताताचार्य:

अथ जगदेव दु:खपङ्कनिमग्नमुद्दिधीर्षु: गौतमो महर्षि: परमकारुणिक: आन्वीक्षिकीमहादशविद्यास्थाने-ष्वभ्यर्हिततमां [१]''प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्नि:श्रेयसाधिगम:'' इत्यारभ्य [२]''हेत्वाभासाश्च यथोक्ता:'' इत्यन्तै: सूत्रै: प्रणिनाय । नि:श्रेयससाधनत्वं चास्य शास्त्रस्य कथमिति तर्कामृते जगदीशतर्कालङ्कारै: प्रतिपादितम् । तत्र ''[३]अथ श्रुति: श्रूयते'' आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य'' इति। अस्यार्थ: मुमुक्षुणा आत्मा द्रष्टव्य:, मुमुक्षोरात्मदर्शनमिष्टसाधनमिति यावत् । आत्मदर्शनोपाय: क इत्यत्राह - श्रोतव्य इत्यादि, तेन अर्थक्रमेण शब्दक्रमस्त्यक्तो भवति, 'अग्निहोत्रं जुहोति'', यवागूं पचति इत्यादिवत् । तथा च श्रवणमनननिदिध्यासनानि तत्तज्ज्ञानजनकानीत्युक्तं भवति । अत्र श्रुतित: कृतात्मश्रवणस्य मननेऽधिकार: । मननं चात्मन इतरभिन्नत्वेनानुमानम्; तच्च भेदप्रतियोगीतरज्ञानसाध्यं, तथा चेतरभेदेन कियदित्येतदर्थं पदार्थनिरूपणम्'' इति ग्रन्थसन्दर्भा: । लोके तावच्चतुर्विधा: पुरुषार्था: (धर्मार्थिकाममोक्षरूपेण) प्रसिद्धा: । चतुर्थस्यैव पुरुषार्थस्य नि:श्रेयसमिति नामान्तरम् । नि:श्रेयसप्राप्तये साधनं किमिति साधनावगमे प्रवृत्ताया: मैत्रेय्या: कृते याज्ञवल्क्यस्य मोक्षप्राप्ति साधनोपदेशात्मकं वाक्यम् ''आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य'' इति । अत्र तव्यप्रत्ययेन विधित्वमवगम्यते । विधे: बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वभेदसाधनत्वं चार्थ: इति नैयायिकै: विध्यर्थविचारे निरूपित: । तथा च श्रवणमनननिदिध्यासनानि आत्मदर्शनोपायानीत्युक्तं भवति । नत्वत्र द्रष्टव्य इति प्रथमं पठितं तत्कथमन्येषाम् आत्मदर्शनोपायत्वमिति चेन्न । श्रुतिक्रमापेक्षया अर्थक्रमस्य प्राबल्यं अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्र मीमांसाशास्त्रे निरूपितम् । तत्र यवागुपाकस्य अग्निहोत्रार्थतया प्रथममनुष्ठेयमनन्तरं चाग्निहोत्रस्येति सिद्धान्त: । तद्वदत्रापि श्रवणमनननिदिध्यासनानाम् आत्मदर्शनोपायतया तदेव प्राथम्येनावगम्यते । श्रवणं चाचार्यमुखादात्म-विषयकज्ञानस्य प्राप्तिरिति सामान्यार्थ: । अनन्तरं कृतात्मश्रवण: मननेऽधिकृतो भवति । मननं नाम युक्ति भिरनुचिन्तनम् – आत्मा इतरभिन्न इत्यनुमानरूपम् । तच्च आत्मेतरपदार्थ ज्ञाने जाते तद्भिन्नत्वेन आत्मनस्सा-धनमिति पदार्था एव प्रथमं निरूपणीया इति पदार्थतत्त्वज्ञानान्नि:श्रेयसाधिगम इत्युक्तमिति ।

श्रुतावस्यां प्रतिपादितस्यात्मन: ईश्वरस्य चैक्यं मनसि निधाय न्यायाचार्या: श्रीमदुदयनाचार्या: स्वीयन्या-यकुसुमाञ्जलौ

[१]न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ।। इति न्यबन्धु: ।

आत्मतत्त्वज्ञानान्मोक्षप्राप्तिप्रकारश्च सूत्रकारैरेवोपावर्णि दु:खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति सूत्रेण । अस्यायमर्थ: यदा मिथ्याज्ञानं नश्यति तदा दोषा: प्रणश्यन्ति । दोषानां नाशे प्रवृत्तेर्नाश: । प्रवृत्तिनाशे जन्मनाश: जन्मनाशे दु:खनाश:

दु:खापाये चात्यन्तिकदु:खनिवृत्तिरूपो मोक्ष: इति"। तत्त्वज्ञानादेव मिथ्याज्ञानस्य नाश इति सूत्रकारैरेव "मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे" इति सूत्रेण प्रतिपादितम् ।

ननु तत्त्वानामानन्त्यात् सर्वविषयकतत्त्वज्ञानं कथं भवेत् कथं सर्वतत्त्वज्ञानाभावे मोक्षप्राप्तिरिति चेत् । अत्रेदं समाधानं भाष्यकारैरेवाभिहित [२]"आत्मादे: खलु प्रमेयस्य तत्त्वज्ञानान्नि:श्रेयसाधिगम इति । न सर्वविषयकं तत्त्वज्ञानं नि:श्रेयससाधनमपि तु [३]आत्मशरीरेन्द्रियार्थेत्यादिसूत्रोक्तप्रमेयतत्त्वज्ञानं नि:श्रेयससाधनमिति फलितार्थ: ।

ननु प्रमेयतत्त्वज्ञानात् नि:श्रेयसप्राप्तिरिति कथम् ? शरीरादीनां तत्त्वज्ञानस्य मोक्षसाधनत्वं न कुत्राप्य-भिहितमिति चेन्न । शरीरादीनां प्रमेयाणां दोषनिमित्तत्वात् दोषस्य च मिथ्याज्ञानकारणत्वात् तेषां स्वरूपापरिज्ञाने तत्राऽङ्कारानिवृत्तेरात्मतत्त्वज्ञानमप्यसाध्यं स्यात् । अतस्तेषां स्वरूपज्ञानमपि अपवर्गप्राप्तिनिमित्तमधिगन्तव्यम् । तदिदमुक्तं न्यायभाष्ये "किं पुनरर्थजातं यद्विषयोऽहङ्कार: ? शरीरेन्द्रियमनोवेदनाबुद्धय: इत्यादिभि: एवं प्रेत्यभावफलदु:खानि च ज्ञेयानि व्यवस्थापयति कर्म च दोषाँश्च प्रहेयान् । अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपाय- स्तत्त्वज्ञानम् । एवं चतसृभि: विधाभि: प्रमेयं विभक्तमासेवमानमभ्यस्यतो भावयत: सम्यग्दर्शनं यथाभूतावबोध: तत्त्वज्ञानमुत्पद्यते इति भाष्यपङ्तिभिश्च । "[४]शरीराद्दु:खान्तं प्रमेयं दोषनिमित्तं तद्विषयत्वान्मिथ्या-ज्ञानस्य" इति कथयन्त: आत्मापवर्गव्यतिरिक्तानां दशानां प्रमेयाणां दोषनिमित्तत्वं स्पष्टमेव तैरभिहितम् एवं च दोषकारणानाज्ञाने दोषनाशस्यासम्भवात्, दोषनाशभावे संसारनिवृत्त्यभावाच्च तेषामपि तत्त्वज्ञानं नि:श्रेयसकारणमिति भाव: ।

ननु सर्वदु:खनिमोक्षोऽपवर्गोऽस्तीत्यत्र किं प्रमाणम् ? न तावत्प्रत्यक्षम्; अतीन्द्रियत्वात् । प्रत्यक्षपूर्वक-त्वादेव नानुमानादिकमिति चेदुच्यते । शब्द एवात्र प्रमाणम् । शब्दश्च [५]स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते । [६]न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु:, [७]तमेव विदित्वाऽतिमृत्युमेति नान्य: पन्था विद्यतेऽयनाय इत्यादय: ।

आस्तामत्र मोक्षे प्रमाणं श्रुति:, तथाऽपि न्यायशास्त्रे आत्मतत्त्वज्ञानमेव मोक्षसाधनमिति निगदितमिति कथं निर्णीयत इति चेत् – अस्य समाधानं पूर्वमेवाभिहितं प्रमेयतत्त्वज्ञानस्य मोक्षसाधनत्वप्रतिपादनावसरे । आत्मनोऽपि प्रमेयान्तर्गतत्वात् इति ।

अन्यच्च मुख्यमिदं समाधानं सूत्रकारा अपि [८]"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्यु-पायैरिति वदन्त: आत्मज्ञानस्य मोक्षसाधनत्वं स्वयं प्राहु: ।अध्यात्मविधे: ये उपाया: तै: योगात् यमनियमाभ्यां च आत्मसंस्कार: अपवर्गाधिगमाय कर्तव्य इत्यर्थ: । आत्मसंस्कारो नाम आत्मनोऽपवर्गाधिगमक्षमता । अनन्तरं [९]"ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवाद" इति सूत्रमपि तमेवार्थं द्रढयति । अतोऽस्मिन् शास्त्रे आत्मतत्त्वज्ञानस्य मुख्यतया मोक्षसाधनत्वं सूत्रकाराभिमतमेव । अस्यापि ऋषेर्वाक्यस्य मुख्यं प्रमाणभूतं वाक्यं "आत्मा वा अरे द्रष्टव्य इत्यादि श्रुतिवाक्यमेव । तदुक्तं जयन्तभट्टेन न्यायमञ्जर्यां [१०]न च निष्प्रमाणकमर्थमेव ऋषिरूपादिरादिति भवितव्यमत्र प्रमाणेन । तत्तु वैदिकं विधिवाक्यं आत्मा ज्ञातव्य इति" इति ।

सर्वत्र हि अदृष्टविषये प्रेक्षापूर्वकारिणां प्रवृत्तिः विधिबलेनैव यथा यजेत स्वर्गकाम इत्यादिविधिबलेन यागादिषु प्रवृत्तिः तद्वदत्राप्यस्तु मोक्षोपाये तत्त्वज्ञाने मोक्षार्थिनां प्रवृत्तिः ''आत्मा वा अरे द्रष्टव्य इत्यादिविधिबलेन । तथापि यावत्फलं न श्रूयते तावदधिकारी नोपलभ्येत । यजेत स्वर्गकाम इत्यत्र स्वर्गाख्यस्य फलस्य श्रुतत्वात् स्वर्गकामनावानधिकारी भवति । तद्वदत्र कस्यापि फलस्य अश्रूयमाणत्वात् निरधिकारोऽयं विधिस्स्यात् । निरधिकारस्य विधेः प्रयोगयोग्यत्वाभावात् कथमनेन विधिबलेन मोक्षार्थिनां प्रवृत्तिः भवेदिति शङ्का जागर्त्येवेति चेन्न ।

न सर्वत्र स्ववाक्ये फलं वदति विधिः । रात्री रूपेयात्, विश्वजिता यजेत इत्यादिषु फलं तु न श्रूयत एव । तथाऽपि तत्रार्थवादिकं फलं; सर्वेषां कामनाविषयत्वात् स्वर्गं वा फलं कल्प्यते । तद्वत्रापि ''न च पुनरावर्तत इति आत्मप्रकरण पठितं अपुनरावृत्तिलक्षणं कलमेवेति एकः पक्षः ।

अपरश्च स्वाध्यायोऽध्येतव्य इत्यत्र यथा स्वाध्याय शब्दितमक्षरराशिग्रहणं फलं, यथा वा अग्नीनादधीतेत्यत्र आधानेन कार्यान्तरयोग्याग्निसिद्धिः फलं तद्वत्र आत्मस्वरूपस्य परोपाधिजनित धर्मरहितस्य अपवर्गरूपत्वात् तदेव फलमिति तादृशफलकामनावन्तमधिकारिणं प्रत्येवायं विधिरिति नास्य वैयर्थ्यमापादयितुं शक्यते । अयं च विषयः विस्तरेण न्यायमञ्जर्यां जयन्तभट्टेन प्रतिपादितः ''स एव तावन्न निरधिकारः विधिरित्यारभ्य आत्मज्ञानमेव निःश्रेयससाधनमनन्यलभ्यमिति तदेवोपदिष्टवानाचार्योऽक्षपाद इत्यन्तेन ग्रन्थेन ।

**सन्दर्भग्रन्थाः –**


१. न्यायमञ्जरी - नवमाह्निकम्

अतः आत्मतत्त्वज्ञानमेव न्यायशास्त्रे मोक्षसाधनमित्युक्तमिति सिद्धम् ।

२. ५-२-३५

३. १-१-१

४. १-१-९

५. ४-२-१

६. ४.२.४६

७. ४.२.४६


आचार्योऽध्यक्षश्च न्यायविभागस्य

श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, पुरी

# सिद्धान्तलक्षणदीधितिग्रन्थविमर्श:

डॉ.महेशझा

प्रमाणादेव हि प्रमेयस्य सिद्धिर्भवतीति निर्विवादेन सत्यम् । कथ्यते च – 'प्रमेयसिद्धि: प्रमाणाद्धि'[१] । इदमेव कारणं यत् नैयायिका: प्रमेयाणामपेक्षया प्रामाण्यस्य विवेचनमधिकतयाकुर्वन् । प्रमाया: करणं प्रमाणमिति कथ्यते । प्रमा अर्थात् यथार्थानुभव: – यत्र यदस्ति तत्र तस्यानुभव: । तद्वन्निष्ठविशेष्यतानिरूपित-तन्निष्ठप्रकारताकत्वे सति अनुभवत्वमिति[२] प्रमालक्षणम् । तात्पर्यमिदं यत् प्रमाणव्यापारानन्तरमुत्पन्ना अर्थात् यस्या: उत्पत्तौ प्रमाणव्यापारस्यापेक्षा भवति एतादृशी बुद्धि: प्रमा इत्युच्यते । तत्प्रमात्मकं ज्ञानं प्रत्यक्षानुमित्युपमितिशाब्दभेदेन चतुर्विधम्, तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदेन । यद्यपि वेदान्तमीमांसाप्रभृतिशास्त्रेषु न्यायशास्त्रस्वीकृतप्रमाणान्यतिरिच्यार्थापत्त्यनुपलब्धिसम्भवचेष्टैतिह्यानि प्रमाणानि स्वीकृतानि । परन्तु नैयायिका: अर्थापत्त्यनुपलब्धिसम्भवप्रमाणानि अनुमाने एवञ्च चेष्टैतिह्ये शब्दप्रमाणेऽन्तर्भाव्य चत्वारि प्रमाणान्यासादितानि ।

चतुर्षु प्रमाणेष्वपि नैयायिका: अनुमानप्रमाणं सर्वाधिकमहत्त्वं निदर्शयन्त: तत्सम्बद्धान् व्याप्तिहेत्वाभास-प्रभृतिविषयान् विशेषरूपेण विविधग्रन्थमाध्यमै: निरवाचयन् । अत्रायं स्वाभाविक: प्रश्न: – यं प्रत्यक्षं प्रमाणमास्तिका: नास्तिका: सर्वे एकस्वरेण स्वीकृतवन्त:, तस्य प्रत्यक्षप्रमाणस्य प्राधान्यमस्वीकार्यानुमानप्रमाणं प्राधान्येन तार्किका: अङ्गीकृतवन्तस्तत्र का युक्ति: ? तत्रेदं समाधानं दीयते यदनुमानप्रमाणं विना न केवलं प्रमेयस्यापितु प्रत्यक्षप्रमाणस्यास्तित्वसिद्धिरपि न भवितुमर्हति, न च तस्य प्रमाणत्वसिद्धिरपि, यतो हि न्यायदर्शने इन्द्रियाणि (घ्राण-रसन-चक्षुष्त्वक् श्रोत्रमनांसि) प्रत्यक्षप्रमाणत्वेन स्वीकृतानि, अत्रेदं तत्त्वं सर्वाणीन्द्रियाणि अतीन्द्रियाण्येव दशायामस्यामनुमानप्रमाणेनैव सिद्धि: सम्भवा, न केवलन्तावत् तेषां प्रमाणत्वसिद्धिरपि प्रमाजननयोग्यतारूपलिङ्गाज्जायमानानुमानेन सम्भवास्ति ।

यद्युच्येत वेदादिशब्दराशिरिति सर्वश्रेष्ठप्रमाणं कथन्न स्वीकार्यम् ? तन्न, यतोहि वेदादिशब्दराशिभि: प्रमोत्पत्तये तच्छब्दानां समुचितार्थै: सह शक्तिग्रहोऽपेक्षित:, परन्तु शक्तिग्रहोपायेषु मुख्योपायो यो व्यवहार:, तदनुमानेनैव शब्दार्थसम्बन्धग्राहको जायते । वस्तुत: सांसारिक: कोऽपि व्यवहारोऽनुमानं विना नास्ति सम्भव:, यतोऽल्पज्ञोऽपि मनुष्य: प्रयोजनं विना कस्मिंश्चिदपि कार्ये न प्रवृत्तो भवति, उद्देश्यं संलक्ष्यैव स्वप्रयोजनसिद्धये कार्यं करोति । उच्यते च – 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते'[३] । किन्तु अमुककार्ये कृतेऽमुकप्रयोजन-सिद्धिरिति ज्ञातव्यम् । अस्य ज्ञानमनुमानप्रमाणेनैव भवितुमर्हति । इदमेव कारणं यन्न्यायशास्त्रेऽनुमानप्रमाणमेव प्रमाणत्वेन सर्वश्रेष्ठस्थानमलङ्करोति । एतादृशं यदनुमानं तस्य प्राणस्वरूपा व्याप्तिर्विद्यते ।

यद्यपि व्याप्तिर्नित्यानौपाधिकी (स्वाभाविकी) साहचर्यसम्बन्धरूपा । अत्र नित्यसम्बन्धो नामाव्यभिचरितसम्बन्ध: । अनेन प्रकारेण वस्तुद्वयस्य साहचर्यसम्बन्धो व्याप्तिरुच्यते, परन्तु द्वयोर्वस्तुनो: एतादृश: सम्बन्ध: स्यात् यत्र कदापि व्यभिचारो न स्यात्, तदैव स सम्बन्धो नित्योऽथवाव्यभिचरित:

स्यात् । यथा धूमाग्न्योः नियतसम्बन्धः स्वीकर्त्तुं शक्यते, यतोहि धूमोऽग्निं विहाय नावतिष्ठते । किन्तु धूमाग्न्योः सम्बन्धः ऐकान्तिको नित्यो नास्ति । समव्याप्तिविषमव्याप्तिभेदेन व्याप्तिर्द्विविधा, तत्रेदं कारणं धूमेन वयं पर्वते वह्न्यनुमानं कर्त्तुं शक्नुमः, परन्तु वह्निना पर्वते धूमानुमानं नहि सम्भवति । यतो हि यत्र यत्र पर्वते चत्वरे गोष्ठे धूमवर्त्तिकादिषु धूमस्तत्र तत्र वह्निः, परन्तु यत्र अयोगोलके विद्यते वह्निः नास्ति तत्र धूमः । एतद्विपरीतेन समव्याप्त्या वयमेकेनान्यस्यान्येन च प्रथमस्यानुमानं (परस्परानुमानं) कर्त्तुं शक्नुमः । यथा – प्रमेयत्वज्ञेयत्वयोः सत्ताजात्योश्च परस्परं समव्याप्तिः स्वीक्रियते । धूमवह्न्योर्विषमव्याप्तौ सत्यामव्यभिचरितोऽर्थात् नित्यसम्बन्धो न भवितुं शक्नोति । यद्यपि धूमवह्न्योर्विद्यते सहचारस्तथापि व्यभिचारमुक्तसहचारो नास्ति । अतो व्यभिचारविरहविशिष्टसहचारो व्याप्तिग्राहको भवति । अनौपाधिकसम्बन्धे द्वयोः पदार्थयोः साहचर्यसम्बन्धोपाधिमुक्ततापेक्षिता । धूमवह्न्योः सम्बन्धः आर्द्रकाष्ठे निर्भरत्वात् आर्द्रेन्धनसंयोगरूपोपाधियुक्तो भवति । उपाधेःलक्षणमस्ति साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति[४] । तदनुकूलार्द्रेन्धनसंयोगः साध्यस्य धूमस्य व्यापकत्वे सति साधनस्य वह्नेरव्यापको भवति; यतोहि यत्र यत्र धूमः, तत्र तत्रार्द्रेन्धनसंयोगः तथा यत्र साधनं वह्निरयोगोलके विद्यते, तत्रार्द्रेन्धनसंयोगो नास्ति । वस्तुतः शुद्धसहचारायोपाधिरनपेक्षिता । अनेन प्रकारेण नित्यानौपाधिकसाहचर्य एव व्याप्तिपरिचायकः । साधने यदि साध्यस्योपर्युक्ता व्याप्तिर्न स्यात्तर्हि साधनेन साध्यसिद्धिः कदापि न सम्भवा, कारणमिदं यत् नैयायिकाचार्याः व्याप्तिनिर्वचनेऽप्रतिमबौद्धिकदक्षतायाः प्रदर्शनं विशेषरूपेण नव्यन्यायग्रन्थ 'तत्त्वचिन्तामणि' माध्यमेनाकुर्वन् ।

मणिग्रन्थे म.म. गङ्गेशपादोऽनुमानस्य लक्षणं 'व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः तत्करणमनुमानम्' इति चकार[५] । अर्थात् पक्षेण सह साध्यनिरूपितव्याप्तिविशिष्टहेतुसम्बन्धज्ञानाज्जायमान-ज्ञानानुमितिः प्रमा, तस्याः करणमनुमानमिति । तात्पर्यमिदं यन्महानसप्रभृतिस्थलेषु (चत्वरगोष्ठयज्ञशालासु) धूमे वह्निसामानाधिकरण्यं (स्वाधिकरणवृत्तित्वं) दृष्ट्वा कश्चिज्जनः धूमे वह्नेर्व्याप्तिज्ञानं करोति, कालान्तरे स एव अरण्यादिनूतनस्थलेषु भ्रमन् पर्वतादिभ्यः निःसृतं धूमं पश्यति तदा तस्मिन् 'पर्वतो धूमवान्' इति पक्षधर्मताज्ञानं सर्वप्रथममुदेति, ततः 'वह्निव्याप्यो धूमः' इति व्याप्तिस्मरणं धूमे वह्निव्याप्तेः पूर्वानुभवजनितसंस्कारस्योद्बुद्धतया भवति । ततश्च (व्याप्तिपक्षधर्मतयोर्ज्ञानस्य पश्चात्) 'वह्निव्याप्यधूमवान् पर्वतः' इति व्याप्तिविशिष्टपक्षधर्मताज्ञानं (परामर्शात्मकज्ञानं) भवति । अर्थात् पक्षेण सह साध्यस्य व्याप्त्या विशिष्टहेतुसम्बन्धज्ञानं जायते, यज्ज्ञानं विशिष्टवैशिष्ट्यावगाहिज्ञानमुच्यते । परामर्शानन्तरं, 'पर्वतो वह्निमान्' इत्यनुमितिर्जायते, अस्याः अनुमितेः असाधारणं कारणं 'वह्निव्याप्यो धूमः' इत्थं व्याप्तिज्ञानमनुमानमुच्यते । निगद्यते च कारिकावल्यामनुमानखण्डे –

''व्यापारस्तु परामर्शः करणं 'व्याप्तिधी'र्भवेत् अनुमायाम्' ।[६] इति ।

अनुमानस्य प्रकृतलक्षणे प्रवेशो विद्यते व्याप्तेरतः स्वाभाविकत्वेन यावन्न व्याप्तिज्ञानं तावन्न व्याप्तिघटितानुमानज्ञानं सम्भवम् । अत एव चिन्तामणिकारः 'ननु अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः'[७] अर्थात् अनुमितेर्हेतुभूतव्याप्ति-ज्ञानस्य विषयभूता 'व्याप्तिः' का ? प्रश्नममुं स्वयमुद्धृत्य न्यायजिज्ञासूनां

बुद्धिवैशद्यनिमित्तं व्याप्तेर्नानाविधल-क्षणानि उद्धृत्य पुन: समीक्षते – 'न तावदव्यभिचरितत्वम्'[८], 'तद्धि न साध्याभाववदवृत्तित्वम्'[९] 'साध्यवद्भिन्न-साध्याभाववदवृत्तित्वम्'[१०] 'साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्'[११], 'सकलसाध्याभाववन्निष्ठा-भावप्रतियोगित्वम्'[१२], 'साध्यवदन्यावृत्तित्वं [१३]वेत्यादिग्रन्थै: 'अव्यभिचरितत्त्वम्' अर्थात् व्यभिचाराभावो व्याप्तिरूपेण स्वीकार्यो न वेति परीक्षणाय पञ्च व्याप्तिलक्षणानि समुपस्थापयत् तत्त्वचिन्तामणिकार: ।

परन्तु एतेषु पञ्चविधव्याप्तिलक्षणेषु केवलान्वयिसाध्यकस्थलेऽव्याप्तिसत्त्वात् पश्चात् व्यधिकरणधर्मावच्छिन्नाभावघटितचतुर्दशलक्षणानि प्रदर्शयामास, किन्तु यदा साधकप्रमाणभूतप्रतीत्या-भावेऽप्रामाणिकत्वात् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव एवामान्योऽस्ति तदा तन्निर्भरत्वात् तद्व्याप्तिलक्षणं कथं मान्यम् ? अतो व्याप्तेर्व्यधिकरणधर्मावच्छिन्नाभावाश्रितत्वात् दीधितिकारकृतव्याप्तिलक्षण- मन्यान्यविद्वत्कृतव्याप्तिलक्षणानि च नैव स्वीकार्याणि ।

**व्याप्तिसिद्धान्तलक्षणम्–**

चिन्तामणिकार: 'अव्यभिचरितत्त्व' प्रतिपाद्योक्तपञ्चविधानि एवञ्च 'व्यधिकरणधर्मावच्छिन्ना -भावाश्रितो' क्तचतुर्दशपूर्वपक्षव्याप्तिलक्षणानि दोषयुक्तानीति मत्वा व्याप्ते: सिद्धान्तलक्षणं प्रतिपादयामास, तदित्थम् - ''प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरिति ।[१४]'' 'पर्वतो वह्निमान् धूमात्' इत्यत्र घटात्मकप्रतियोग्यधिकरणं तथा धूमरूपहेतुसमानाधिकरणं योऽत्यन्ताभाव: तदभावप्रतियोगितावच्छेदकं घटत्वं भवति, तदवच्छिन्नो यो घट: स वह्न्यात्मकसाध्यभेदवान्, तादृशभेदप्रतियोगी यो वह्नि: तत्सामानाधिकरण्यस्य धूमे सत्त्वाल्लक्षणसमन्वय: । एवमलक्ष्यभूत – 'धूमवान् वह्ने:' इत्यत्र धूमात्मकप्रतियोग्यसमानाधिकरणमेवं वह्न्यधिकरणायोगोलकस्थित-धूमात्मकसाध्याभाव: तत्प्रतियोगितावच्छेदकावच्छिन्नो यो धूम: स धूमात्मकसाध्यभिन्नो न भवति । अतस्तत्र लक्षणसमन्वयाभावान्नातिव्याप्ति: ।

**प्रतियोगितानवच्छेदकत्वघटितलक्षणपरिष्कार: –**

मूलोक्तलक्षणात् 'प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकाव-च्छिन्नभिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लभ्यते ।

लक्षणस्यास्य नानाधिकरणसाध्यके 'पर्वतो वह्निमान् धूमात्' इति स्थले भवत्यव्याप्ति: । यतोहि धूमाधिकरणपर्वतादौ विद्यमानो 'तत्तद्व्यक्तिर्नास्ति' इत्याकारकप्रतीतिसाक्षिको योऽभाव:; स अभाव: स्वप्रतियोगी या वह्निव्यक्ति: तदधिकरणे अविद्यमानात् पर्वतीयवह्निव्यक्त्यधिकरणपर्वते महानसीयवह्निव्यक्त्यभावो भविष्यति । अतोऽयं तत्तद्व्यक्तित्वेनैकैकश: सर्वासां वह्निव्यक्तीनामभाव: प्रतियोग्यसमानाधिकरणं भविष्यति हेतुसमानाधिकरणञ्चापि । एतादृशाभावानां प्रतियोगितावच्छेदकावच्छिन्ना: सर्वा: वह्निव्यक्तय: भविष्यन्ति, तद्भिन्न: साध्योऽपि न ।

यद्येवमुच्येत यं वह्निव्यक्त्यभावं स्वीक्रियते, सा वह्निव्यक्त्येव यदधिकरणे विद्यते, तत्र तदभाव: कथम् ? अत्रेदं समाधानं यदेतादृशस्थले चालनीन्यायेन यदधिकरण; वह्निव्यक्तिर्नास्ति हेत्वधिकरणात्

अतः सोऽप्यभावः स्वप्रतियोग्यसमानाधिकरणं सन् धूमात्मकहेतुसमानाधिकरणं भविष्यति । इत्थं सर्वसाध्यव्यक्त्यभावो हेत्वधिकरणे वृत्तित्वात् प्रतियोग्यसमानाधिकरणं भविष्यति । अतः तादृशप्रतियोगितावच्छेदकावच्छिन्न एव समस्तवह्निव्यक्तिर्भविष्यति, तद्भिन्ना नहि कापि साध्यव्यक्तिः । अत उक्तस्थलेऽव्याप्तिः । एतस्मात् कारणात् मूलोक्त-प्रतियोगितावच्छेदकावच्छिन्नस्य (लक्षणया) 'प्रतियोगितावच्छेदकत्वावच्छिन्न' मर्थयन् दीधितिकारः 'प्रतियोगितानवच्छेदकत्व' – घटितलक्षणस्य परिष्कारञ्चकार । इत्थं दीधितिकारानुसारेण लक्षणस्वरूपं –'प्रतियोग्यसमानाधिकरणयद्रूपावच्छिन्नस - मानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिर्भवति । एतादृशलक्षणे कृते उक्तस्थले प्रतियोग्यसमानाधिकरणहेतु-समानाधिकरणरूपो योऽभावः 'तत्तद्व्यक्तिर्नास्ति' इत्येवाभावः स्वीकर्त्तुं शक्यते, न तु 'वह्निर्नास्ती' त्यभावः, तस्य हेतुसमानाधिकरणत्वात् । एवञ्च तादृशप्रतियोगितावच्छेदकं तद्व्यक्तित्वमेव । वह्नित्वं नहि प्रतियोगितावच्छेदकमपितु तादृशप्रतियोगितानवच्छेदकधर्मरूपम् । अतो तदवच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्त्वान्नाव्याप्तिः ।

**महानसीयवह्न्यभावमादायाव्याप्तिवारणनिमित्तलक्षणस्थात्यन्ताभावीयप्रतियोगितायां साध्यतावच्छेदक-तदितरोभयानवच्छिन्नत्वप्रवेशः–**

किन्तु पूर्वोक्त प्रकारेणानवच्छेदकत्वघटितलक्षणं परिष्कृत्यापि 'वह्निमान् धूमात्' इति स्थले अव्याप्तिः पूर्ववदेव; यतो हि पर्वतो वह्निमान् धूमात् इत्यत्र प्रतियोग्यसमानाधिकरणधूमाधिकरणपर्वतवृत्त्यभावपदेन 'धूमाधिकरणे पर्वते महानसीयवह्निर्नास्ति' इत्यभावस्य ग्रहणं भवितुं शक्ष्यते; तादृशाभावीयप्रतियोगितावच्छेदकमहानसीयत्वं वह्नित्वञ्च । इत्थं वह्नित्वमपि लक्षणघटकाभावप्रतियोगितावच्छेदकमेवाभूत्, तद्भिन्नसाध्यतावच्छेद- काभावादव्याप्तिस्तदवस्थैव । एतद्दोषपरिहाराय "प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणा- त्यन्ताभावीयप्रतियोगितायाम्" 'साध्यतावच्छेदक – तदितरोभयानवच्छिन्नत्वं' निवेशनीयम्, तन्निवेशाल्लक्षणस्वरूपमित्थं जायते – 'साध्यतावच्छेदकतादितरोभयानवच्छिन्ना या प्रतियोग्यसमानाधिकरणहेतुस-मानाधिकरणात्यन्ताभावीयप्रतियोगिता तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्य-सामानाधिकरण्यं व्याप्तिरिति । एवञ्च 'पर्वतो वह्निमान् धूमात्' इत्यत्र प्रतियोग्यसमानाधिकरणधूमसमा-नाधिकरणात्यन्ताभावो यो महानसीयवह्न्यभावः तत्प्रतियोगितायां साध्यतावच्छेदकवह्नित्वन्तदितर-महानसीयत्वञ्चैतदुभयावच्छिन्नत्वमेव, उभयानवच्छिन्नत्वाभावादयमभावो न लक्षणघटकोऽपितु घटाभावादिरेव लक्षणघटको भविष्यति, तत्प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं साध्यतावच्छेदकं वह्नित्वम्, तदवच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्त्वाल्लक्षणसमन्वयः ।

**पर्याप्तिघटितलक्षणद्वारा महानसीयवह्न्यभावमादायासफलप्रयासोऽव्याप्तिवारणस्य –**

"पर्वतो वह्निमान् धूमात्" इत्यत्र लक्षणघटकं 'महानसीयवह्न्यभाव' – मादायाव्याप्तिवारणाय पर्याप्तिघटितलक्षणं क्रियते कैश्चित्[१५] । तल्लक्षणस्वरूपमित्थम् – 'प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणा-त्यन्ताभावीयप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणाभिन्नं

यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति स्वीकारे उक्तस्थले 'महानसीयवह्न्यभावस्य' लक्षणघटकत्वान्नाव्याप्ति: यतो हि प्रतियोग्यसमा-नाधिकरणहेतुसमानाधिकरणो यो महानसीयवह्न्यभाव:, तत्प्रतियोगितावच्छेदकतापर्याप्तिर्महानसीयत्वे वह्नित्वे च विद्यते । प्रत्येकस्मिन् अर्थात् वह्नित्वमात्रे महानसीयत्वमात्रे च नास्ति । अत: तादृशाभावीयप्रतियोगि- तावच्छेदकताया: पर्याप्त्यधिकरणं महानसीयत्वं वह्नित्वञ्चोभये भविष्यत:, न तु केवलवह्नित्वरूपसाध्यतावच्छेदकम्; यत: 'प्रत्येकं नोभयम्' इति प्रतीत्या प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नसाध्यतावच्छेदकं वह्नित्वमभूत्, तदवच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्त्वादव्याप्तिवारणं भवति । किन्तु नेदं मतं समीचीनं यतो हि एकैकश: उभयो: पर्याप्तिसम्बन्धेन यदि प्रतियोगितावच्छेदकता न विद्यते तर्हि उभयोरपि पर्याप्तिसम्बन्धेन तदभाव एव, यतो हि प्रत्येकावृत्तिधर्म: समुदायेऽपि न भवतीति सर्वसम्मति: । अत: पर्याप्तिघटितलक्षणेनोक्ताव्याप्तिवारणं न भवितुमर्हति, अपितु प्रतियोग्यसमानाधिकरणहेतुसमानाधि - करणात्यन्ताभावीयप्रतियोगितायां साध्यतावच्छेदक-तादितरोभयानवच्छिन्नत्वं निवेश्य महानसीयवह्न्यभावमादायाव्याप्तिवारणमसङ्गतम् ।

**'मठ: दण्डिमान् दण्डिसंयोगात्' इति स्थलेऽव्याप्तिवारणसम्बन्धिविशेषविचार:[१६] –**

महानसीयवह्न्यभावमादाय भाविन्यव्याप्तिवारणार्थं लक्षणघटकतादृशात्यन्ताभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं निवेश्यापि 'मठ: दण्डिमान् दण्डिसंयोगात्' इत्यत्र दण्डिसंयोगाधिकरणमठे 'तद्दण्डी नास्ती'त्याकारकाभावमादाय भवत्यव्याप्ति:; यतो हि तद्दण्ड्यभावीयप्रतियोगिता केवलतद्दण्डावच्छिन्नैवात: साध्यतावच्छेदको दण्ड: तदितरो घटत्वादिरस्ति, एतदुभयानवच्छिन्ना तद्दण्ड्यभावीयप्रतियोगिताभूत् । तदभावीयप्रतियोगिताया: चालनीन्यायेन प्रतियोगितावच्छेदका: सर्वे दण्डा: अनवच्छेदको नहि साध्यतावच्छेदक: । अतो भवत्यव्याप्ति: । विषयेऽस्मिन् कोऽपि जिज्ञासते यत् 'वह्निमान् धूमात्' निरवच्छिन्नसाध्यतावच्छेदक- ताशालित्वात् शुद्धसाध्यतावच्छेदकस्थलं विद्यते । अत्र 'महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्ती' त्याकारकाभावमादाय भवत्यव्याप्ति:; यतो हि महानसीयवह्निवृत्तित्वविशिष्टजातिमान् महानसीयवह्निरेव, तदभावो धूमाधिकरणपर्वते, तादृशाभावीयप्रतियोगितावच्छेदिका वह्नित्वरूपजाति;, अनवच्छेदको नहि साध्यतावच्छेदक: । एतद्दोषपरिहाराय प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वस्य निवेशनं नितरामपेक्षितम् । निरवच्छिन्नत्वस्य निवेशे 'महानसीयवह्निवृत्तित्व- विशिष्टजातिमान्नास्ती'त्यभावो न लक्षणघटक:; यतो हि एतदभावीयप्रतियोगितावच्छेदकता महानसीयवह्निवृत्तित्व- वैशिष्ट्यजातित्वैतदुभयधर्मावच्छिन्नैव, नास्ति निरवच्छिन्ना । अतो लक्षणघटकतादृशनिरवच्छिन्नावच्छेदक- ताकप्रतियोगिताकाभावमादाय घटाभावो गृह्यते, तादृशाभावीयप्रतियोगितावच्छेदकताया: घटत्वे सत्त्वात्, तदभाववत्साध्यतावच्छेदकं वह्नित्वम्, तदवच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्त्वाल्लक्षणसमन्वय: । इत्थं 'जातिमद्वान् घटत्वात्' इत्याकारकं यद्विशिष्टसाध्यतावच्छेदककस्थलं तत्रापि 'पटसमवेतत्वविशिष्ट-

जातिमान्नास्ती'त्याकारकाभावमादायाव्याप्तिः, तद्वारणाय विशिष्टसाध्यतावच्छेदककस्थले प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकतायां 'साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य' प्रवेशोऽपेक्षितः । जातिमद्वान् घटत्वादित्यत्र या पटसमवेतत्वविशिष्टजातिनिष्ठावच्छेदकता सा साध्यतावच्छेदकतावच्छेदकजातित्वतदितरतत्त्वैतदुभयावच्छिन्नैवास्ति, अनवच्छिन्ना नास्ति । अतो 'जातिमद्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्टजातिमान्नास्ती' त्याकारकाभावमादायाव्याप्तिर्नहि भवितुमर्हति । प्रकारेणानेन शुद्धसाध्यतावच्छेदककस्थलीयलक्षणमित्थं भविष्यति–'प्रतियोग्यसमाना- धिकरणहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितानिरूपिता या निरवच्छिन्नावच्छेदकता तदभाववत् यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । एवं विशिष्टसाध्यतावच्छेदक- कस्थलीयलक्षणमित्थं–''प्रतियोग्यसमानाधिकरणहेतुसमाना - धिकरणात्यन्ताभावीयप्रतियोगितानिरूपिता या साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नावच्छेदकता तदभाववत् यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति' ।

पूर्वोक्तप्रकारेण विशिष्टसाध्यतावच्छेदककस्थले उक्तदोषपरिहाराय साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य लक्षणस्थप्रतियोगितावच्छेदकतायां प्रवेशस्यावश्यकत्वात् यतः 'दण्डिमान् दण्डिसंयोगात्' इदमपि विशिष्टसाध्यतावच्छेदककस्थलमस्त्यतोऽत्रापि प्रतियोगितावच्छेदकतायां तादृशोभयानवच्छिन्नत्वस्य निवेश आवश्यकः । परिस्थित्यामस्यां 'दण्डिमान् दण्डिसंयोगात्' इत्यत्र 'तत्तद्दण्ड्यभाव' मादाय कथमपि नाव्याप्तिस्सम्भवा; कारणमिदं यद् 'तद्दण्डी नास्ति' अथवा 'तद्दण्डवान् नास्ती'त्यत्र एतत्प्रतीतिसिद्धप्रति- योगितावच्छेदकता तत्ताविशिष्टदण्डे एवानुभवसिद्धा । अतः तद्दण्डनिष्ठप्रतियोगितावच्छेदकता तत्त्वे दण्डे चैवोभयत्र विद्यते । एवं प्रकारेण 'तद्दण्डी नास्ति' एतदभावीयप्रतियोगितावच्छेदकता साध्यतावच्छेदकतावच्छेदकदण्ड-त्वतदितरतत्त्वावच्छिन्ना अथवा तत्त्ववैशिष्ट्यैतदुभयानवच्छिन्नैव, नहि साध्यतावच्छेदकतावच्छेदकतदितरोभया-नवच्छिन्ना । अतः 'तद्दण्डवान् नास्ती'–त्यभावमादाय कथमपि नाव्याप्तिः ।

**दण्डिसाध्यकस्थलविषयकाव्याप्तिवारणसम्बन्धे दीधितिकारमतम् –**

यद्येवमुच्येत यदि 'तद्दण्डी नास्ती'-त्यभावमादाय 'दण्डिमान् दण्डिसंयोगात्' इति स्थले भवत्यव्याप्तिस्तर्हि तद्वारणाय परम्परासम्बन्धेन 'दण्डत्वं' साध्यतावच्छेदकं स्वीकुर्यात् । तद्दण्डत्वं 'स्वाश्रयाश्रयत्वरूपपरम्परास-म्बन्धेन' दण्डिनि तिष्ठेत्; यतो हि स्वपदग्राह्यदण्डत्वं, तदाश्रयी दण्डः, तदाश्रयता दण्डिनि, इत्थं दण्डत्वरूपसाध्यतावच्छेदकोऽपि दण्डिनि तिष्ठति । एवङ्कृते 'दण्डिमान् दण्डिसंयोगात्' इत्यत्र कथमपि नाव्याप्तिस्सम्भवा । अत्रेदं समाधानं यत् 'प्रमेयदण्डवान् नास्ती' – त्यत्र यथा प्रमेयत्वविशिष्टदण्डं प्रतियोगिता-वच्छेदकमस्वीकृत्य शुद्धदण्डमेव प्रतियोगितावच्छेदकत्वेनाङ्गीक्रियते, तथा 'तद्दण्डवान् नास्ती'–त्यत्रापि तत्वोपलक्षितदण्डमेव 'तत्तद्दण्डी नास्ती'–त्याकारकाभावस्य प्रतियोगितावच्छेदकः स्वीक्रियते । अतः 'तत्त्वं' प्रतियोगितावच्छेदकतायाः अवच्छेदकन्नभविष्यत्यपितु 'शुद्धदण्डत्वमेव' प्रतियोगितावच्छेदकतायाः अवच्छेदको भविष्यति, न तु तत्वविशिष्टदण्डः । एवं प्रकारेण 'तत्तद्दण्ड्यभावः'

लक्षणघटकोऽभूत् । तद्वारणाय दीधितिकार: 'दण्ड्यादौ साध्ये परम्परासम्बद्धं दण्डत्वमेव साध्यतावच्छेदकमतो नाव्याप्ति:' इति ग्रन्थमुद्भावयामास[१७] ।

यदि 'तद्दण्डवान् नास्ती'– ति प्रतीत्या तत्ताविशिष्टदण्डमवच्छेदकं स्वीक्रियते तर्हि 'तद्दण्ड्यभाव:' लक्षणघटको न भविष्यति । अतो नाव्याप्ति: । किन्तु नेदमुचितम्, यतो हि 'तद्दण्डी नास्ती'ति प्रतीत्या 'तत्ताविशिष्ट-दण्डस्य' 'अवच्छेदकताऽ'ङ्गीक्रियेत तर्हि तत्प्रकारेण प्रमेयदण्डवान् नास्ती'त्यादिस्थलेऽपि 'प्रमेयत्ववि-शिष्टदण्डावच्छेदकत्वापत्ति'र्भविष्यति । अतो यथा 'प्रमेयदण्डवान् नास्ती'त्यत्र 'प्रमेयत्वोपलक्षितदण्ड:' प्रतियोगितावच्छेदकत्वेनाङ्गीक्रियते, तथा 'तद्दण्डवान् नास्तीति' प्रतीत्या 'तत्वोपलक्षितदण्ड' एवावच्छेदको न तु तत्ताविशिष्टदण्ड इति ।

**दण्डिसाध्यकस्थलविषयकाव्याप्तिवारणाय मतन्नव्यनैयायिकानाम्[१८] –**

'दण्डिमान् दण्डिसंयोगात्' इत्यत्र दीधितिकार: परम्परासम्बन्धेन दण्डत्वं साध्यतावच्छेदकं मत्वाऽव्याप्तिं वारयामास, परन्तु नव्या: केचन तद्भिन्नप्रकारमनुसृत्याव्याप्तिवारणञ्चक्रु: । तेषामाशयोऽयं यत् 'मठ: दण्डिमान् दण्डिसंयोगात्' इत्यत्र दण्डनिष्ठा या प्रकारता सा संयोगसम्बन्धावच्छिन्ना नास्ति अर्थात् दण्डी नहि साध्य: संयोगसम्बन्धेन किन्तु 'स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसम्बन्धेन साध्यो बोध्य: । अत्र स्वपदग्राह्यो भवति दण्डी, तद्वृत्तिर्यो पुरुषत्वतदवच्छिन्नयावद्दण्डी, तदधिकरणता मठादिरूपपक्षेऽस्ति, तथा चोक्तलक्षणे समवायसम्बन्धेन वह्न्यभावमादायाव्याप्तिवारणाय प्रतियोगितायां 'साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व' निवेशस्यावश्यकत्वात् 'साध्यतावच्छेदकस्ववृत्तिपुरुषत्वा - वच्छिन्नाधिकरणतासम्बन्धेन 'तद्दण्डी नास्ती'त्यभावो नहि हेत्वधिकरणवृत्तिरूपोऽपितु घटपटाद्यभाव:, तत्प्रतियोगितावच्छेदकं घटत्वपटत्वादि:, अनवच्छेदक: साध्यतावच्छेदको दण्ड:, तदवच्छिन्नदण्डिसामानाधिकरण्यस्य दण्डिसंयोगे सत्त्वाल्लक्षणसमन्वय: ।

**मूललक्षणस्थ-'यत्समानाधिकरण'-पदस्य 'यद्रूपविशिष्टसमानाधिकरणा'र्थप्रयोजनम्[१९]–**

मूललक्षणे यत् 'यत्समानाधिकरण'–पदन्तत् 'यद्रूपविशिष्टसमानाधिकरणार्थकम्' इति बोध्यम् । यदि यत्समानाधिकरणस्य यद्रूपविशिष्टसमानाधिकरणमित्यर्थो न स्यात् तर्हि 'इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्' इति स्थलेऽव्याप्ति: यतो हि 'विशिष्टं शुद्धान्नातिरिच्यते' इति नियमानुरोधात् विशिष्ट-शुद्धसत्तयोरैक्याद्धेतुपदेन सत्ताग्रहणम्, तदधिकरणगुणस्थो योऽभाव: स द्रव्यत्वाभाव:, तत्प्रतियोगितावच्छेदकं द्रव्यत्वम्, अनवच्छेदकं नहि साध्यतावच्छेदकम् । अतोऽव्याप्ति: । यदा यत्समानाधिकरणस्यार्थ: यद्रूपविशिष्टसमानाधिकरणमिति तर्हि तदर्थ एवमस्ति-'हेतुतावच्छेदकावच्छिन्नाधेयता - निरूपिताधिकरणतावद्वृत्तित्वम्' इति । एवं प्रकारेण कृतेऽर्थे यद्रूपपदेन गृहीतं यद्विशिष्टसत्तात्वम्, तदवच्छिन्नाधेयतानिरूपिताधिकरणतावदेव जातं द्रव्यम्, यद्यपि गुणोऽपि विशिष्टसत्ताधिकरण:; परन्तु विशिष्टसत्तात्वेन विशिष्टसत्ता द्रव्ये स्थास्यति । अतो विशिष्टसत्ता-त्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्द्रव्यमेव, तद्वृत्यभावो न द्रव्यत्वाभाव:, अपितु घटाद्यभाव एव, तत्प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं साध्यतावच्छेदकं द्रव्यत्वत्वमेव । अतो नाव्याप्ति: ।

**निरूपकतावच्छेदकाधिकरणतावच्छेदकयोरैक्येनैक्यव्यवहारो व्याप्तौ[२०] –**

यद्येवमाशङ्क्ते – साध्यसामानाधिकरण्यरूपा व्याप्तिः, साध्याधिकरणवृत्तित्त्वरूपा, सा वृत्तिता प्रत्येकस्मिन् धूमे विभिन्ना । दशायामस्यां धूमे वह्निनिरूपितैका व्याप्तिरिति कथमुच्येत ? अत्रेदं समाधानं यत् तादृशनिरूपकतावच्छेदको यः साध्यतावच्छेदकः, तथा तादृशाधिकरणतावच्छेदको यो हेतुतावच्छेदकः, स यत्रैक्यमादधाति तत्रैक्यव्यवहारो व्याप्तौ क्रियते; यथा – 'पर्वतो वह्निमान् धूमात्' इत्यत्र तत्तद्धूमे विद्यमानं यद् वह्न्यधिकरणनिरूपितवृत्तित्वं तद्भिन्नत्वेऽपि वह्नित्वधूमत्वैक्यादैक्यव्यवहारो भवति व्याप्तौ । वस्तुतः धूमव्यापकवह्निसामानाधिकरण्यं यदि स्वीक्रियते व्याप्तिस्तर्हि रासभादावपि गमिष्यति । अतः रासभादौ व्याप्तिर्न गच्छेदेतदर्थं 'धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यं' व्याप्तिः अथवा 'धूमव्यापकवह्निसामानाधिकरण्यव-न्निष्ठधूमत्वमि'–ति व्याप्तिरङ्गीक्रियते । अत्र या प्रथमा व्याप्तिः 'धूमनिष्ठधूमव्यापकवह्निसामानाधिकरण्यस्वरूपा' सा विभिन्ना । द्वितीया च ''धूमव्यापकवह्निसामानाधिकरण्यवन्निष्ठधूमत्वस्वरूपा'' सा हेतुतावच्छेदकधूम- त्वस्यैक्यादभिन्ना ।

**लक्षणघटकाभावे 'प्रतियोग्यसामानाधिकरण्य'–विशेषणप्रयोजनम्[२१] —**

मूलोक्तलक्षणघटकाभावे 'प्रतियोग्यसामानाधिकरण्यस्य' अप्रवेशात् 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यत्राव्याप्तिः । अत्र हेतुरेतद्वृक्षत्वं तदधिकरणो यः एतद्वृक्षः, तत्र कपिसंयोगस्याव्याप्यवृत्तित्वाद् वृक्षे शाखावच्छेदेन कपिसंयोगः स्थितः, तथा मूलावच्छेदेन कपिसंयोगाभावोऽपि उपलप्स्यते । इत्थमेतद्वृक्ष-त्वाधिकरणैतद्वृक्षवृत्त्यभावपदेन मूलावच्छेदेन कपिसंयोगाभावोऽपि लक्षणघटकः, तादृशाभावीयप्रतियोगिताव-च्छेदकमेव कपिसंयोगत्वम्, साध्यतावच्छेदको नानवच्छेदकः ।अतोऽव्याप्तिः । एतद्दोषवारणाय लक्षणघटकाभावे 'प्रतियोग्यसामानाधिकरण्य'–मिति विशेषणम् । प्रतियोगिव्यधिकरणत्वाभावे प्रदाने विशेषणे उक्तस्थले कपिसंयोगाभावो नहि लक्षणघटकः, यतो हि कपिसंयोगाभावप्रतियोगी यः कपिसंयोगः तदधिकरणो यः एतद्वृक्षः तत्र विद्यते कपिसंयोगाभाववृत्तिः । अतोऽत्र कपिसंयोगाभावः स्वप्रतियोगिसमानाधिकरणोऽभूत्, नासमानाधिकरणः। एवं प्रकारेण लक्षणघटक–'प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभाव'– पदेन घटाभावो गृहीतः, तत्प्रतियोगितावच्छेदको घटादिः, अनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वं, तदवच्छिन्नसाध्यसा-मानाधिकरण्यस्यैतद्वृक्षत्वे सत्त्वाल्लक्षणसमन्वयः ।

**मतान्तरेण 'प्रतियोगिव्यधिकरण'–पदोपादानप्रयोजनम्[२२]**

केचनामनन्ति यत् 'इदं संयोगी द्रव्यत्वात्' इति स्थले द्रव्यत्वाधिकरणद्रव्यवृत्त्यभावमादाय संयोगाभावो गृह्यते, तादृशाभावप्रतियोगितावच्छेदक एव साध्यतावच्छेदकः, अनवच्छेदको नहि साध्यतावच्छेदकः । अतोऽ- व्याप्तिः । एतद्दोषपरिहाराय मूलग्रन्थे हेतुसमानाधिकरणाभावे 'प्रतियोग्यसमानाधिकरण'–मिति दीयते विशेषणम् । प्रतियोग्यसामानाधिकरण्याभावे विशेषणत्वेनोपादाने कृते 'संयोगी द्रव्यत्वात्' इत्यत्राव्याप्तिवारणं भविष्यति; यतो हि संयोगस्याव्याप्यवृत्तित्वात् संयोगाभावोऽपि अव्याप्यवृत्तिर्भविष्यति, कारणेनानेन संयोगाभावस्य प्रतियोगी यः संयोगः, तदधिकरणद्रव्ये संयोगाभाववृत्तिः

सञ्जाता । अत: संयोगाभावो नहि प्रतियोग्यसमानाधिकरण: । अपितु प्रतियोग्यसमानाधिकरणो द्रव्यत्वसमानाधिकरणाभावो घटाद्यभाव:, तत्प्रतियोगितावच्छेदकघटत्वम्, अनवच्छेदकसाध्यतावच्छेदकसंयोगत्वमभूत्, तदवच्छिन्नसाध्य–(संयोग) सामानाधिकरण्यस्य हेतौ द्रव्यत्वे सत्त्वादव्याप्तिवारणं क्रियते इति वदन्ति केचन । तदाशयोऽयं यत् कोऽपि संयोग: तत्तदवयवावच्छेदेन एव तिष्ठेत्, वृक्षावयवो यो शाखादि:, तदवच्छेदेन संयोगस्य सत्त्वादपि वृक्षत्वावच्छिन्नो न कोऽपि संयोग: । अत: संयोगसामान्याभावस्य वृक्षे सत्त्वान्न कोऽपि विरोध: ।

अत्रायं प्रश्न: यदि द्रव्ये संयोगसामान्याभावो विद्यते तर्हि तस्य प्रात्यक्षं भवेत् ? किन्त्वेतन्न वक्तुं शक्यते; यतो हि योग्यप्रतियोगिकाभावस्यैव प्रात्यक्षम् । यथा – घटाभाव:, पटाभाव: । अयोग्यप्रतियोगिकाभावस्य नहि प्रात्यक्षम् । अतो नहि पिशाचाभावस्य प्रात्यक्षम्, यत: पिशाचाभावस्य प्रतियोगी पिशाचोऽतीन्द्रिय: । यद्युच्येत प्रतियोगितावच्छेदकविशिष्टयत्किञ्चित्प्रतियोगिकाभावस्य प्रात्यक्षन्तर्हि समस्तप्रतियोगियोग्यतानपेक्षिता, अन्यथातीतानागतघटस्यातीन्द्रियात् सकलघटो नेन्द्रियग्राह्यो भवितुमर्हति ? अतो घटाभावप्रात्यक्षन्न भवेत्, तथा च यत्किञ्चित्संयोगो योग्योऽतो वृक्षे संयोगाभावस्य प्रात्यक्षन्न भवेत् ? एतत्समाधाने उच्यते दीधितिग्रन्थे[२३]–तदभावप्रत्यक्षे प्रतियोगिज्ञानमपि प्रतिबन्धकमतो वृक्षे संयोगाभावस्य न भवितुमर्हति प्रात्यक्षम् ।

एतन्न वक्तुं समीचीनं यत् द्रव्ये संयोगसामान्याभावसत्तायां नास्ति किमपि प्रामाण्यम्, यतोहि सर्वविभुपदार्थ: सर्वमूर्तद्रव्यसंयोगी भवति, दशायामस्यां कोऽपि विभुद्रव्यो गगनादिसंयोगाभाववन्न भवेत् । यदि द्रव्ये संयोगसामान्याभाव: स्यात्तर्हि यथा भूतलस्थितघटाभावस्य प्रात्यक्षं सर्वजनानुभवसिद्धम्, तथा यदि द्रव्ये संयोगसामान्याभावोऽभविष्यत् तर्हि तत्प्रात्यक्षमपि अभविष्यत्, तन्नानुभूयते, तथा च यावद्द्रव्यवृत्तित्वसंयोगे सर्वमतसिद्ध:, अत: कथमपि केनापि प्रमाणेन द्रव्ये संयोगसामान्याभावस्य सिद्धिर्न भवितुमर्हति ।

## द्रव्ये संयोगाभावसिद्धि:

यद्यपि प्रत्यक्षप्रमाणेन न भवति सुपुष्टसिद्धि: संयोगसामान्याभावस्य, तथापि द्रव्ये संयोगसामान्याभावो नास्तीति न वक्तुं शक्यते; यतो हि यद्वस्तु प्रत्यक्षप्रमाणेन न सिद्धन्तद्वस्तुसाधनं प्रमाणान्तरगम्यं भवति । यथा – पर्वते वह्नेरसति साक्षात्कारेऽपि धूमहेतुनानुमानप्रमाणेन वह्ने: सिद्धि: सर्वसम्मता, तथैव द्रव्ये संयोगसामान्याभाव-स्यानुमानप्रमाणेन सिद्धि: सम्भवा, तदनुमानप्रमाणं व्याप्तिस्वरूपं जायतेऽत: संयोगसामान्याभावस्य द्रव्ये सिद्धये दीधितिकारो व्याप्तिं प्रदर्शयति[२४]– ''यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान्'' इति । यस्य वस्तुनो विशेषस्य यावदभावो यत्र विद्यते तत्रावश्यन्तस्य सामान्याभाव: । सर्वमतसिद्धमिदं यत् विशेषाभावस्य कूट: सामान्याभावसाधको भवति । अत: संयोगीययावद्विशेषाभावो वृक्षेऽस्त्यर्थात् य: तत्तत्संयोगो वृक्षे विद्यमान: तत्तत्संयोगस्य यावदभावो वृक्षे विद्यतेऽत: संयोगसामान्याभावोऽपि भविष्यति । यथा–यस्मिन् कक्षे नीलरक्तशुक्लादिभेदेन विभिन्नो यो घट: तत्र प्रत्येकस्याभावो यस्मिन् कक्षे तत्र घटसामान्याभावसत्तेति सर्वजनानुभव:, अत:

तदीययावद्विशेषाभावहेतुना तत्सामान्याभावसिद्धि: वृक्षे, एवं कथनं नोचितम्; यतो हि एतद्व्याप्तिघटकहेतु – साध्यौ उभौ यत्तत्पदघटितौ । अयं यत्पदार्थ: तत्पदार्थश्चाननुगत:, अतो न तद्घटितानुगता व्याप्ति: भविष्यति । यदि प्राचीनमतेन बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नत्वेन यत्पदार्थ – तत्पदार्थानुगम: स्वीक्रियेत तर्ह्यपि सोपाधिकादनुमानं व्यभिचरितम् । अस्यां व्याप्तौ एकावच्छेदेन यावद्विशेषाभाववत्त्वोपाधिर्विद्यते । तल्लक्षणमित्थमुपाधे: – "साध्यव्यापकत्वे सति साधनाव्यापकत्वम्"[२५] इति । प्रकृतौ साध्यतत्पदबोध्यो य: संयोग: तत्सामान्याभाव: स गुणादौ सिद्ध:, तत्रैकावच्छेदेन यावद्विशेषाभाववत्त्वरूपोपाधिर्विद्यते । अत: तत्र स्थितं साध्यव्यापकत्वम्, एवं तदीययावद्विशेषाभावो द्रव्ये तत्रैकावच्छेदेन संयोगयावद्विशेषाभाववत्त्वरूपोपाधिर्न, अत: साधनाव्यापकत्वमपि उपाधाववस्थितम् । इत्थं साध्यव्यापकत्वविशिष्टसाधनाव्यापकत्ववत्वसत्त्वात् एकावच्छेदेन यावद्विशेषाभाववत्त्वोपाधिरभूत् । "तदीययावद्विशेषाभाववत्त्वहेतो:" सोपाधिकत्वात् व्यभिचारोऽर्थात् व्याप्यत्वासिद्ध: । अतो व्याप्तिरियमथवा तद्विषयकज्ञानं द्रव्ये नहि संयोगसामान्याभावसाधकं भवितुमर्हति ।

**नव्यनैयायिकमतेन लक्षणघटकाभावे 'प्रतियोगिव्यधिकरणत्व' – विशेषणोपादानप्रयोजनम् –**

केवलं 'कपिसंयोगी एतद्वृक्षत्वात्' अथवा 'संयोगी द्रव्यत्वात्' इत्यत्रैवाव्याप्तिवारणाय प्रतियोगिव्यधिकरणोपादानमित्येतत्कथनं न प्रतिभात्युचितम्, अपितु एतदतिरिक्तप्रसिद्धस्थलेष्वप्यव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणत्वाभावे विशेषणप्रदानमावश्यकमिति वदन्ति नव्या: । इदमेव 'नवीनास्तु' इत्यादिग्रन्थेन[२६] प्रतिपादितम् । यद्याभावे प्रतियोगिव्यधिकरणत्वविशेषणोपादानं न स्यात्तर्हि 'गुणवान् द्रव्यत्वात्' इत्यत्राव्याप्ति: । द्रव्यत्वाधिकरणो यो घटादि: तत्र 'उत्पत्तिकालावच्छेदेन गुणो नास्ती'त्याकारकाभावोऽवस्थित:, तादृशाभावीय-प्रतियोगितावच्छेदकमेव गुणत्वम्, साध्यतावच्छेदको नानवच्छेदकोऽतोऽव्याप्ति: ।

तथैव 'संयोगी द्रव्यत्वात्' इत्यत्रापि संयोगस्यानित्यत्वाद्धेत्वधिकरणकाले प्रलयावच्छेदेन संयोगसामान्याभाव: स्थित:, तत्प्रतियोगितावच्छेदकमेव संयोगत्वम् । तथैव 'पर्वतो वह्निमान् धूमात्' इत्यत्रापि धूमाधिकरणपर्वते विद्यमानोऽभाव: शिखरावच्छेदेन वह्न्यभाव:; यतो हि "इह पर्वते नितम्बे हुताशनो न शिखरे" इत्याकारिका प्रतीतिर्भवति, अनया सिद्धं यत् पर्वते नितम्बावच्छेदेन वह्निरस्ति शिखरावच्छेदेन नास्ति । अत: धूमाधिकरणपर्वते शिखरावच्छेदेन वह्न्यभावो विद्यते, तत्प्रतियोगितावच्छेदकमेव वह्नित्वम्, अतोऽव्याप्ति: ।

सर्वद्रव्यं संयोगसम्बन्धेनाव्याप्यवृत्तिर्भवति; यतो हि वृत्तिस्वरूपो यो सम्बन्ध:, स यदि अव्याप्यवृत्ति: तर्हि तत्सम्बन्धेन विद्यमानद्रव्यमपि अव्याप्यवृत्तिरेव । अतो वह्ने: य: संयोगसम्बन्ध: स: सर्वसम्मताव्याप्यवृत्तिस्तर्हि तत्सम्बन्धेनावस्थितो वह्निर्न कथमपि व्याप्यवृत्ति: । प्रकारेणानेन 'समयो घटवान् एतत्कालत्वात्' इति स्थलेऽपि असति प्रतियोगिवैयधिकरण्योपादानेऽव्याप्तिर्भविष्यति; एतत्कालत्वाधिकरणो य एतत्काल:, तस्मिन् काले कपालावच्छेदेन घटस्थितेऽपि तत्त्वावच्छेदेन घटाभाव:, तादृशाभावप्रतियोगितावच्छेदकमेव घटत्वम् । एवं प्रकारेण 'कपालं घटवत् घटध्वंसात्' इति स्थले घटध्वंसाधिकरणो य: कपाल: तस्मिन्

घटानधिकरणघटनाशकालावच्छेदेन घटाभावः, तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकघटत्वम्, अतोऽव्याप्तिः । एवं प्रकारेण तत्तत्पूर्वोक्तसाध्यकाव्याप्तिवारणाय 'प्रतियोग्यसमानाधिकरणत्वा'भावे प्रतियोगिव्यधिकरणत्वविशेषणोपादानमावश्यकमिति ।

**अव्याप्यवृत्तिसाध्यकस्थलीयदोषवारणायैव लक्षणस्थाभावे 'प्रतियोगिवैयधिकरण्यो'—पादानं तत् परिष्कारश्च—**

या सर्वथा व्याप्यवृत्तिर्भवति यथा ''सत्तावान् जातेः'' इत्यत्र समवायसम्बन्धेन यत्र सत्ता तत्र न सत्ताभावः । एतादृशं यद्व्याप्यवृत्तिसाध्यकस्थलं तत्र 'प्रतियोगिव्यधिकरणो' पादानं नहि आवश्यकम्, किन्तु यदव्याप्यवृत्तिसाध्यकस्थलं 'वह्निमान् धूमात्' इत्यादि, तत्र 'प्रतियोगिवैयधिकरण्यो' पादानमावश्यकम् । इत्थं साध्यसाधनभेदेन साध्यनिरूपिता व्याप्तिरपि विभिन्ना भवति । अनेनाशयेनैव दीधितिकार उवाच ''साध्यसाधनभेदेन व्याप्तिभेदात्[२७] इति ।

अव्याप्यवृत्तिसाध्यकस्थलेऽभावे यः 'प्रतियोग्यसामानाधिकरण्य' इति निविष्टः, स 'प्रतियोगितावच्छेद-कावच्छिन्नासामानाधिकरण्यं भवेत् । तस्यार्थः 'प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावद-वृत्तित्व'—रूपमस्ति । एवमकृते 'गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः' तथा 'भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्' इत्यात्रातिव्याप्तिः स्यात् । प्रथमस्थले जातिस्वरूपो हेत्वाधिकरणो गुणादिः तद्वृत्तिर्योऽभावः 'गुणकर्मान्यत्ववि-शिष्टसत्ता नास्तीत्याकारकाभावः, तादृशाभावप्रतियोगिता गुणकर्मान्यत्वविशिष्टसत्तायां, तदाश्रयः सत्तापि, यतो हि विशिष्टसत्ता शुद्धसत्ता चाभिन्ना, तादृशसत्ताधिकरणो यो गुणः तद्वृत्तिरेव विशिष्टसत्ताभावः, नहि प्रतियोगिताश्रया-धिकरणावृत्तिः । तथैव 'भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्' इत्यत्रापि मूर्तत्वाधिकरणं यन्मनः तत्र विद्यमानो यो भूतत्वमूर्तत्वोभयाभावः, तत्प्रतियोगिताश्रयं यन्मूर्तत्वं तदधिकरणं यन्मनः तस्मिन् भूतत्वमूर्तत्वोभयाभावो विद्यते। अतः उक्तस्थलद्वये तत्तद्साध्याभावप्रतियोगिव्यधिकरणं न भवति । अतोऽन्याभावमादायात्रातिव्याप्तिः । यदा प्रतियोग्यसामानाधिकरण्यार्थः 'प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावदवृत्तित्वं' स्यात्तर्हि 'सत्तावान् जाते'रित्यत्र विद्यमानो यो गुणकर्मान्यत्वविशिष्टसत्ताभावः तत्प्रतियोगितावच्छेदकं यद्गुणकर्मान्य- त्ववैशिष्ट्यं तथा सत्तात्वं, तदुभयधर्मावच्छिन्नाधेयतानिरूपिताधिकरणता केवलं द्रव्ये, तस्मिन् गुणकर्मान्यत्वविशिष्ट- सत्ताभावावृत्तिः भवति; यद्यपि विशिष्टसत्ताशुद्धसत्तयोरभेदस्तथापि विशिष्टसत्तात्वावच्छिन्नाधेयता तथा शुद्धसत्तात्वावच्छिन्नाधेयता विभिन्ना भवति ।अतो विशिष्टसत्ताभावोऽपि स्वप्रतियोगितावच्छेदकीभूतसत्तात्वा-वच्छिन्नाधेयतानिरूपिताधिकरणतावद्द्रव्ये अवृत्तित्वात् प्रतियोगिव्यधिकरणाभावपदेन लक्षणघटको जातः । अतो नातिव्याप्तिः ।

**सार्वभौममतेन 'प्रतियोग्यसामानाधिकरण्य'पदार्थविचारः—**

सार्वभौममतेन 'प्रतियोग्यसामानाधिकरण्यस्य' 'प्रतियोगित्वाश्रयाधिकरणावृत्तित्व'—मेवार्थः, तस्य 'प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्य' इत्यर्थकरणप्रयोजनं न प्रतिभाति, प्रतियोगित्वाश्रयाधिक-

रणावृत्तित्वमित्यर्थकरणेऽपि 'विशिष्टसत्तावान् जाते:' इत्यत्र नातिव्याप्तिसम्भावना; यतो हि विशिष्टसत्ता शुद्धसत्ताया: भिन्नाऽस्ति । अतो विशिष्टसत्ताभावीयप्रतियोगिताश्रयो विशिष्टसत्तैव, तदधिकरणद्रव्ये विशिष्टसत्ताभावावृत्तिरस्ति, तथा हेत्वधिकरणगुणे वृत्ति:, अतोऽत्र विशिष्टसत्ताभावोऽपि लक्षणघटकोऽभूत्, तादृशाभावप्रतियोगितावच्छेदक एव विशिष्टसत्तात्वस्वरूपसाध्यतावच्छेदक: सञ्जात: । अत उक्तस्थले नातिव्याप्ति: ।

इत्थं 'भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्' इत्यत्रापि भूतत्वमूर्तत्वोभयाभावप्रतियोगी यो भूतत्वमूर्तत्वोभय: सोऽपि भूतत्वविशिष्टमूर्तत्वस्वरूपात् केवलमूर्तत्वाद्भिन्न:, अत: भूतत्वमूर्तत्वोभयाभावीयप्रतियोगिताया: आश्रयं यत् भूतत्वविशिष्टमूर्तत्वं तत्केवलमूर्तत्वभिन्नमभूत् । अतो भूतत्वविशिष्टमूर्तत्वात्मकप्रतियोग्यधिकरणं यत् पृथिव्यादिचतुष्टयं, तत्र भूतत्वमूर्तत्वोभयाभावस्यावृत्तितया तथा मूर्तत्वाधिकरणमनसि वृत्तितया भूतत्वमूर्तत्वो-भयाभावो लक्षणघटक: सञ्जात:, तत्प्रतियोगितावच्छेदक एव भूतत्वमूर्तत्वोभयत्वस्वरूपसाध्यतावच्छेदक: ।अतोऽत्रापि नातिव्याप्ति: ।इत्थं 'प्रतियोग्यसामानाधिकरण्यस्य' 'प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्य' इत्यर्थ:स्वीकरणं व्यर्थं स्यादित्याशयेनोच्यते[२८] दीधितिग्रन्थे यदुभयत्वपदार्थ: ''एकविशिष्टापरत्व''–स्वरूपोऽर्थात् 'भूतत्वमूर्तत्वोभयत्व – भूतत्वविशिष्टमूर्तत्व'–रूपोऽस्ति, अपि च केवलभिन्नो विशिष्टोऽतो भूतत्वमूर्तत्वोभयाभावो मनसि सहजत: अर्थात् ''प्रतियोग्यसामानाधिकरण्यस्य'' 'प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम्' इत्यर्थकरणं विनैव स्यात् प्रतियोगिव्यधिकरणम् । अतो भूतत्वमूर्तत्वोभयसाध्यकस्थलेऽथवा गुणकर्मान्यत्वविशिष्टसाध्यकस्थलेऽतिव्याप्तिर्न स्यात् । एवं वदन्ति सार्वभौममतावलम्बिन: । किन्तु नेदं मतं समीचीनं, यतोहि भूतत्वमूर्तत्वोभयादिको भूतत्वविशिष्टमूर्तत्वस्वरूपो नापितु तदतिरिक्त:, उभयत्वं विशिष्टत्वञ्च भिन्नमस्ति, अथवा भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावस्तथा भूतत्वविशिष्टमूर्तत्वत्वावच्छिन्नप्रतियोगिताकाभावो भिन्नो भिन्न:; यतो हि घटत्वविशिष्टपटत्वाप्रसिद्ध्या न भवति घटत्वविशिष्टपटत्वाभावप्रतीति:; परन्तु तत्र घटत्वपटत्वोभयाभावप्रतीतिरेव भवति । अतो घटत्वपटत्वोभयाभावे घटत्वविशिष्टपटत्वाभावातिरिक्तो भवतीति प्रत्यक्षात्मकानुभवात् सिद्ध: ।

यद्येवमुच्येत ''भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्'' इत्यत्र उभयत्वाधिकरणं यत् मूर्तत्वं तन्मनसि विद्यते अत: स्थलमिदं व्याप्तिलक्षणस्य लक्ष्यमेव, तन्न वक्तुं शक्यते; यतोहि उभयत्वाधिकरणमूर्तत्वस्य मनसि स्थितेऽपि तस्मिन् मनसि भूतत्वमूर्तत्वोभयत्वेन रूपेण मूर्तत्वं नहि विद्यते ।अत: ''भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्'' इत्यत्र एतत्स्थलीयमूर्तत्वहेतुर्न कथमपि सद्धेतु: । इयं प्रतीतिरपि भवति – 'अत्र मनसि न भूतत्वमूर्तत्वोभयम्' । इत्थं हेत्वधिकरणमनो नहि भूतत्वमूर्तत्वोभयरूपसाध्याधिकरणम् । अतो मूर्तत्वहेतुर्व्यभिचारी ।

**प्रतियोग्यसामानाधिकरण्यपदार्थघटकात्यन्तपदोपादानप्रयोजनम् –**

अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगिता - नवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्ति:' लक्षणेऽस्मिन्

''प्रतियोगितावच्छेदकावच्छिन्ना-सामानाधिकरण्य''– रूपं यत् ''प्रतियोगिवैयधिकरण्यं'' तद्घटकीभूता या प्रतियोगिता तत्र ''अत्यन्ताभावत्वनिरूपकत्व''–दानमावश्यकम् । तथा ''अत्यन्ताभावत्वनिरूपकप्रतियोगितानवच्छेदकम्'' इत्यत्र लक्षणघटकप्रतियोगितायामपि ''अत्यन्ताभावत्वनिरूपकत्वं'' प्रविष्टमस्ति । यदि प्रतियोगिवैयधिकरण्यघटकी-भूता या प्रतियोगिता तस्यामत्यन्ताभावत्वनिरूपकत्वाप्रवेशे ''वह्निमान् धूमात्'' इत्यादिस्थलेषु सर्वत्र ''प्रतियोगिवैयधिकरण्यं' दुर्लभम्; यतो हि धूमात्मकहेत्वधिकरणपर्वतादौ विद्यमानो यो घटाभावादि: तन्मध्ये यो घटाभाव: तदधिकरणे विद्यमानो यो पटाभावान्तर: तद्भेदो घटाभावेऽस्ति । तत्पटाभावभेदाधिकरणो घटाभाव:, तथा अभावाधिकरणाभावोऽधिकरणभिन्नो नहि भवति, अतो घटाभावे विद्यमानो य: पटाभावभेद: स न घटाभावातिरिक्त: । एवं प्रकारेण यथा घटाभावप्रतियोगी घट: तथैव घटाभावप्रतियोगी पटाभावोऽपि, तत्समानाधिकरण एव घटाभाव: । इत्थं प्रतियोगिव्यधिकरणाभावो दुर्लभ: । अस्याशयस्य प्रतिपादनाय दीधितिग्रन्थे उच्यते यत् ''अत्यन्तपदोपादानम्, अत्यन्ताभावत्वनिरूपको यो प्रतियोगी तदसामानाधिकरण्यलाभाय तथा अत्यन्ताभाव-त्वनिरूपिका या प्रतियोगिता तल्लाभाय[२९] जातम् । यदि ''प्रतियोग्यसामानाधिकरण्य'' घटका– ''त्यन्त'' – पदस्योपादानं न स्यात्तर्हि समस्ताभावो यथा घटाभावादिक:, स स्वसमानाधिकरणो पटाभावो यो तद्भिन्नोऽस्ति । अत: पटाभावभेदो घटाभावस्वरूपानतिरिक्त: । अर्थात् घटाभावपटाभावभेदावभिन्नावतो न कोऽपि घटाभावादि: प्रतियोगिव्यधिकरण: ।इत्थं ''वह्निमान् धूमात्'' इत्यादिसद्धेतुस्थलेषु प्रतियोगिव्यधिकरणाभाव एव दुर्लभ: स्यादिति ।

**सम्प्रदायविन्मतेनात्यन्तपदोपादानप्रयोजनम् –**

लक्षणस्थ ''प्रतियोगितानवच्छेदकघटकप्रतियोगितायां'' विशेषणतया प्रविष्टा ''त्यन्त''–पदस्यानिवेशे ''घटभिन्नं पटत्वात्'' इत्यत्र पटत्वसमानाधिकरणो योऽभावो घटाद्यभाव:, स घटभेदभिन्न: । अतो घटभेदभेदो यो घटाभावे विद्यते, स घटाभावस्वरूप:, तद्घटाभावप्रतियोगिता यथा घटे तथैव घटभेदेऽपि । इत्थं तादृशप्रतियोगितावच्छेदको घटभेदत्वात्मकसाध्यतावच्छेदकोऽभूत् । अत: उक्तास्थलेऽतिव्याप्ति: । आशयमेनं स्पष्टयन्नाह[१] दीधितिकारो यत् समस्ताभावो हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणो यो घटात्यन्ताभावादिक: स घटभेदभिन्नो भवति ।अत: सर्वहेतुसमानाधिकरणघटाभावादि: घटभेदभेदस्वरूप:, तत्प्रतियोगितैव घटभेदात्मकसाध्ये । इत्थं घटभेदात्मकाभावसाध्यकस्थलेऽव्याप्ति: ।अत: प्रतियोगितान- वच्छेदकघटक– ''प्रतियोगितायाम्'' ''अत्यन्ताभावत्वनिरूपकत्व''– विशेषणं दत्तम् ।

**अत्यन्तपदोपादानेऽपि 'कालो गोमान् गोत्वात्'' इत्यत्रातिव्याप्तिदोषकथनम्[३०] —**

अत्यन्तपदोपादानेऽपि ''कालो गोमान् गोत्वात्'' इत्यत्रातिव्याप्ति: । गोत्वाधिकरणो य: प्रलय:, नहि स्यात्तत्र गवात्यन्ताभावप्रतियोगिव्यधिकरण:; यतो हि प्रलयस्थितो यो गवात्यन्ताभाव: स गोध्वंसात्मकप्रतियोगिसमानाधिकरण: । अत: प्रलयावच्छेदेन गवात्यन्ताभावप्रतियोगिव्यधिकरणाभावो

नहि धर्तुं शक्यते, अपितु तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावपदेन सृष्टिकालवृत्तित्वविशिष्टगोत्वात्यन्ताभाव एव लक्षणघटको भविष्यति, तादृशप्रतियोगितावच्छेदकं तादृशगोत्वत्वम्, अनवच्छेदकसाध्यतावच्छेदकं गोत्वमभूत् । अतोऽतिव्याप्तिः ।

प्रकृतविषयेऽङ्गीक्रियते यत् ''अत्यन्ताभावस्य'' पदार्थत्रयात् ''प्रतियोगिप्रतियोगिप्रागभाव-प्रतियोगिध्वंसात्'' विरोधः ।अतः प्रतियोगिमद्देशे, प्रतियोगिप्रागभावाधिकरणदेशे प्रतियोगिध्वंसाधिकरणदेशे च प्रतियोग्यत्यन्ताभावो न; अतः केचनात्यन्ताभावं त्रितयप्रतियोगिकं स्वीकुर्वन्ति । इत्थं ''कालो गोमान् गोत्वात्'' इत्यत्रात्यन्ताभावप्रवेशेऽपि भविष्यत्यव्याप्तिः ।

**मिश्रमतानुसारेण 'अत्यन्ताभावपदेन' 'संसर्गाभाव'–ग्रहणं खण्डनञ्च[३१] —**

मिश्रानुसारेणात्यन्ताभावपदेन संसर्गाभावग्रहणं भवेत् । अतः 'प्रतियोग्यसमानाधिकरणहेतुसमानाधिकर-णसंसर्गाभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं भवेत् । एवं लक्षणे कृतेऽपि ''कालो गोमान् गोत्वात्'' इत्यत्र हेत्वधिकरणवृत्तिगवादिध्वंसाभावमादायातिव्याप्तिवारणं कर्तुं शक्यते; परन्तु लक्षणे संसर्गाभावनिवेशे सति ''कालो गोमान् गोत्वात्'' इत्यत्र गोत्वावच्छिन्नध्वंसमादाया- तिव्याप्तिवारणेऽपि ''कालःद्व्यणुकवान् स्पन्दात्'' इत्यत्र हेतुसमानाधिकरणसंसर्गाभावनिवेशेऽपि द्व्यणुकात्मकसाध्यसंसर्गाभावो लक्षणघटको नहि भवितुमर्हति; यतो हि स्पन्दाधिकरणप्रलये सर्गान्तरीयद्व्यणुक- प्रागभावोऽवस्थितोऽतः खण्डप्रलयकाले द्व्यणुकत्वावच्छिन्नध्वंसो नास्ति, तथा पूर्वकालवृत्तिद्व्यणुकध्वंसो विद्यते अतः द्व्यणुकत्वावच्छिन्नप्रागभावो न लभ्यते, द्व्यणुकध्वंसविद्यमानात् प्रागभावविद्यमानाच्च द्व्यणुकत्वावच्छिन्ना-त्यन्ताभावोऽपि न प्राप्यते । अतः साध्यसंसर्गाभावस्य लक्षणघटकाभावात् सृष्टिकालवृत्तित्वविशिष्टगोत्वाद्य-भावमादायातिव्याप्तिः ।

एवं प्रकारेण ''जन्यज्ञानवान् अदृष्टात्'' इत्यत्रादृष्टाधिकरणखण्डप्रलये यत्किञ्चिज्जन्यज्ञानध्वंसस्य विद्यमानत्वात् जन्यज्ञानत्वावच्छिन्नप्रागभावो न स्थितः । सर्गान्तरीयजन्यज्ञानप्रागभावस्य विद्यमानत्वात् जन्यज्ञानत्वावच्छिन्नध्वंसोऽपि न । ध्वंसप्रागभावस्य सत्वात् जन्यज्ञानात्यन्ताभावोऽपि न । इत्थं साध्यस्य संसर्गाभावलक्षणघटकस्यासत्त्वादन्याभावमादायातिव्याप्तिः । तथैव ''दुःखवान् अदृष्टात्'' इत्यत्रातिव्याप्तिर्बोध्या ।

एवमेव ''तदीयज्ञानवान् तदीयादृष्टात्'' इत्यत्रापि हेत्वधिकरणतदीयसुषुप्तिकाले तदीयज्ञानात्यन्ताभावो नहि धर्तुं शक्यते; यतो हि सुषुप्तिकाले पूर्वदिवसीयतदीयज्ञानध्वंसः तथाग्रिमदिवसीयतदीयज्ञानस्य प्रागभावोऽपि । अतः तदीयज्ञानसामान्यस्य प्रागभावोऽथवा तदीयज्ञानत्वावच्छिन्नध्वंसोऽथवा तदीयज्ञानात्यन्ताभावश्चेमे नहि हेत्वधिकरणवृत्तयो भविष्यन्ति, अपितु हेत्वधिकरणवृत्तिः सृष्टिकालवृत्तित्वविशिष्टगोत्वाद्यभावस्य प्रतियोगिता-नवच्छेदकसाध्यतावच्छेदिका, अतोऽतिव्याप्तिः । एतदतिव्याप्तिवारणं पूर्वोक्तप्रकारेण 'संसर्गाभाव'– निवेशेऽप्यसम्भवः ।

अत्रेदं ध्यातव्यं यद् ध्वंसप्रागभावकिञ्चित्प्रतियोगिका एवाभावा भवन्ति, तत्प्रतियोगिता नहि किञ्चिद्धर्माव-च्छिन्ना, यदि कथञ्चित् ध्वंसप्रागभावीयप्रतियोगितायामपि किञ्चिद्धर्मावच्छिन्नत्वमादाय ध्वंसं,

प्रागभावञ्चापि सामान्याभावं स्वीक्रियेत तर्हापि विशेषैकः प्रागभावः, तत्र सामान्यावच्छिन्नध्वंसोऽसम्भवः, अथवा यत्र विशेषैकध्वंसोऽवस्थितः तत्र सामान्यधर्मावच्छिन्नप्रतियोगिताकप्रागभावोऽसम्भव इति न वक्तुं शक्यते । यथा प्रतियोगिमत्काले प्रतियोग्यत्यन्ताभावो विद्यते, न तद्विरोधः, तथैव ध्वंसादिमत्कालेऽपि प्रतियोग्यत्यन्ताभावस्य-सत्त्वेऽपि न कश्चिद्विरोधः । यदि प्रतियोगिमत्काले प्रतियोग्यत्यन्ताभावो न स्वीक्रियेत तर्हि न कोऽपि भविष्यत्यन्ताभावःकाले । यतो हि सर्वकालः किञ्चिद्देशावच्छेदेन प्रतियोगिमान् एव भवति तथा किञ्चिद्देशावच्छेदेन कुत्रापि प्रतियोगिध्वंसोऽपि भवत्येव । अतः न कोऽपि एतादृशः कालः यत्र किञ्चिद्देशावच्छेदेन प्रतियोगी अथवा तद्ध्वंसो न स्यात् । अत एव कस्मिंश्चिदपि काले प्रतियोग्यत्यन्ताभावसत्ता नहि सिद्धा ।

प्रतियोगिमत्कालेऽपि यदि भवति प्रतियोग्यत्यन्ताभावः तर्हि ''गवाद्यवच्छेदेन इदानीं गोत्वं नास्ति'' इति प्रतीतिः कथन्न ? शङ्कायामस्यां दीधितिग्रन्थे कथ्यते यत् ''इयांस्तु विशेषः[३२]'' इत्यत्रेदमेव वैशिष्ट्यं यत् प्रतियोगिमान् यः कालः तस्मिन् प्रतियोग्यनधिकरणदेशावच्छेदेनात्यन्ताभाववत्ता विद्यते, तथाऽपरो यो ध्वंसादिमत्कालः स निरवच्छिन्नः । इत्थमत्यन्ताभावस्य देशवृत्तितायां कालोऽवच्छेदकः, तथा कालवृत्तितायां देशोऽवच्छेदको भवति । यथा – गोमान् यः कालः तत्र गवाधिकरणदेशावच्छेदेन गोमान्, तथा गवानधिकरणदेशावच्छेदेन स एव कालः गवात्यन्ताभाववान् । तथैव गवाधिकरणो यो देशः स पूर्वकालावच्छेदेन गोमान्, तथा तत्र वर्त्तमाने गोरसत्त्वे तद्देशे वर्त्तमानकालावच्छेदेन गवात्यन्ताभावो विद्यते । यस्मिन् काले यत्किञ्चिदवच्छेदेनापि गौर्नास्ति तत्र गवात्यन्ताभावः प्रतियोगिव्यधिकरणो भवति ।

**मतविशेषेण 'अत्यन्ताभावं' सदातनसंसर्गाभावस्वरूपेण स्वीकारः[३३] —**

केचन वदन्तीत्थं यत् संसर्गाभावविशेष एवार्थात् सदातनसंसर्गाभाव एवात्यन्ताभावपदवाच्यः । संसर्गाभावपदार्थः ''संसर्गारोपजन्यप्रतीतिविषयकाभावत्व''–रूपो विद्यते । अर्थात् स्वकीयप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यारोपजन्यप्रतीतिविषयकाभावत्वरूपो भवति । अत्र स्वपदेन संसर्गाभावात्मकघटाद्यभावो गृहीतः, तस्य प्रतियोगितावच्छेदकीभूतसंयोगादिसम्बन्धेन यः प्रतियोग्यारोपः– ''यद्यत्र घटस्यात्तर्हि उपलभ्येत'' एतादृशाऽऽरोपाज्जायमानं यज्ज्ञानं तादृशज्ञानविषय एव योऽभावः स संसर्गाभावत्वेनोच्यते । दशायामस्यां संसर्गाभावलक्षणं जन्यताघटितम्, सा जन्यता ''तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्ध्यनुरूपकत्वरूपा'' । इत्थं संसर्गाभावज्ञानं जन्यताज्ञानाधीनमस्ति, जन्यताज्ञानं व्याप्तिग्रहाधीनम् । एवं प्रकारेण चक्रकदोषो भविष्यति । अतो व्याप्तिलक्षणे संसर्गाभावनिवेशो नहि कर्त्तुं शक्यते, किन्तु नेदं कथनं सङ्गतं प्रतीयते । यतोहि जन्यताकुक्षिप्रविष्टा या व्याप्तिः सा नहि संसर्गाभावघटिता, अपितु ''साध्यवदन्यावृत्तित्व''– स्वरूपैव । अथवा ''साध्यसम्बन्धितावच्छेदकरूपवत्त्व''– स्वरूपा । अतो न चक्रकदोषः । अत एव संसर्गाभावघटितव्याप्ति- लक्षणकरणे नहि कोऽपि दोषः ।

**लक्षणे 'संसर्गाभावप्रवेशस्य' निरर्थकता[३४]—**

यतोऽग्रिमग्रन्थे व्याप्त्यघटितमेव ''अन्योन्याभावभिन्नत्वे सति संसर्गाभावत्वम्'' तथा ''नित्यत्वविशिष्ट-संसर्गाभावत्वमत्यन्ताभावत्वम्'' एतादृशनियमाघटितमेव संसर्गाभावादिलक्षणं विवेचितम् ।

तथा संसर्गाभावत्वप्रवेशे प्रयोजनाभावोऽपि; कारणं यत् प्रतियोगिव्यधिकरणघटितं यल्लक्षणं तत्र यः समानाधिकरणवह्न्यादिसाध्यभेदः स साध्यतावच्छेदकसंयोगसम्बन्धेन स्वप्रतियोगिसमानाधिकरण एव भवति ।अतः स न प्रतियोगिव्यधिकरणः, तद्वारकसंसर्गाभावप्रवेशो व्यर्थ एव, तथा गवादिं तादात्म्यसम्बन्धेन साध्ये कृते तथा सास्नावत्वादिहेतुस्वीकारे कृते या गवात्यन्ताभावीयप्रतियोगिता तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावेन ''गौः सास्नावत्त्वात्'' इत्यत्राव्याप्तिरपि स्यात् ।

**प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणत्वकथनम्**[३५]—

'प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकं साध्यतावच्छेदकावच्छिन्न-साध्यसामानाधिकरण्यं व्याप्तिः' एवं प्रकारेणाव्याप्यवृत्तिसाध्यकस्थलीयं यल्लक्षणं कृतं तल्लक्षणकरणेऽपि ''ज्ञानवान् द्रव्यत्वात्'' इति स्थलेऽतिव्याप्तिः । यतो हि द्रव्यत्वाधिकरणो यो घटपटादिः, स ज्ञानात्मकप्रतियोगि-विषयतासम्बन्धेनाधिकरणमभूत्, अतस्तत्र ज्ञानाभावः प्रतियोगिसमानाधिकरणः, स न प्रतियोगिव्यधिकरणः; यतो हि समवायसम्बन्धेन ज्ञानस्यात्मनि स्थितेऽपि विषयतासम्बन्धेन ज्ञानाधिकरणो यो घटादिः, तस्मिन् समवायसम्बन्धेन ज्ञानाभावो विद्यते । अतः समवायसम्बन्धेन ज्ञानाभावस्य विषयतासम्बन्धेन ज्ञानाधिकरणघटादिवृत्तित्वात् प्रतियोगिव्यधिकरणघटाद्यभावो भविष्यति, तस्य प्रतियोगितावच्छेदको घटत्वादिः, अनवच्छेदकसाध्यतावच्छेदकं ज्ञानत्वमतो भविष्यत्यतिव्याप्तिः ।

एवं प्रकारेण ''विशेषगुणवान् मनोऽन्यद्रव्यत्वात्'' इत्यत्रापि मनोऽन्यद्रव्यत्वाधिकरणौ यौ दिक्कालौ तत्र दिक्कृद्विशेषणतासम्बन्धेन देशे तथा कालिकविशेषणतासम्बन्धेन काले विशेषगुणो विद्यमानः ।अतः प्रतियोग्यधिकरणौ दिक्कालावपि सञ्जातौ, तयोः समवायसम्बन्धेन विशेषगुणाभावः, तस्मात् विशेषगुणात्मकसा- ध्याभावप्रतियोगिसमानाधिकरणावभूताम् । एवञ्च साध्याभावो नहि लक्षणघटकः, अतः अन्याभावमादायातिव्याप्तिः । तथैव ''जातिमान् भावत्वात्'' इत्यत्रापि भावत्वाधिकरणसामान्यादौ ''जातिर्नास्ती''त्यभावः गृहीतुं शक्यते; परन्तु तादृशाभावप्रतियोगी या जातिः, तस्याः ''एकार्थसमवायसम्बन्धेन'' अर्थात् ''स्वसमवायिसमवेत- त्वसम्बन्धेन'' प्रतियोगिजात्यधिकरण एवाभूत् सामान्यादिः, तत्सामान्यादौ समवायसम्बन्धेन विशेषगुणाभाववृत्तिः ।अतः साध्याभावो नहि लक्षणघटकः, अन्याभावमादायातिव्याप्तिर्भविष्यति ।एतद्दोषपरिहाराय'प्रतियोगितावच्छेदकसम्बन्धेन यत्प्रतियोग्यधिकरणं सम्बन्धि वा तद्वृत्तित्वाभाववान् अभावः तत्प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः'' इति व्याप्तिलक्षणे कृते उक्तस्थलेषु ज्ञानाभाव-विशेषगुणाभाव-जात्यभावाः, सर्वेऽभावाः एतादृशाः घटे प्रतियोगिव्यधिकरणाः भविष्यन्ति ।अतो न कुत्राप्यतिव्याप्तिः । एतादृशलक्षणे कृते एव कपिसंयोगिसाध्यकएतद्वृक्षत्वहेतुकस्थले तादात्म्यसम्बन्धेन प्रतियोग्यधिकरणाप्रसिद्ध्या तादात्म्यसम्बन्धेन कपिसंयोगिसाध्यकस्थले नाव्याप्तिः; यतो हि तादात्म्यसम्बन्धो यः साध्यतावच्छेदकसम्बन्धः तेन सम्बन्धेन प्रतियोग्यधिकरणाप्रसिद्धादपि तादात्म्यसम्बन्धेन घटादिप्रतियोगिसम्बन्धी प्रसिद्धः ।अतस्तत्रापि घटादिभेदमादाय लक्षणसमन्वयः ।

यद्यपि प्रतियोग्यधिकरणेऽथवा सम्बन्धिनि अवृत्त्यभावमादाय ''कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्राव्याप्तिर्भविष्यति; यतोहि एतद्वृक्षत्वाधिकरणो यः एतद्वृक्षः तद्वृत्त्यभावो यः कपिसंयोगाभावः, स (कपिसंयोगाभावो) गुणे विद्यते; परन्तु गुणे कपिसंयोगाभावप्रतियोगी कपिसंयोगो नास्ति । अतो हेत्वधिकरणगुणावच्छेदेन कपिसंयोगाभावोऽपि प्रतियोग्यसमानाधिकरणोऽभूत् तथा एतद्वृक्षत्वरूपहेतुसमानाधि-करणोऽपि ।अतः कपिसंयोगाभावमादायाव्याप्यवृत्तिकपिसंयोगिसाध्यक–एतद्वृक्षत्वहेतुकस्थलेऽव्याप्तिः । अतो हेतौ प्रतियोग्यधिकरणवृत्तित्वाभावविशिष्टविशेषणमादाय तादृशहेत्वधिकरणवृत्तित्वघटितलक्षणं स्वीकार्यम् । एवञ्च उक्तस्थले कपिसंयोगात्मकप्रतियोग्यधिकरणवृत्तित्वविशिष्ट एव हेतुः, नहि तादृशप्रतियोग्यधिकरणवृत्तित्वाभा-वविशिष्टहेतुः, अतो नाव्याप्तिः ।

**'प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्व'–स्वरूपविचारक्रमे कल्पत्रयकथनम्**[३६] —

लक्षणे यत् ''प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं'' तदर्थः ''प्रतियोगितावच्छेदकावच्छिन्नः कस्याप्येकस्य प्रतियोगिनोऽनधिकरणम्'' अथवा ''प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणम्'' अथवा कस्याप्येकप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं'' स्वीक्रियते ।तत्र यदि प्रथमकल्पं स्वीक्रियेत तर्हि कस्याप्येकप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं भवेत् । एवं कथने ''कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्राव्याप्तिः । अत्र हेत्वधिकरणवृत्तिः यो कपिसंयोगाभावः तत्प्रतियोगितावच्छेदकः कपिसंयोगः, तदवच्छिन्नप्रतियोगी यो वृक्षावृत्तिकपिसंयोगः, तदनधिकरणं एतद्वृक्षोऽभूत् ।अतः ''कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्र ''कपिसंयोगाभावोऽपि लक्षणघटकाभावोऽभूत् । अतो यद्दोषपरिहाराय प्रतियोगिवैयधिकरण्यप्रवेशः कृतः, स एव दोषः तदवस्थः सञ्जातः ।

यदि ''प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं'' द्वितीयकल्पमुच्येत तर्हि ''कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्र प्रतियोगितावच्छेदकावच्छिन्नसामान्यान्तर्गतः वृक्षवृत्तिकपिसंयोगोऽपि, तदधिकरण एव एतद्वृक्षो भविष्यति ।अतो नाव्याप्तिः ।किन्तु ''संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वात्'' इति स्थलेषु अव्याप्तिर्भविष्यति; यतोहि हेत्वधिकरणावृत्तिर्यो संयोगसामान्याभावः, तत्प्रतियोगितावच्छेदकं यत् संयोगसामा-न्याभावत्वं, तदवच्छिन्नप्रतियोगिसामान्यान्तर्गत–संयोगविशेषाभावोऽपि, तदधिकरणहेत्वधिकरणं द्रव्यम् । इत्थं संयोगसामान्याभावाभावः प्रतियोगिव्यधिकरणहेतुसमानाधि - करणाभावपदेन नहि गृहीतो भविष्यति ।तस्मादतिव्याप्तिः ।

तथैव ''द्रव्यत्वाभाववान् सत्त्वात्'' इत्यत्रापि द्रव्यत्वाभावाभावात्मकहेत्वधिकरणवृत्तिर्यो साध्याभावः तत्प्रतियोगी यो नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावः, तदधिकरण एव हेत्वधिकरणः । तादृशाभावो नहि लक्षणघटकः ।तथा च अन्याभावमादायातिव्याप्तिः ।

यदि प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वमनिवेश्य ''यत्किञ्चित् प्रतियोगितावच्छेदकावच्छिन्नानधिकरणमुच्येत तर्हि उक्तस्थले संयोगसामान्याभा - वत्वावच्छिन्नद्रव्यत्वाभावत्वावच्छिन्नानधिकरणहेत्वधिकरणं द्रव्यं भविष्यति ।अत उक्तस्थलेषु नातिव्याप्तिः; परन्तु ''कपिसंयोगाभाववान् आत्मत्वात्'' इत्यत्राव्याप्तिः; यतो हि आत्मत्वाधिकरणो य आत्मा तस्मिन्

विद्यमानो यः कपिसंयोगाभावः, तस्य गुणत्वात् गुणसामान्याभावा-भावस्वरूपोऽभूत् । अतः कपिसंयोगाभावाभावप्रतियोगितावच्छेदकं यथा – कपिसंयोगाभावत्वं तथैव गुणसामान्याभावत्वमपि । एवञ्च कपिसंयोगाभावाभावीयगुणसामान्याभावत्वरूपप्रतियोगितावच्छेदका-वच्छिन्नानधिकरणहेत्वधिकरणम् आत्माभूत् । इत्थं कपिसंयोगाभावाभावोऽपि लक्षणघटकः, तत्प्रतियोगितावच्छेदकम् एव साध्यतावच्छेदकमतोऽव्याप्तिः । अत्र समाधीयते– 'यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः' एतल्लक्षणे कृते उक्तस्थलेषु नाव्याप्तिः । यतो हि ''कपिसंयोगी एतद्वृक्षत्वात्'' इत्यत्र यादृशप्रतियोगितानवच्छेदकपदेन वृक्षावृत्तिकपिसंयोगत्वं गृह्यते तदापि वृक्षावृत्तिकपिसंयोगत्वावच्छिन्नानधिकरणहेत्वधिकरणं एतद्वृक्षः । तादृशप्रतियोगितावच्छेदकं वृक्षावृत्तिकपिसंयोगत्वमेव, अनवच्छेदकं शुद्धसाध्यतावच्छेदकं कपिसंयोगत्वमतो नाव्याप्तिः । ''संयोगाभाववान् सत्त्वात्'' इत्यत्र यादृशप्रतियोगितावच्छेदकपदग्राह्यसंयोगसामान्याभावत्वेनाव-च्छिन्नानधिकरणमेव हेत्वधिकरणद्रव्यम्, तादृशप्रतियोगितावच्छेदक एव साध्यतावच्छेदकः । अतो नातिव्याप्तिः । तथैव यादृशप्रतियोगितावच्छेदकपदग्राह्यद्रव्यत्वाभावत्वावच्छिन्नानधिकरणं हेत्वधिकरणद्रव्यं जातम् । अतोऽत्रापि द्रव्यत्वाभावाभावस्वरूपसाध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिः ''कपिसंयोगाभाववान् आत्मत्वात्'' इत्यत्र यादृशप्रतियोगितावच्छेदकपदग्राह्यं यद्गुणसामान्याभावत्वं तदवच्छिन्नानधिकरणं यद्यपि हेत्वधिकरणम्, तादृशप्रतियोगितावच्छेदकगुणसामान्याभावत्वम्, अनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगाभावत्वम्, तदवच्छिन्नसाध्यसामानाधिकरण्यस्यात्मत्वे सत्त्वान्नाव्याप्तिः ।

**हेत्वधिकरणसाध्याधिकरणयोःसम्बन्धकथनम्**[३७] —

''यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः'' एतल्लक्षणघटकं यत्परामर्शविषयसाध्यसामानाधिकरण्यम्, तत्कुक्षौ प्रविष्टं ''साध्यसामानाधिकरण्यं'' सम्बन्धविशेषेणैव प्रविष्टम् । अर्थात् सम्बन्धविशेषेण यत्साध्यसाधनसामानाधिकरण्यं तस्य तत्प्रकारेण सम्बन्धविषयको यो हेत्वाभासः स एव प्रतिबन्धकः । अस्येदं तात्पर्यं यत् साध्याधिकरणे हेतुवृत्तिता येन सम्बन्धेन बोधिता तेन सम्बन्धेन हेत्वधिकरणं ग्राह्यम् । अर्थात् हेतुतावच्छेदकसम्बन्धेनैव हेत्वधिकरणप्रवेशः । एवं साध्यसामानाधिकरण्य–घटकीभूता या साध्याधिकरणता तन्नियामको यः सम्बन्धो गृहीतः तत्सम्बन्धावच्छिन्नप्रतियोगितायाः निवेशः कर्त्तव्यः । इत्थं ''हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तिः योऽभावः तादृशाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदका-वच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति ।

यदि हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं नोच्यते तर्हि ''पर्वतो वह्निमान् धूमात्'' इत्यत्र समवायसम्बन्धेन धूमात्मकहेत्वधिकरणो यो धूमावयवः तन्निष्ठाभावीयप्रतियोगितायाः संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रति-योगिकाभावोऽपि लक्षणघटकः, तेनाव्याप्तिः, तद्वारणाय हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं निवेशनीयम् । तन्निवेशे, प्रकृते हेतुतावच्छेदकसम्बन्धः संयोगः, तेन

सम्बन्धेन हेत्वधिकरणं पर्वत:, संयोगसम्बन्धेन पर्वतनिष्ठाभावो नहि वह्न्यभाव: । अतो नाव्याप्ति:। परन्तु हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणस्य प्रवेशेऽपि तत्स्थले पुन: भविष्यत्यव्याप्ति: । यतो हि हेतुतावच्छेदकसंयोगसम्बधेन हेत्वधिकरणपर्वतवृत्त्यभावो समवायेन वह्न्यभाव:, तत्प्रतियोगितावच्छेदकं वह्नित्वम् । अतोऽव्याप्ति: । एतद्दोषवारणाय हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तथा लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेश: कर्त्तव्य: ।

**मतान्तरेण 'प्रतियोग्यनधिकरणत्वार्थ'–कथनम्[३८] —**

सिद्धान्तलक्षणघटकप्रतियोग्यनधिकरणत्वार्थ: साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं कर्तव्यम् । इत्थं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धी यो हेतुसम्बन्धीति उक्ते समस्तपूर्वोक्तदोषपरिहार: सम्भव: । अत: प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशोऽनावश्यक: । ''वह्निमान् धूमात्'' इत्यादिस्थलेषु समवायेन वह्न्यभावमादायाव्याप्तिर्या जायमाना, तद्वारणं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वस्यैव विवक्षया सम्भवम् । यतो हि धूमाधिकरणपर्वते विद्यमानो य: समवायसम्बन्धेन वह्न्यभाव:, तत्प्रतियोगी यो वह्नि: तस्य साध्यतावच्छेदकसंयोगसम्बन्धेन अधिकरणमेव हेत्वधिकरणं पर्वत:, अनधिकरणं नहि हेत्वधिकरणम् । अत: समवायसम्बन्धेन घटाभावो नहि लक्षणघटकोऽपितु संयोगसम्बन्धेन घटाभावो लक्षणघटक:, तत्प्रतियोगिता-नवच्छेदकं साध्यतावच्छेदकं वह्नित्वमतो नातिव्याप्ति: ।

**धर्मिसाध्यक–धर्मिहेतुकस्थलयोर्व्याप्यव्यापकभावविचार:[३९] —**

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वस्य तथा साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य-प्रतियोगितायां निवेशे कृते एवञ्च सम्बन्धविशेषेण साध्यसाधनसामानाधिकरण्येनार्थात् साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे वृत्तित्वनिविष्टे सामानाधिकरण्यघटकाधिकरणसम्बन्धित्वस्य वृत्तित्वस्य चापि सम्बन्धित्वमर्थो भवेत्, न तु अधिकरणत्वमर्थ: । एवमकृते सति ''पर्वतो वह्निमान् धूमवत:'' इत्यादिधर्मिसाध्यकधर्मिहेतुकस्थले साध्यहेत्वो: साध्यतावच्छेदकतादात्म्यसम्बन्धेन अधिकरणस्य वृत्तित्वस्य चाप्रसिद्ध्या नहि भविष्यति व्याप्यव्यापकभावसम्बन्ध:, तथा च लक्षणसमन्वयाभावप्रसङ्ग: । यदा लक्षणघटकाधिकरणस्थाने सम्बन्धित्वस्य निवेश: तदा ''पर्वतो वह्निमान् धूमवत:'' इत्यादिस्थले वह्निमतो व्यापकत्वं धूमवतश्च व्याप्यत्वं प्राप्स्यते । अर्थात् तादात्म्यसम्बन्धेन धर्मिणो व्याप्यता व्यापकता च सिद्धा स्यात् । तदेव स्पष्टयन् वह्निमतो व्यापकता धूमवतो व्याप्यता चेत्थं प्रतिपाद्यते[४०] – तादात्म्यसम्बन्धेन धूमवद्रूपहेतुसम्बन्धी यो महानस:, तत्र विद्यमानो यो घटवद्भेद:, तस्य तादात्म्यस- म्बन्धावच्छिन्नाघटवन्निष्ठा या प्रतियोगिता, तदनवच्छेदकं यद्वह्निमत्वं, तदवच्छिन्नं यद्वह्निमत्, तस्य तादात्म्यसम्बन्धेन सम्बन्धी यो महानस:, तस्मिन् धूमवद्धेतु: सम्बन्धी, तादृशसम्बन्धित्वं गतं धूमवति । इत्थं धर्मिवह्निमति व्यापकता एवं धर्मिधूमवति व्याप्यता च लब्धा । यथा धर्मी धर्मिणो व्यापको व्याप्यश्च भवति तथैव धर्मी अपि धर्मव्याप्य: एवं धर्मव्यापको भवति । अत: जलादिधर्मिणी पृथिवीत्वाभावव्याप्यता ''व्यतिरेक्यादिग्रन्थे'' प्रतिपादिता ।

**[४१]अभावीयप्रतियोगितावच्छेदकसम्बन्धविषयकविमर्शः—**

वृत्तितानियामकसंयोग एव अभावीयप्रतियोगितावच्छेदकसम्बन्धो भवति, वृत्त्यनियामकसंयोगोऽभावीय-प्रतियोगितायाः अवच्छेदकसम्बन्धो नहि भवति । यद्येवं स्वीक्रियेत तर्हि संयोगसम्बन्धेन गगनसाध्यकस्थले तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या गगनादौ द्रव्यत्वादिव्यापकत्वं दुर्घटं स्यात् । अतः तन्मतानुसारेण गगने द्रव्यत्वव्यापकत्वसिद्धये प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमनिवेश्य साध्यतावच्छे- दकसम्बन्धेन प्रतियोग्यसम्बन्धित्वस्य निवेशनं कर्त्तव्यम् । प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशोऽनावश्यकः । इत्थमेव द्वितीयकल्पानुसारेण "साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदका-वच्छिन्नासम्बन्धिहेतुसम्बन्धिसम्बन्ध्यभावीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं लभ्यते । एवं लक्षणे कृते पृथिवीत्वव्यापकता गगने सिद्धा । यतो हि गगनाभाववत्यां पृथिव्यां विद्यमानो यो गगनाभावः, तत्प्रतियोगितावच्छेदकावच्छिन्नो यो गगनः, तस्य पृथिव्यात्मकं हेत्वधिकरणं संयोगसम्बन्धेन विद्यते सम्बन्धि । अतो गगनाभावो न लक्षणघटकः । अन्यघटाद्यभावमादाय लक्षणसमन्वयः । तथैव वृत्त्यनियामकसम्बन्धेनैव पृथिव्यां गगनानुमितिः स्वीकार्या । वृत्तितानियामकसम्बन्धेन गगनविधेयकानुमितिर्नहि तत्र भवति । यदि वृत्तितानियामकसंयोगः गगनसाध्यकस्थले स्वीक्रियेत तर्हि तादृशसाध्यतावच्छेदकसम्बन्धेन गगनासम्बन्धिनी पृथिवी स्यात् । दशायामस्यां गगनाभावोऽपि लक्षणघटकः स्यात् । एवञ्च गगने नहि हेत्वधिकरणवृत्त्यभावाप्रतियोगित्वम् । इत्थं गगने पृथिवीत्वव्यापकता असिद्धा । अर्थात् वृत्तिनियामकसम्बन्धेन गगनोऽप्यव्यापकः इति सम्बन्धधर्मिकोभयाभावघटितलक्षणे स्पष्टम् ।

**'कालो घटवान् महाकालत्वात्' इत्यत्राव्याप्त्युद्भावने कल्पद्वयकथनम्[४२] —**

पृथिव्याद्यष्टद्रव्यभिन्नं यत् कालात्मकद्रव्यं तन्मात्रवृत्तिमहाकालत्वं, तद्व्यापककालिकसम्ब-न्धाव्याप्यवृत्तिभूतो न कोऽपि पदार्थो भवितुमर्हति । अतः पूर्वोक्तकल्पद्वये अर्थात् स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धी यो हेतुसम्बन्धी तत्सम्बन्ध्यभावो यः तादृशाभावीयसाध्यतावच्छेद- कसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वघटितेन साध्यतावच्छेदकसम्बन्धेन च प्रतियोगितावच्छेदका- वच्छिन्नासम्बन्धि–हेतुसम्बन्धि–सम्बन्ध्यभावीयप्रतियोगितानवच्छेदकत्वघटितम् उभयोः कल्पयोः "कालो घटवान् महाकालत्वात्" इत्यत्राव्याप्तिः । यतो हि अनुमितिघटकघटादिस्वरूपसाध्ये महाकालत्वव्यापकता नास्ति । कारणमिदं यत् महाकालत्वाधिकरणमहाकाले समवायेन विद्यमानो यो घटाद्यभावः तत्प्रतियोगितावच्छेदको यः समवायसम्बन्धस्तेन प्रतियोगितावच्छेदकावच्छिन्नघटात्मकप्रतियोगी यः तदसम्बन्धी भविष्यति कालः, परन्तु तादृशकाले विद्यमानो यो घटाद्यभावः तद्घटाभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यासत्त्वात् प्रथमकल्पानुसारेण कोऽपि घटपटाद्यभावो नहि लक्षणघटको भवितुमर्हति । अतः प्रतियोगिव्यधिकरणाभावघटित- प्रतियोगिव्यधिकरणत्वाप्रसिद्ध्याऽव्याप्तिः । तथैव द्वितीयकल्पे, प्रतियोगितायां साध्यतावच्छेदकसम्ब- न्धावच्छिन्नत्वमनिवेश्य साध्यतावच्छेदकसम्बन्धेन

प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वस्यैव प्रवेशः कृतः । अत्रापि "कालो घटवान् महाकालत्वात्" इति स्थले प्रतियोगिव्यधिकरणाभावोऽप्रसिद्धः । यतो हि महाकालत्वाधिकरणमहाकाले विद्यमानो यो घटपटाद्यभावः तत्प्रतियोगितावच्छेदकावच्छिन्नो यो घटपटादिः तत्साध्यतावच्छेदकीभूतकालिकसम्बन्धेन सम्बन्ध्येव महाकालः । अतः एतत्कल्पानुसारेणापि प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिः ।

**सार्वभौममतेन लक्षणस्थ – 'प्रतियोगिव्यधिकरण' – पदपरिष्कारः[४३] —**

सार्वभौममतेन प्रतियोगिव्यधिकरणपरिष्कारः इत्थमस्ति – साध्यतावच्छेदकसम्बन्धेन यत्किञ्चिद्धेत्वधि-करणावृत्तिरस्ति प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगी यस्याभावस्य स एवाभावः प्रतियोगिव्यधिकरणाभावपदेन विवक्षितव्यम् । एवं प्रकारकप्रतियोगिव्यधिकरणत्वं प्रवेश्येत्थं लक्षणं भवति – "हेत्वधिकरणीभूतयत्किञ्चिद्-व्यक्तिनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभाववत् प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकाभा-वीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः" एवङ्कृते लक्षणे "वह्निमान् धूमात्" इत्यत्र संयोगसम्बन्धेन घटाभावमादाय लक्षणसमन्वयः । धूमाधिकरणीभूता या यत्किञ्चिद् पर्वतादिव्यक्तिः तन्निरूपितवृत्तित्वाभाववद्घटत्वावच्छिन्नो घटः, तत्प्रतियोगिकाभावीयप्रतियोगितावच्छेदकं घटत्वम्, तद्भिन्नवह्नित्वावच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वाल्लक्षणसमन्वयः । "कालो घटवान् महाकालत्वात्" इत्यत्र गगनाभावमादाय लक्षणसमन्वयः, गगनाभावीयप्रतियोगितावच्छेदकावच्छिन्नगगनसामान्यं कालिकसम्बन्धेन हेत्वधिकरणमहाकालनिरूपितवृत्तित्वाभाववान् । यतो हि गगनः केनापि सम्बन्धेन नहि वृत्तिमान् । अतो गगनाभावो लक्षणघटको जातः, तादृशप्रतियोगितावच्छेदकं गगनत्वम्, अनवच्छेदकसाध्यतावच्छेदकीभूतघटत्वावच्छिन्न-सामानाधिकरण्यं "महाकालत्वहेतौ" । इत्थमवृत्तिगगनाभावमादाय "कालो घटवान् महाकालत्वात्" इत्यत्र प्रतियोगिव्यधिकरणाभावप्रसिद्धिः ।

यदि यत्किञ्चिद्धेत्वधिकरणवृत्तिता सम्बन्धसामान्यावच्छिन्नत्वेन लक्षणे निवेश्यते तर्हि "ज्ञानवान् सत्त्वात्" इति स्थलेऽव्याप्तिः, यतो हि ज्ञानाभावीयप्रतियोगितावच्छेदकावच्छिन्नज्ञानं हेत्वधिकरणीभूतघटादौ विषयतासम्बन्धेन विद्यते । अतः "ज्ञानाभावो" नहि लक्षणघटकः । तथैव "संयोगी सत्त्वात्" इत्यत्रापि संयोगाभावीय- प्रतियोगितावच्छेदकावच्छिन्नसंयोगसामान्यस्य हेत्वधिकरणगुणादौ कालिकसम्बन्धेन वर्त्तमानत्वात् संयोगाभावोऽपि नहि लक्षणघटकः । अतः उक्तस्थलद्वये सम्बन्धसामान्यावर्त्तमानो यो गगनः तदभाव एव लक्षणघटकः, तादृशाभावीयप्रतियोगितानवच्छेदकज्ञानत्वावच्छिन्नसामानाधिकरण्यस्य तथा तादृशप्रतियोगितानव- च्छेदकसंयोगत्वावच्छिन्नसामानाधिकरण्यस्य सत्तायां विद्यमानत्वादतिव्याप्तिः । तद्वारणाय हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिरूपितवृत्तिता साध्यतावच्छेदसम्बन्धावच्छिन्नो ग्राह्यः इत्युक्ता, सत्येवं सत्ताधिकरणगुणादौ ज्ञानसामान्यावृत्तित्वात् ज्ञानाभावो लक्षणघटको भविष्यति एवं सत्ताधिकरणद्रव्ये साध्यतावच्छेदकीभूतसमवायसम्बन्धेन संयोगसामान्यावृत्तित्त्वादुक्तस्थलेषु नातिव्याप्तिः ।

लक्षणघटकप्रतियोगितावच्छेदकविशिष्टप्रतियोगित्वमनिवेश्य केवलं प्रतियोगित्वमेवोच्येत तर्हि "भूतत्वमूर्तत्वोभयवान् मूर्तत्वात्" इत्यत्र मूर्तत्वाधिकरणं यन्मनस्तस्मिन् भूतत्वमूर्तत्वोभयाभावप्रतियोगि

यन्मूर्तत्वं तद्वृत्तिभूतं सञ्जातम् । अतो हेत्वधिकरणं मनोनिरूपितवृत्तित्वाभाववन्मूर्तत्वात्मकप्रतियोगि नाभूत् । अतो नहि लक्षणघटको भूतत्वमूर्तत्वोभयाभावः । तेन गगनाभावमादायातिव्याप्तिः । एवं प्रकारेण ''गुणकर्मान्यत्वविशिष्ट-सत्तावान् जातेः'' इत्यत्रापि हेत्वधिकरणीभूतयत्किञ्चिद्गुणनिरूपितवृत्तितावदेव विशिष्टसत्तात्मकप्रतियोगी भविष्यति, यतो हि ''विशिष्टं शुद्धान्नातिरिच्यते'' इति नियमेन यदा सत्ता गुणादिवृत्तिस्तदा विशिष्टसत्तापि गुणवृत्तिः । अतो न लक्षणघटको विशिष्टसत्ताभावः; अपितु गगनाभावमादाय ''विशिष्टसत्तावान् जातेः'' इत्यत्रातिव्याप्तिः । यदा प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामान्यत्वस्य निवेशनन्तदा प्रथमस्थले यत्किञ्चित्पदग्राह्यं यन्मनः तस्मिन् मूर्तत्वेन मूर्तत्वस्य सत्त्वादपि भूतत्वमूर्तत्वोभयत्वस्य यो भूतत्वमूर्तत्वोभयाभावीयप्रतियोगितावच्छेदकः, तदवच्छिन्नाधिकरणं नहि मनः । अतो हेत्वधिकरणीभूतमनोनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभाववत् भूतत्वमूर्तत्वोभयत्वावच्छिन्नात्म - कप्रतियोगी अभूत् । एवञ्च भूतत्वमूर्तत्वोभयाभावो लक्षणघटको भविष्यति, तेन नातिव्याप्तिः । एवं प्रकारेण ''गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः'' इत्यत्रापि जात्यधिकरणगुणे सत्तात्वेन विशिष्टसत्तायाः सत्त्वादपि विशिष्टसत्तात्वरूपेण गुणे वृत्तिर्नहि विशिष्टसत्ता, यतो हि विशिष्टसत्तात्वावच्छिन्नाधेयता अतिरिक्ता भवति । अतो जात्यधिकरणगुणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभाववत् विशिष्टसत्तात्वाव-च्छिन्नविशिष्टसत्तारूपप्रतियोगी जातः । तथा च विशिष्टसत्ताभावस्य लक्षणघटकत्वान्नातिव्याप्तिः ।

**सार्वभौममतखण्डनम्**[४४] —

सार्वभौमीयलक्षणे ''जातिमान् मेयत्वात्'' इत्यत्र समवायसम्बन्धेन जातेः साध्ये कृतेऽतिव्याप्तिः । जातिमति ''जातिर्नास्ती-''त्यभावो नहि सम्भवः । अतो जातिमन्निष्ठाभावप्रतियोगिता जातित्वावच्छिन्ना नहि भवितुमर्हति । अतो जातिमति जात्यभावो नहि लक्षणघटकः । यदि यत्किञ्चिद्धेत्वधिकरणपदेन सामान्यादिं स्वीक्रियेत तर्हि तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तितैवाप्रसिद्धा । एवं प्रकारेण ''संयोगी गुणकर्मान्यत्वात्'' इत्यत्रापि अतिव्याप्तिः । यदि हेत्वधिकरणपदेन द्रव्यं स्वीक्रियेत तर्हि तस्मिन् संयोगवृत्तिरेव, एवं यत्किञ्चिद्धेत्वधिकरणपदेन द्रव्यभिन्नसामान्यादीन् स्वीक्रियेत तर्हि तन्निरूपितसमवायात्मकसंयोग - सम्बन्धावच्छिन्नवृत्तितैवाप्रसिद्धा भविष्यति । इत्थं ''कालो घटवान् महाकालत्वात्'' इत्यत्राव्याप्तिवारणमसम्भवम् ।

अत्रायं प्रश्नो यत् समवायसम्बन्धेन जातिर्व्याप्यवृत्तिः, एवञ्च व्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधि-करणस्य नहि प्रवेशः, दशायामस्यां प्रतियोगिवैयधिकरण्यघटितलक्षणस्य ''जातिमान् प्रमेयत्वात्'' इत्यत्रातिव्या-प्तिप्रदर्शनमसंगतं स्यात्, यतो हि पूर्वसिद्धान्तितं यद् व्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधिकरण्यं नैव देयम् । तथैवाव्याप्यवृत्तिसाध्यकस्थलीयलक्षणे व्याप्यवृत्तितानवच्छेदकत्वं साध्यतावच्छेदके विशेषणं दातव्यम् । एवं प्रकारेणाव्याप्यवृत्तिसाध्यकस्थलीयलक्षणस्य व्याप्यवृत्तिसाध्यकस्थले कथमपि तल्लक्ष्यं न स्यात् । अतोऽव्याप्यवृत्तिसाध्यकस्थलीयलक्ष्यस्य संग्रहार्थं ''संयोगी गुणकर्मान्यत्वात्'' इत्यस्यानुधावनङ्कृतम् । ''संयोगी गुणकर्मान्यत्वात्'' इत्यत्र यत्किञ्चिद्धेत्वधिकरणपदेन द्रव्यस्य स्वीकारे तादृशद्रव्यनिरूपितसमवायसम्बन्धा-वच्छिन्नवृत्तितावच्छेदकमेव

संयोगाभावीयप्रतियोगितावच्छेदकसंयोगत्वं भविष्यति । यद्युक्तस्थले यत्किञ्चिद्धेत्वधिकरणपदेन सामान्यादीन् स्वीक्रियेत तर्हि तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तितैवाप्रसिद्धा । इत्थं तादृशप्रतियोगिव्यधिकरणो यो घटाभावः तत्प्रतियोगितानवच्छेदकत्वं व्याप्यवृत्तितानवच्छेदकत्वञ्च संयोगेऽभूताम् । अतः ''संयोगी गुणकर्मान्यत्वात्'' इत्यत्रातिव्याप्तिसत्त्वान्नहि मतमिदं समीचीनं सार्वभौमस्येति ।

**सम्बन्धधर्मिकोभयाभावघटितलक्षणस्य[४५] परिष्कृतस्वरूपम् —**

स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धिहेतुसम्बन्धिवृत्यभावप्रतियोगि-व्यधिकरणपदार्थोऽस्ति प्रतियोगितायां साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वमनिवेश्य साध्यतावच्छेदक-सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वं निवेश्य यल्लक्षणद्वयं कृतम्, तल्लक्षणद्वये ''कालो घटवान् महाकालत्वात्'' इत्यत्राव्याप्तिः प्रदर्शिता । तद्वारणाय सम्बन्धधर्मिकोभयाभावघटितप्रतियोगिव्यधिकरणत्वं परिष्कृत्य सम्बन्धधर्मिकोभयाभावघटितलक्षणं कृतम् । एतल्लक्षणस्वीकृन्मतेन स्वरूपसम्बन्धेन गगनाद्यवृत्तिपदार्थः । लक्षणस्वरूपमित्थम् — ''साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावः तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः'' । ''पर्वतो वह्निमान् धूमात्'' इत्यत्र साध्यतावच्छेदकीभूतसंयोग-सम्बन्धे घटत्वावच्छिन्नप्रतियोगिकत्वस्य सत्त्वादपि धूमाधिकरणीभूतपर्वतानुयोगिकत्वस्यासत्त्वादुभयाभावः । अतो घटाभाव एव लक्षणघटको जातः, तदीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकं वह्नित्वे गतम्, तदवच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्त्वाल्लक्षणसमन्वयः । ''धूमवान् वह्नेः'' इत्यत्र साध्यतावच्छेद- कीभूतसंयोगसम्बन्धे यद्यपि धूमप्रतियोगिकत्वमस्ति तथापि यत्किञ्चिद्वह्न्यधिकरणायोगोलकानुयोगिकत्वस्या-सत्त्वादुभयाभावः । अतो धूमाभावस्य तल्लक्षणघटकत्वान्न कोऽपि दोषः ।

यद्युभयाभावघटकहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वघटकयत्किञ्चित्पदानुपादाने ''धूमवान् वह्नेः'' इत्यत्रातिव्याप्तिः । साध्यतावच्छेदकीभूतसंयोगसम्बन्धसामान्ये धूमत्वावच्छिन्नप्रतियोगिकत्ववह्न्यधि-करणमहानसानुयोगिकत्वस्य सत्त्वादुभयाभावाभावात् धूमाभावो नहि लक्षणघटकः, अतः अन्याभावमादायातिव्याप्तिः । इत्थं यदि तादृशलक्षणघटकप्रतियोगिता - वच्छेदकावच्छिन्नार्थकनिरुक्तपदस्य प्रवेशो न भविष्यति तर्हि ''चैत्रान्यत्वविशिष्ट–एतद्दण्डवान् एतद्दण्डात्'' इत्यत्र चैत्रवृत्त्येतद्दण्डसंयोगे चैत्रान्यत्वविशिष्टैतद्दण्डाभावप्रतियोग्येतद्दण्डप्रतियोगिकत्वहेत्वधिकरणी - भूतचैत्रानुयोगिकत्वस्य सत्त्वात् चैत्रान्यत्वविशिष्टैतद्दण्डाभावो न लक्षणघटको भविष्यति । अतोऽतिव्याप्तिः, तद्वारणाय निरुक्तपदं प्रदत्तम् ।

संयोगसम्बन्धेनैतद्दण्डसाध्यकस्थले निरुक्तपदव्यावृत्तौ सत्यां समवायसम्बन्धेन विशिष्टसत्तासा-ध्यकस्थलेऽप्यतिव्याप्तिप्रदर्शनाय ''गुणकर्मान्यत्वविशिष्टसत्तासमवाये'' इति कथितम्[४६] । एवं प्रकारेण यदा यत्किञ्चित्पदोपादानङ्क्रियते तर्हि साध्यतावच्छेदकीभूतधूमीयसंयोगे

हेत्वाधिकरणीभूतयत्किञ्चित्पदेनायोगोलकोऽपि गृहीतो भविष्यति, तदनुयोगिकत्वस्य धूमसंयोगेऽसत्त्वादुभयाभावाद्धूमाभावोऽपि लक्षणघटक: । अत: ''धूमवान् वह्ने:'' इत्यत्र नातिव्याप्ति: ।

एवं प्रकारेण निरुक्तपदोपादानेन ''चैत्रान्यत्वविशिष्टैतद्दण्डवान् एतद्दण्डात्'' इत्यत्र चैत्रान्यत्वविशिष्टै-तद्दण्डसंयोगस्वरूपसाध्यतावच्छेदकसम्बन्धे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्यासत्त्वात् चैत्रान्यत्वविशिष्टैत-द्दण्डाभावोऽपि लक्षणघटको भविष्यति । अतस्तत्राप्यतिव्याप्तिवारिता भविष्यति । समवायेन विशिष्टसत्त्वसाध्यक- जातिहेतुकस्थले गुणकर्मान्यत्वविशिष्टसत्तासमवाये जात्यधिकरणगुणानुयोगिकत्वस्यासत्त्वात् ''गुणकर्मान्य- त्वविशिष्टसत्ताभावोऽपि'' लक्षणघटक: ।अतस्तत्रापि ''निरुक्त''–पदोपादानेन नातिव्याप्ति: ।

**प्रतियोगिताधर्मिकोभयाभावघटितनिष्कृष्टलक्षणकथनम् —**

सम्बन्धधर्मिकोभयाभावघटितकल्पानुसारेण कालिकसम्बन्धेनावृत्तिं स्वीकृत्य गगनाभावमादाय लक्षणसमन्वय: कृत:, परन्तु कालो जगदाधार इति दशायां यदि गगनादिर्महाकाले कालिकसम्बन्धेन न स्यात् तर्हि कालस्य जगदाधारत्वं व्याहतं स्यात् ।अतो यदि काले कालिकसम्बन्धेन गगनस्य विद्यमानत्वं स्वीक्रियेत तर्हि गगनाभावमादाय लक्षणसमन्वयो न स्यात् । तस्मात् दीधितिकारेण ''स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु''[४७], इत्यादिग्रन्थेन लक्षणान्तरं प्रदर्शितम् ।

कालिकसम्बन्धेन गगनो वृत्तिमान् इत्यनुभवात् गगनस्यावृत्तित्वव्यवहार: संयोगेन-समवायसम्बन्धेन च जायते । तदाधारेण प्रतियोगिताधर्मिकोभयाभावघटितलक्षणं कृतम् । लक्षणस्वरूपमित्थम् — ''प्रतियोगितावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धित्वं हेतुमत: तादृशप्रातियोगितासामान्ये साध्यतावच्छेदकीभूतयद्धर्मावच्छिन्नत्वसाध्यतावच्छेदकी - भूतयत्सम्बन्धावच्छिन्नत्वोभयाभाव: तेन सम्बन्धेन तद्धर्मावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति'' । ''वह्निमान् धूमात्'' इत्यत्र संयोगसम्बन्धेन हेत्वधिकरणवृत्तिर्य: संयोगसम्बन्धेन घटाभावोऽथवा समवायसम्बन्धेन वह्न्यभाव: तत्प्रतियोगितायां वह्नित्वावच्छिन्नत्व– साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभया-भावयोस्सत्त्वात् तादृशसंयोगसम्बन्धेन वह्निसामानाधिकरण्यं धूमे गतम् । अतो लक्षणसमन्वय: । इत्थं ''धूमवान् वह्ने:'' इत्यत्र संयोगेन धूमाभावीयप्रतियोगितायां साध्यतावच्छेद-कीभूतधूमत्वावच्छिन्नसाध्यतावच्छेदकीभूत-संयोगसम्बन्धावच्छिन्नत्वयोस्सत्त्वान्नातिव्याप्ति: ।

केचनेत्थमाशङ्कन्ते यत् गगनस्य वृत्तिमत्वादपि सम्बन्धधर्मिकोभयाभावघटितलक्षणस्य परिष्कार एवं भविष्यति–''प्रकृतसाध्यीयसाध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकाव - च्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभाव: तादृशप्रतियोगितानवच्छेद - कसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणेनैव ''कालो घटवान् महाकालत्वात्'' इत्यत्र गगनादे: वृत्तिमत्वेन स्वीकारेऽपि अव्याप्तिर्वारिता भविष्यति । कालिकसम्बन्धेन महाकाले गगनादिसत्त्वेऽपि घटप्रतियोगिककालिक-सम्बन्धात्मको य: साध्यतावच्छेदकसम्बन्ध: तत्र पटत्वावच्छिन्नप्रतियोगिकत्वासत्त्वात् पटाभाव एव प्रतियोगिव्यधिकरण:,

तादृशप्रतियोगितानवच्छेदकघटत्वावच्छिन्नसामानाधिकरण्यस्य महाकालत्वे सत्त्वात् अव्याप्तिर्वारिता भविष्यति । इत्थं सम्बन्धधर्मिकोभयाभावघटितलक्षणेनैव यदि पूर्वोक्तदोषवारणं स्यात् तर्हि ''प्रतियोगिताधर्मिकोभयाभावघटितकल्पानुधावनं व्यर्थमेव ।

इत्थं ''काल: प्रमेयवान् महाकालत्वात्'' इत्यत्र पूर्वोक्तप्रकारेण प्रतियोगिव्यधिकर- णाभावाप्रसिद्धि:, यतो हि सर्ववस्तुन: प्रमेयत्वात् सर्वे साध्यप्रतियोगिका: घटपटादिप्रतियोगिका: कालिका: भविष्यन्ति, तत्र घटत्वावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणमहाकालानुयोगिकत्वद्वयं विद्यमानमस्तीति शंका न कर्तुं शक्यते । कालिकसम्बन्धेन प्रमेयसामान्यस्य व्याप्यवृत्तित्वात् तत्र प्रतियोगिवैयधिकरण्योपादानमेव न भवति । अत: ''हेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंसर्गातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकत्वोभया-भाववत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपव्याप्ति:'' स्वीक्रियते । इत्थं समवायसम्बन्धेन घटाद्यभावमादाय नहि दोष: । अतो दीधितिग्रन्थे ''अत एव'' इत्यादिग्रन्थेन[४८] सम्बन्धधर्मिकोभयाभावघटितलक्षणे दोषान्तरं प्रदर्शितम् ।

सम्बन्धधर्मिकोभयाभावघटितकल्पे ''द्रव्यं जाते:'' इति स्थलेऽतिव्याप्ति: । अत्र जात्यधिकरणगुणस्थो यो द्रव्यत्वाभाव: स नहि लक्षणघटक:, यतो हि समवायस्यैक्यात् द्रव्यत्वप्रतियोगिकत्व-गुणानुयोगिकत्वे साध्यतावच्छेदकीभूतसमवायसम्बन्धेऽतिष्ठत् । अतोऽन्यगगनाद्यभावमादायातिव्याप्ति: । अनेन प्रकारेण ''वह्निधूमोभयवान् वह्ने:'' इत्यत्रापि साध्यतावच्छेदकीभूतसंयोगसम्बन्धे वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वन्नहि भविष्यति, यतो हि ''वह्निधूमोभयवान्'' इति प्रतीतिनिर्वाहक: एकैको वह्नि: धूमसंयोगश्चैव; यतो हि कोऽपि संयोग: नहि वह्निधूमोभयत्वावच्छिन्न:, अत: संयोगसम्बन्धमात्रे वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वासत्त्वात् उभयाभावप्राप्ति: । अत: वह्निधूमोभयाभावमादाय ''वह्निधूमोभयवान् वह्ने:'' इत्यत्र नातिव्याप्ति: । पुनश्चापि ''द्रव्यं जाते:'' इत्यत्र समवायस्यैक्यात् द्रव्यत्वप्रतियोगिकत्वहेत्वधिकरणीभूतगुणानुयोगिकत्वद्वयसत्त्वात् द्रव्यत्वाभावात्मकसाध्याभावो न लक्षणघटको भविष्यति । अतोऽतिव्याप्ति: । एतस्मात् कारणात् प्रतियोगिताधर्मिकोभयाभावघटितलक्षणानुधावनं कृतम्[४९] । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणानुसरणे ''द्रव्यं जाते:'' इत्यत्र द्रव्यत्वाभावीयप्रतियोगितायां साध्यतावच्छेदकीभूतद्रव्यत्वत्वावच्छिन्नत्व – साध्यतावच्छेदकीभूत- समवायसम्बन्धावच्छिन्नत्वसत्त्वात् नोभयाभाव: । अतो द्रव्यत्वे नहि जातिव्यापकत्वम्, तेन नातिव्याप्ति: ।

दीधितिग्रन्थे[५०] ''विरहेऽपि च'' इत्यत्र चकार: तात्पर्यं विना विद्यते । वस्तुत: कस्मिंश्चिदपि संयोगे द्वित्वावच्छिन्नप्रतियोगिकत्वासत्त्वेऽपि अर्थात् द्वित्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्धेऽपि, अत्रेदं तात्पर्यं यत् सर्वे सम्बन्धा: एकप्रतियोगिकापरानुयोगिका: भवन्ति इति नियमात् वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकसम्बन्धाप्रसिद्धात् द्वित्वावच्छिन्नप्रतियोगिकत्वघटितोभयाभावो नहि गृहीतुं शक्ष्यते, अतो नहि लक्षणघटको वह्निधूमोभयाभाव: । इत्थमन्याभावमादायातिव्याप्ति: । एतत्प्रकारकातिव्याप्तिवारणं प्रकारित्वे तादृशोभयत्वावच्छिन्नप्रति- योगिकत्वप्रसिद्धिं प्रदर्श्य यत्कृतं तन्न समीचीनम्, यतो हि प्रकारित्वादिसम्बन्धे नहि किमपि प्रमाणमिति वचनं पूर्वमेव प्रतिपादितम् ।

केचन ''वह्निधूमोभयवान् वह्नेः'' इत्यत्र वह्निस्थाने ''धूमात्'' संयोज्य तथा ''नातिव्याप्तिः'' इति पश्चात् ''अव्याप्तिर्वा'' इति पाठं संकल्प्य ''द्रव्यं जातेः'' इत्यत्रातिव्याप्तिस्तथा ''वह्निधूमोभयवान् धूमात्'' इत्यत्राव्याप्तिरेव पूर्वलक्षणे दोष इति वदन्ति[५१] ।

सिद्धान्तलक्षणघटको यः प्रतियोगित्वादिः स स्वरूपसम्बन्धविशेषः[५२] । तस्य लक्षणे प्रवेशः प्रकारविधया न तु सम्बन्धविधया । सामानाधिकरण्येऽपि सम्बन्धः संयोगत्वादिरूपेणैव प्रसिद्धः न तु प्रकारविधया । इत्थं नियमाघटित एव सम्बन्धत्वपरिष्कारः कृतः । लक्षणघटकाभावपदम् ''इदमिह नास्ति'' ''इदमिदं न भवती''– तिप्रतीत्या सिद्धभावस्वरूपं तथा अभावस्वरूपं सत् स्वरूपसम्बन्धविशेषोऽस्ति । अतोऽभावसाध्यकव्यभिचारिणि नातिव्याप्तिः । द्वितीयाभावत्वमपि प्रयोजनाभावात् नोपादेयम् । विषयताविषयतात्ववत् प्रतियोगित्वाधिकरणत्वप्रति- योगितात्वाधिकरणतात्वसम्बन्धत्वादिरप्यतिरिक्तपदार्थो विद्यत इति केचन न्यायैकदेशिनः प्रतिपादयन्तीति शम् ।

**सन्दर्भसूची –**


१. सांख्यकारिका श्लोक – ३

२. तत्त्वचिन्तामणौ प्रत्यक्षखण्डान्तर्गतप्रामाण्यवादे, पृ०- ४०१

३. कुमारिलभट्ट-वचनम्

४. तर्कभाषा, पृ०-१८० (आचार्य सुरेन्द्रदेवशास्त्री, चौ.विद्याभवनम्)

५. तत्त्वचिन्तामणिः, अनु.ख., पृ०-२

६. कारिकावली, अनुमानखण्डः, का० सं-६६

७. तत्त्वचिन्तामणौ व्याप्तिवादे पृ.-२७

८. त. चि., व्याप्तिवादः, पृ.-२७-३१

९. तत्रैव

१०. तत्रैव

११. तत्रैव

१२. तत्रैव

१३. तत्रैव

१४. सिद्धान्तलक्षणजागदीशी (भावप्रकाशिका हिन्दीव्याख्या संवलिता) – चिन्तामणिः, पृ०-१ (चौखम्बा कृष्णदास अकादमी, वाराणसी, प्रथमसंस्करणम् - २०१४, व्याख्याकारः–डॉ महेशझा (अहम्))

१५. सि.ल.जा.दी.(प्रतियोग्यसमानाधिकरणेति – तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः)–पृ.२

१६. सि.ल.जा.(न च ''पर्वते महानसीयो वह्निर्नास्ति'' इत्यादि ....... एवानवच्छेदकत्वस्य विवक्षितत्वात्)–पृ.४

१७. सि.ल.जा.(हेतुसमानाधिकरणाभाव ...... पर्य्याप्तिसम्बन्धेन सत्त्वायोगात्)–पृ.७

१८. सि.ल.जा.(ननु दण्डिमान् ..... विशिष्टजातेस्तादृशाभावप्रतियोगितावच्छेदकत्वात्)–पृ.९

१९. सि.ल.जा., दी.–पृ.११

२०. सि.ल.जा.(नव्यास्तु–''दण्डिमान्'' इत्यनुमितौ....... नाव्याप्तिरिति प्राहुः)–पृ.१८

२१. सि.ल.जा., दी.(इत्थञ्च इदं द्रव्यं ........ विशिष्टसत्त्वादेर्गुणादाववृत्तेः)–पृ.-१९

२२. सि.ल.जा.,दी.(सामानाधिकरण्यव्यक्तीनां......द्वितीया त्वभिन्नैवेति ध्येयम्)–पृ.२३

२३. सि.ल.जा.,दी.(अयं कपिसंयोगी एतद्वृक्षत्वादित्यादिसंग्रहायासमानाधिकरणान्तम्) पृ.-२७

२४. सि.ल.जा., दी.(यत्तु इदं संयोगि.......... नाध्यक्षमिति) पृ.२८

२५. सि.ल.जा.,दी.पृ.३२

२६. तर्कभाषा – पृ. –१८०

२७. सि.ल.जा.दी.–पृ.४५

२८. सि.ल.जा.,दी.–पृ.५०

२९. सि.ल.जा., दी.(न चोभयत्वमेकविशिष्टापरत्वं, विशिष्टञ्च केवलादन्यदिति, ..... नात्रोभयमिति प्रतीतेर्दुर्वारत्वात् ।)-पृ.६१

३०. सि.ल.जा.,दी.(अत्यन्तपदञ्चात्यन्ताभावत्व......दुर्लभत्वापत्तेः)-पृ.६६

३१. सि.ल.जा., दी.(सर्वेषामेवाभावानां.........प्रतियोगित्वादभावसाध्यकाव्याप्तेश्चेति सम्प्रदायविदः)-पृ.-६९

३२. सि.ल.जा.दी. (अथ यदा गोत्वं..........गवात्यन्ताभावानधिकरणत्वात्)-पृ-७१

३३. सि.ल.जा.,दी.(संसर्गाभावमात्रोक्तावपि ........ कालमात्रावृत्तित्त्वप्रसङ्गात्)-पृ.७३

३४. सि.ल.जा.,दी.पृ-८२

३५. सि.ल.जा.,दी.(न च संसर्गाभावविशेषोऽत्यन्ताभावः........ एवं नियमान्तरस्यात्र प्रवेशेऽपि न क्षतिरित्याहुः) पृ-८४

३६. सि.ल.जा.,दी.(वक्ष्यते च ....... प्रयोजनविरहोऽव्याप्तिश्च) पृ-८६

३७. सि.ल.जा.,दी.(अथ ज्ञानवान् द्रव्यत्वात् ..... साध्यवत्त्वादिति चेत्) पृ-८९

३८. सि.ल.जा.,दी.(ननु प्रतियोगितावच्छेदकावच्छिन्नस्य ...... हेतुमतस्तदनवच्छेदकत्वस्योक्तत्वात्) पृ-१०३

३९. सि.ल.जा.,दी.(अत्र च ग्राह्यसामानाधिकरण्ये........वह्नित्वस्य न क्षतिः) पृ-१२४

४०. सि.ल.जा.,दी.(यद्वा, साध्यतावच्छेदकसम्बन्धेन.........न विशेषणीया) पृ-१२८

४१. सि.ल.जा.,दी.(एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयं ..... तत्र तत्रोक्तं संगच्छते) पृ-१३२

४२. सि.ल.जा.,दी.(वृत्तिनियामकसंयोगमात्रस्याभाव ....... व्यक्ती भविष्यति चेदमुपरिष्टात्) पृ-१४३

४३. सि.ल.जा.,दी.(नन्वष्टद्रव्यातिरिक्त ....... तदन्यत्वस्य च कालेऽसम्भवात्) पृ-१४७

४४. सि.ल.जा.,दी.(न च तादृशसम्बन्धेन ........ विशिष्टस्यानतिरिक्तत्वात्) पृ-१५९

४५. सि.ल.जा.,दी.(समवायेन जाते: साध्यत्वे.......मैवम्,) पृ-१६५

४६. सि.ल.जा.,दी.(साध्यतावच्छेदकसम्बन्धसामान्ये........विवक्षितत्वात्) पृ-१६८

४७. सि.ल.जा.,दी.पृ-१७८

४८. सि.ल.जा.,दी.पृ-१८६

४९. सि.ल.जा.,दी.,पृ.-१९५

५०. सि.ल.जा.,दी.,पृ.१९५

५१. सि.ल.जा.,दी.,पृ.१९५

५२. सि.ल.जा., पृ.१९७

५३. सि.ल.जा.,दी.,पृ.१९७

वरिष्ठसहायकाचार्योऽध्यक्षश्च (नव्यन्यायविभागे)

राष्ट्रियसंस्कृतसंस्थानम्

(मानितो विश्वविद्यालय:)

श्रीसदाशिवपरिसर:, पुरी

# सामान्यलक्षणा

**डॉ. गणपतिशुक्ल:**

**अलौकिकस्तु व्यापारस्त्रिविध: परिकीर्तित: ।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ।।**

सामान्यं लक्षणं यस्येति सामान्यलक्षणा । तत्र सामान्यं लक्षणं यस्येति व्युत्पत्तौ लक्षणपदेन सामान्यस्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तेन सामान्यं चेन्द्रियसंबद्धविशेष्यक-ज्ञानप्रकारीभूतं भवति । ननु सन्निकर्षत्वं चेन्द्रियसम्बधत्वम् । तदा सामान्यस्येन्द्रियप्रतियोगिकत्वाभावात् तस्य सन्निकर्षत्वमयुक्तं स्यात् । तत्र उच्यते संयोगादिसम्बन्धस्येन्द्रियप्रतियोगि - कत्वात्तद्घटितस्येन्द्रियसंयुक्तवि-शेष्यकज्ञानप्रकारीभूतधर्मादे: प्रत्यासत्तित्वम् । सामान्यं प्रत्यासत्ति: । तथा हि यत्र चक्षुरिन्द्रियसन्निकर्षेण घट इति ज्ञानमुत्पन्नं तत्र चक्षु:संयोगाभावेऽपि तादृशज्ञानं गृहीत्वा इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्य घटत्वस्य घटान्तरे सत्त्वात् घटान्तराणां सामान्यलक्षणाप्रत्यासत्त्या पूर्वं घटान्तर एव सन्निकर्षस्योपपादिततया तस्यैव ज्ञानापादनं स्यात् । तत्र प्रत्यक्षव्यक्तेर्द्वितीयक्षणे तज्ज्ञानरूपज्ञानलक्षणाप्रत्यासत्त्या अलौकिकप्रत्यक्षमिष्टमेव ।

अत्र यदि इन्द्रियसम्बद्धप्रकारीभूतं सामान्यमित्युच्यते तदा धूमभ्रमस्थले धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् । यतो हि तादृशस्थले धूमत्वेन साकमिन्द्रियसम्बन्धाभावात् । इन्द्रियसंबद्धविशेष्यकज्ञाने प्रकारीभूतसामान्यं प्रत्यासत्तिरिति मते इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं सामान्यं धूमत्वं तादृशधूमत्वं सकलधूमेषु वर्तते । अत: इन्द्रियसम्बन्धस्य विशेषणविधया सन्निकर्षघटकत्वान्नदोष: । इन्द्रियसम्बन्धश्च लौकिको ग्राह्य: । इन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतमित्यत्र लौकिकसन्निकर्षस्य विशेषणविधया प्रवेश: । अन्यथा धूमे पूर्वकालीनचक्षुसंयोगं गृहीत्वा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् । इन्द्रियसंबद्धविशेष्यकज्ञान - प्रकारीभूतज्ञानसामान्यस्य प्रत्यासत्तित्वं बहिरिन्द्रियस्थले भवति । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यलक्षणाघटकज्ञाने तदिन्द्रियजन्यत्वं विशेषणीयम् । अन्यथा यत्र चक्षु:संयोगे जातेऽपि दोषवशान्न धूमस्य चक्षुरिन्द्रियजन्यप्रत्यक्षत्वं किन्तु धूमत्वप्रकारकं स्मरणं, तत्र धूमत्वसामान्यलक्षणाजन्यसकलधूमस्य ज्ञानापत्ति: स्यात् । अत: तदिन्द्रियजन्यत्वं सामान्यलक्षणाज्ञाने निवेशनीयम् । तथा च तदिन्द्रियेण सामान्यलक्षणया ज्ञाने जाते तदिन्द्रियजन्यतदिन्द्रियलौकिकसन्निक- र्षवद्विशेष्यकज्ञानप्रकारीभूतं सामान्यं सन्निकर्षो भवति । अत्र शंकते यत् अणुत्वेन यत्किञ्चिदणूपस्थिता- वणुत्वसामान्यलक्षणाप्रत्यासत्त्या सकलाणुगोचरं मानसं ज्ञानं न स्यात् । यतो हि तदानीमणौ लौकिकसन्निकर्षस्य ज्ञाने मनोजन्यत्वस्याभावात् । मनोजन्यत्वं ज्ञानसामान्यस्यैव भवति । अणूपस्थितौ मनोजन्यत्वमस्त्येव । परन्तु स्मरणस्यापि कालोपाधित्वेन इन्द्रियजन्यत्वात् । तद्दोषवारणाय तदिन्द्रियनिष्ठजनकतानिरूपित- तत्प्रत्यक्षविभाजकोपाध्यवच्छिन्नजन्यताया: निवेशनीयतया तादृशमनोजन्यत्वस्य सुखादिज्ञाने सत्त्वान्न दोष: । एवञ्च सामान्यलक्षणाप्रत्यासत्त्या

बहिरिन्द्रियेण ज्ञानोत्पादे इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतज्ञानसामान्यस्य प्रत्यासत्तित्वं विवक्षितं नतु मानससामान्यलक्षणाजन्यज्ञाने । अत: दोषावसरो नास्ति ।

समानानां भाव: सामान्यमिति व्युत्पत्तिकरणे तादृशसामान्यं क्वचिन्नित्यं क्वचिच्चानित्यं भवति । नित्यसामान्यं घटत्वादि:, अनित्यसामान्यं घटादि: । तथा च ज्ञायमानसामान्यमित्यत्र जातेरेव सामान्यपदार्थइति स्वीकारे अनित्यजातिरूपसामान्यस्याप्रसिद्ध्या अव्याप्ति: । अत: सामान्यं त्यक्त्वा सामान्यज्ञानस्य प्रत्यासत्तित्वमुक्तम् । यत्र एकघटस्य संयोगसम्बन्धेन भूतले ज्ञानं तस्यैव समवायसम्बन्धेन कपाले च ज्ञानं जातं तत्रा तदनन्तरं भूतलस्य कपालस्य च ज्ञानं भवति तत्र ज्ञायमाननित्यं सामान्यं प्रत्यासत्ति: तत्र सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बधेनाधिकरणानां प्रत्यासत्तित्वम् । अन्यथा समवायसम्बन्धेन ज्ञानप्रकारीभूत- घटत्वादिसामान्यप्रत्यासत्त्या तत्र कालादिज्ञानापत्ते: । किन्तु यत्र तद्घटनाशानन्तरं तद्घटवत: स्मरणं तत्र सामान्यलक्षणाप्रत्यासत्त्या सर्वेषां तद्घटवतां ज्ञानं न स्यात् । यतो हि सामान्यस्य तदानीमभावात् । अपि च यत्र इन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं तत्र द्वितीयदिवसे इन्द्रियसंबद्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वादिन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं कुतो न स्यात् । यद्यपि परदिनेऽयं घट इति ज्ञानं यदि स्मरणात्मकं स्यात् तदा तदिन्द्रियजन्यात्वाभाववत् स्यात् । यदि अयं घट इति ज्ञानं परदिनेऽपि चाक्षुषं स्यात् तदाचक्षु:- संयोगावश्यकतेति नापत्ति: । परन्तु अलौकिकचाक्षुषं गृहीत्वा आपत्ति: स्यात् । अत: सामान्यं परित्यज्य सामान्यविषयकं ज्ञानं प्रत्यासत्तिरिति ।

सामान्यलक्षणमित्यत्र विषयोऽर्थ: लक्षणशब्दस्य भवति । तेन इन्द्रियसंबद्धविशेष्यकं सामान्यप्रकारकं ज्ञानं सामान्यलक्षणा इत्यर्थो लभ्यते । तेन तत्रैव सामान्यविषयकं ज्ञानमात्रमित्यर्थोऽपि लभ्यते । अस्मिन् कल्पे सामान्यज्ञानमात्रं प्रत्यासत्ति: । सामान्यविषयकं ज्ञानं प्रत्यासत्तिरिति मते यत्र च चक्षु:संयोगादिकं विनाऽपि सामान्यज्ञानं भवति तत्र सकलघटादीनां चक्षुरिन्द्रियजन्यप्रत्यक्षं स्यात् । अत उक्तम् **तदिन्द्रियजतद्धर्मबोध- सामग्र्यपेक्षत इति ।**

यत्र घटचक्षु:संनिकर्षादिघटिता विशिष्टचाक्षुषादिसामग्री, चक्षु:संनिकर्षादिघटितसामग्र्युत्तरक्षणे, घट इति चक्षुरिन्द्रियजन्यप्रत्यक्षं सैव सामान्यलक्षणा, तदुत्तरक्षणे सकलघटविषयकं ज्ञानं न जन्यते इति प्राचीना: वदन्ति । अत्र नव्या: वदन्ति यत् तत्पुरुषीयचक्षु:संयोगादिघटितसामग्र्यभावकाले तत्पुरुषीयसामान्यप्रत्यासत्ति- जन्यघटत्वादिप्रकारकचाक्षुषापादनं नैव भवितुमर्हति । अत: अस्मिन्मते अतिरिक्तकार्यकारणभावकल्प- नाभावरूपलाघवमस्ति ।

सामान्यलक्षणाप्रत्यासत्ति: सामान्याश्रयस्य ज्ञानं जनयति । सामान्यलक्षणा स्वीकारे बीजमिदं यत् प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति । तात्पर्यमिदं यत् यत्र सन्निकर्षाश्रयत्वं तत्रैव प्रत्यक्षविषयत्वम् । तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनामित्यादीनां भानं कथं स्यात् । अत: सकलवह्निधूमादिभानार्थं सामान्यलक्षणाया: आवश्यकता वर्तते ।

बाह्येन्द्रियस्य लौकिक: सम्बन्ध:, ज्ञानस्य तदिन्द्रियजन्यत्वञ्च नियामकं भवति । अत्र प्रश्न उदेति यत् ज्ञायमानप्रत्यक्षस्थले व्यभिचारो भवति । यतो हि लौकिकसन्निकर्षस्य नानात्वात् । तथा च

संयोगाद्येकतरनिवेशे व्यभिचारो भवति । तत्र जगदीशतर्कालङ्कारा: वदन्ति यत् चाक्षुषलौकिकसन्निकर्षस्य चक्षुर्लौकिकचाक्षुष- जनकताघटकसम्बन्धत्वेनैव प्रविष्टत्वात् । तत्र उच्यते चक्षुर्निष्ठचाक्षुषजनकताघटकसम्बन्धनिवेशेनैव व्यभिचारदोषवारणसम्भवे लौकिकत्वनिवेशनं व्यर्थम् ! तत्र समाधत्ते यत् यत्र कालिकसम्बन्धेन चक्षुरिन्द्रियप्रकारकघटविषयकचक्षुरिन्द्रियजन्यप्रत्यक्षोत्तरं कालिकसम्बन्धेन चक्षुर्निखिलाश्रयचाक्षुषोपपादनाय इन्द्रियसम्बद्धविशेष्यकचाक्षुषप्रकारतापन्नचक्षुरिन्द्रिपमपि कालिकसम्बन्धेन चक्षु: प्रकारकचक्षुरिन्द्रियजन्यप्रत्यक्षं प्रति कालिकसम्बन्धेन कारणत्वात् । तत्र चक्षु:संयोगाभावेऽपि चक्षुर्निष्ठचक्षुरिन्द्रियजन्यप्रत्यक्षनिष्ठजनक- ताघटकचक्षुर्निरूपितकालिकसम्बन्धं गृहीत्वा चाक्षुषापत्ति:स्यात् । अत: लौकिकत्वनिवेश: । तेन लौकिकविषकत्वघटितधर्मावच्छिन्नजन्यताया: लाभो भवति । तादृशस्थले न चाक्षुषापत्ति: । अत्र चाक्षुषपदं किमर्थम् ? तदनिवेशे चक्षु: संयोगनाशेऽपि द्रव्यत्वप्रकारकचाक्षुषत्वापत्ति: । कथमिति चेत् यत्र लौकिकविषयताकप्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयत्वेन कारणतया तादात्म्यसम्बन्धस्यापि तादृशसम्बन्धत्वात् तत्र द्रव्यत्वप्रकारकसामान्यलक्षणाजन्यचक्षुरिन्द्रियजन्यप्रत्यक्षोत्तरं चक्षु:संयोगनाशकालेऽपि द्रव्यत्वप्रकार-कचाक्षुषापत्ते: । अत: चाक्षुषपदमिति । चाक्षुषपदं चाक्षुषत्वावच्छिन्नार्थकम् । तेन चक्षुर्निरूपितलौकिकविषय-ताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकताघटकतादात्म्यसम्बन्धाश्रयचक्षुर्विशेष्यकचाक्षुषप्रकारतापन्नद्रव्यस्य सत्त्वात् । अत: तादृशचक्षु:संयोगनाशकालेऽपि द्रव्यत्वप्रकारकचाक्षुषानापत्ति: । पुन: शङ्कते लौकिकचा-क्षुषजनकताघटकसम्बन्धेन द्रव्यनिष्ठचाक्षुषत्वावच्छिन्नं प्रति चक्षु:संयोगस्य समवायसम्बन्धेन कारणत्वात् द्रव्यत्वप्रकारकसामान्यलक्षणाजन्यचाक्षुषान्निमीलितचक्षुरिन्द्रियस्यापि द्रव्यत्वप्रकारकचाक्षुषापत्ते: । अत: चक्षुर्निष्ठेति विशेषणम् । तेन चक्षुर्निष्ठलौकिकचाक्षुषजनकताघटकसमवायसम्बन्धा -धिकरणचक्षुरवयवविशेष्यक-चाक्षुषप्रकारतापन्नद्रव्यत्वस्य सत्त्वान्नापत्ति: ।

जनकतायां चक्षुर्निष्ठत्वं चाक्षुषनिरूपितत्वञ्च द्वयमपि किमर्थम् ? तत्स्थाने चक्षुष्ट्वावच्छिन्नलौकिकविष-यत्वावच्छिन्नजन्यतानिरूपितजनकत्वमेव निवेश्यताम् । तेनैव पूर्वोक्तदोषाणां वारणं भवति । तत्र उच्यते प्रकारान्तरस्य प्रकारान्तरादूषकत्वात् । तत्र चक्षु:सन्निकृष्टायोग्यत्वमपि निवेशनीयम् । अन्यथा यत्र विनश्यदवस्थचक्षुसंयोगाश्रयघटविशेष्यकद्रव्यत्वसामान्य -लक्षणाजन्यचक्षुषरिन्द्रियजन्यप्रत्यक्षोत्तरं गगने चक्षु:संयोग: तत्र चक्षु:सन्निवृष्टगगनविशेष्य -कचाक्षुषप्रकारतापन्नद्रव्यत्वस्य सत्त्वेन तदुत्तरं द्रव्यत्वप्रकारकचक्षुरिन्द्रियजन्य-प्रत्यक्षत्वापत्ति:स्यात् । चक्षु:सन्निकृष्टायोग्यत्वनिवेशे चक्षुरवयवस्यायोग्यत्वात्तद्विशेष्यकचक्षुन्द्रियजन्यप्रत्य-क्षसत्त्वेऽपि तत एव निमीलितनेत्रस्य नोक्तस्थले चाक्षुषापत्ति: ।

अत्र पुन: शंकते यत् समवायसम्बन्धस्यैक्यमते चक्षुर्निरूपितसमवायसम्बन्धस्यापि घटादावपि सत्त्वात् तद्विशेष्यकचक्षुन्द्रियजन्यप्रत्यक्षमादाय निमीलितनयनस्य तादृशस्थले चाक्षुषापत्तिरत: चक्षुर्निष्ठत्वं जनकतायां निवेशनीयमथच चाक्षुषनिरूपितत्वमपि निवेशनीयम् । पूर्वोक्ततादृशजनकत्वनिवेशे महद्गौरवम् ।

बहिरिन्द्रियस्य लौकिक: सम्बन्ध: इति । अत्र स्वायोग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञानजनकत्वात्

बहिरिन्द्रियस्य भवति । स्वयोग्यावृत्तित्वे सति स्वायोग्यवृत्तित्वमिति स्वायोग्यमात्रनिष्ठत्वम् । यथा सौरभमिति ज्ञाने अर्थात् सौरभमात्रविशेष्यकज्ञाने स्वायोग्यमात्रनिष्ठत्वं सम्भवति । अत: तज्जनकत्वनियमोऽपि बहिरिन्द्रियस्य स्वीकरणीयम् । एवं सति सौरभमुख्यविशेष्यकप्रमेयमित्याकारकज्ञानाभावात् । यतो हि प्रमेयत्वसामान्यप्रयोज्य-विशेष्यताया: नानात्वात् । तेन स्वायोग्यमुख्यविशेष्यकत्वं सौरभमुख्यविशेष्यकप्रमेयमित्याकारकज्ञानेऽपि स्यात् । न चेष्टापत्ति:, मात्रपदस्य वैयर्थ्यं स्यात् । पुन: तत्रापि इष्टापत्ति: । तत्र उच्यते स्वविशिष्टप्रकार-ताशालिज्ञानाजनकत्वमिति । स्ववैशिष्ट्यञ्च प्रकारतायां स्वायोग्यनिष्ठमुख्यविशेष्यत्वानिरूपितत्वस्वायो-ग्यनिष्ठमुख्यविशेष्यतानिरूपितत्वोभयसम्बन्धेन । अत्र स्वपदेन चक्षुरादे: ग्रहणम् । तेन प्रमेयत्वसामान्यलक्षणा-जन्यप्रत्यक्षस्य बाधो न भवति । स्वविशिष्टप्रकारताशालिज्ञानाजनकत्वस्य स्वयोग्येतरनिष्ठमुख्यविशेष्यता- कज्ञानाजनकत्वमित्यर्थ: । अत्र स्वयोग्येतरनिष्ठमुख्यविशेष्यत्वञ्च स्वयोग्यवृत्तिविशेष्यताप्रयोजकीभूतालौ-किकसन्निकर्षाप्रयोज्यत्वम् । तेन प्रमेयत्वसामान्यलक्षणजन्यप्रत्यक्षस्य संग्रहो भवति । एवं सौरभादिनिष्ठलौ-किकालौकिकमुख्यविशेष्यताकसौरभत्वप्रकारकचाक्षुषप्रत्यक्षस्यापि संग्रह: । अथवा स्वविशिष्टमुख्यविशेष्य-ताकज्ञानाजनकत्वं स्वयोग्येतरनिष्ठमुख्यविशेष्यत्वम् । स्ववैशिष्ट्यञ्च स्वयोग्येतरनिष्ठत्व-स्वयोग्यवृत्तिमुख्य-विशेष्यता प्रयोजकालौकिकसन्निकर्षाप्रयोज्यत्वोभयसम्बन्धेन ।

केचिद् वदन्ति यत् बहिरिन्द्रिये स्वायोग्यमात्रनिष्ठमुख्यविशेष्यताकज्ञानाजनकत्वञ्च स्वयोग्यवृत्तिवि-षयत्वावच्छिन्नमुख्यविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसामान्यलक्षणासंसर्गावच्छिन्नकारणत्वाभाववत्त्वम् । एवञ्च सामान्यलक्षणा ज्ञानलक्षणा सम्बधेन चक्षुरादेरेव जनकत्वम् । तेषामलौकिकसन्निकर्षत्वात् । तादृशकारणतावच्छेदकसंसर्गत्वञ्च सामान्यलक्षणादे: स्वजन्यचाक्षुषादिसामग्रीकालीनसामान्यविषयक-ज्ञानसम्बन्धेन ।

अन्ये वदान्ति यत् स्वयोग्यवृत्तिविशेष्यताप्रयोजकालौकिकसन्निकर्षाप्रयोज्यत्व-स्वयोग्यमात्रवृत्तिधर्म-निष्ठप्रकारतान्यतरवत् स्वायोग्योत्तरनिष्ठमुख्यविशेष्यताशालिज्ञानाजनकत्वं स्वयोग्यमात्रनिष्ठमुख्यविशेष्यताक- ज्ञानाजनकत्वं भवति । तेन प्रमेयं सौरभमिति प्रत्यक्षप्रसंग: स्यादिति परास्तम् । तन्मतं न समीचीनम् । एतन्मते सामान्यविषयकज्ञानस्य प्रत्यासत्तित्वात् तदानीं सौरभत्वसामान्यलक्षणाया: सत्त्वात् तस्या एव विशेष्यतान्तरप्रयोजकत्वात् । अत: तादृशविशेष्यतायां स्वायोग्यमात्रवृत्तिधर्मप्रकारतानिरूपितत्वनिवेश: आवश्यक: । अत: न काप्यनुपपत्ति: ।

अत्र कार्यकारणभावस्तु स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तत्प्रकारकप्रत्यक्षं प्रति स्वविषयीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तद्विषयकज्ञानं कारणमिति । तत्र उच्यते निर्विकल्पकोत्तरं घट इति प्रत्यक्षस्य यावद् घटमुख्यविशेष्यकत्वापत्ति: । तादृशापत्ते: इष्टत्वात् । तद्विषयकत्व-तत्प्रकारकत्वयो: समशरीरत्वात् तद्विषयकत्वेनैव कारणत्वं स्वीकरणीयम् । यतो हि विनिगमनाभावात् । तत्र उच्यते जगदीशतर्कालङ्कारा: प्राथमिके विशिष्टप्रत्यक्षे सौरभादिमुख्यविशेष्यकज्ञानोत्तरं जायमाने सुरभिचन्दनमित्यादिप्रत्यक्षे व्यभिचार: स्यात् । अत: तत्प्रकारकज्ञानत्वनिवेश: ।

कार्यकारणभावे तत्पुरुषीयत्वानिवेशे न व्यभिचारः । यतो हि यस्य कस्यचिद् पुरुषस्यान्तत ईश्वरस्य च घटत्वसौरभत्वादिप्रकारकज्ञानसत्त्वात् । तत्पुरुषीयत्वानिवेशे यादृशस्थलविशेषे रामस्य घटत्वादिप्रकारकज्ञानदशायां मोहनस्य घटे चक्षुः संयोगदशायामपि सामान्यलक्षणाजन्यप्रत्यक्षत्वापत्तिः ।

समवायघटितसामानाधिकरणप्रत्यासत्त्या विशिष्टबुद्धिं प्रति विशेषणज्ञानत्वेन कारणत्वात् तदापत्त्यभावादिति । चेन्न । यत्र समवायसम्बन्धेन घटत्वप्रकारकज्ञानकाले कालिकसम्बन्धेन मोहनस्य घटत्वप्रकारकं ज्ञानं तत्र समवायसम्बन्धेन घटत्वप्रकारकज्ञानवतः रामस्य कालिकसम्बन्धेन तदाश्रयप्रत्यक्षापत्तिः । यतो हि तदानीं कालिकेतरसम्बन्धानवच्छिन्नतन्निष्ठविषयताशालिपुमन्तरीयज्ञानस्य सत्त्वात् । अतः तत्पुरुषीयत्वस्य निवेश आवश्यकः ।

नव्यमतेऽपि तत्प्रकारकत्वेन कारणत्वे व्यभिचारः स्यात् । यतो हि चन्दने सौरभमित्यादिज्ञानोत्तरं उत्पस्यमाने सुरभिचन्दनमिति प्रत्यक्षे व्यभिचारः । अतः तत्पुरुषीयत्वनिवेशस्यावश्यकत्वात् । तद्विषयताशालिज्ञानत्वेन हेतुत्वमुक्तम् ।

केचिन्मते कारणतावच्छेदकसम्बन्धेन प्रत्यक्षविषयतायाः सन्निकर्षस्य व्याप्यत्वमिति, नतु समवायसम्बन्धेन ज्ञानलक्षणायाः कार्यकारणभावस्य निर्वाच्यत्वात् तन्नियमः ग्रन्थकारानभिप्रतः । ग्रन्थकृतो तु प्रकारतासम्बन्धेन तत्पुरुषीयप्रत्यक्षं प्रति विषयतासम्बन्धेन तत्पुरुषीयज्ञानत्वेन हेतुतायाः अभिप्रेतत्वात् ।

अत्र प्रश्न उदेति यत् कार्यतावच्छेदके घटत्वादिप्रकारकत्वस्य कारणतावच्छेदके घटत्वादिविषयकत्वस्य च निवेशः व्यर्थो भवति । यतो हि स्वप्रकारीभूतसामान्याश्रयनिष्ठविशेष्यतासम्बन्धेन तदीयप्रत्यक्षं प्रति स्वविषयीभूतसामान्याश्रयनिष्ठविषयतासम्बन्धेन तदीयज्ञानत्वेन हेतुत्वस्य कल्पनीयत्वात् । एवं कृते समवायसम्बन्धेन घटत्वप्रकारकज्ञानात् कालिकसम्बन्धेन घटत्वप्रकारकप्रत्यक्षापत्तिः स्यात् । तद्दोषवारणाय तत्सम्बन्धावच्छिन्न-प्रकारताश्रयं यत्सामान्यं तदाश्रयनिष्ठविशेष्यतासम्बन्धेन प्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नस्वविषयताश्रयं यत्सामान्यं तदाश्रयनिष्ठविषयतासम्बन्धेन ज्ञानं कारणमिति करणे न तादृशप्रत्यक्षत्वापत्तिः । एवं कृते सम्बन्धघटकत्वेन सम्बन्धभानानङ्गीकारमते समवायसम्बन्धावच्छिन्नप्रकारताश्रयनिष्ठविशेष्यत्वादेः कार्यतावच्छे-दकसम्बन्धत्वाभावात् कार्यतावच्छेदककोटौ घटत्वादिकप्रकारकत्वादिनिवेशमावश्यकमिति । जगदीशतर्कालङ्कारेण तत्सम्बन्धावच्छिन्नतत्प्रकारकतदाश्रयप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नतन्निष्ठविषयताशालिज्ञानत्वेन कारणत्वमुक्तम् ।

अत्र जगदीशतर्कालङ्काराः वदन्ति यत् तत्सम्बन्धावच्छिन्नतत्प्रकारकतदाश्रयप्रत्यक्षं प्रति तदितरसम्ब-न्धानवच्छिन्नतन्निष्ठविषयताशालिज्ञानं कारणमिति । यदि तद्विषयकज्ञानं कारणमित्युच्यते तदा समवायसम्बन्धावच्छिन्नघटत्वप्रकारकज्ञानात् कालिसम्बन्धेन तदाधिकरणस्य कालादेः प्रत्यक्षत्वापत्तिः स्यात् । अस्मिन् जगदीशकल्पे प्राथमिकघटत्वविशिष्टबुद्ध्युत्तरं पटत्वं जानामीत्यनुव्यवसाये व्यभिचारः स्यात् । तादृशानुव्यवसायस्य विषयतासम्बन्धेन सामान्यलक्षणास्थले तादृशसम्बन्धेन घटत्वप्रकारकप्रत्यक्षं प्रति तदितरसम्बन्धानवच्छिन्नत्वेन हेतुत्वमनिवेश्य घटत्वविषयताशालिनिश्चयत्वेनैव कारणत्वं वक्तव्यमिति ।

तदुपरि जगदीशतर्कालङ्कारा: वदन्ति यत् घटवदित्युपनीतचक्षुरिन्द्रियजन्यप्रत्यक्षस्यापि घटादिमुख्यविशेष्यत्वापत्ति: । यदि तादृशकार्यकारणभावस्यापादकत्वादिष्टापत्तौ इत्युच्यते तदा 'उपनीतं विशेषणतयैव भासते' इति नियमविरोध: स्यात् । अत: मुख्यविशेष्यतया द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चाक्षुषलौ- किकसन्निकर्षाभावविशिष्टज्ञानत्वेन विषयतया प्रतिबन्धकत्वं स्वीकरणीयम् । तस्मात् कारणात् भूतलादिविषयकज्ञाने सत्यपि लौकिकसन्निकर्षदशायां तन्मुख्यविशेष्यकलौकिकप्रत्यक्षं भवतीति ।

सुरभिचन्दनमित्यस्य सौरभत्वेन चन्दनमहं जानमीत्यनुव्यवसायार्थ: । अत्र सोरभत्वज्ञानार्थं ज्ञानलक्षणाया: प्रत्यासत्ति:स्वीकारोऽनुचित: । यतो हि सामान्यलक्षणया सौरभत्वप्रकारकसौरभविशेष्यकभानस्वीकारेणैव कार्यसम्भवे सौरभमुख्यविशेष्यकमानसे तादात्म्यसम्बन्धेन सौरभस्याप्रतिबन्धकत्वात् । तदुपरि उच्यते चन्दनांशे सौरभत्वप्रकारताप्रयोजिका ज्ञानलक्षणैव । तथा च न हि तत्र सुरभिगन्धस्य भानसम्भव: । तत्र उच्यते सौरभस्य भानसत्त्वेऽपि चन्दनांशे सौरभत्वप्रकारताया: प्रयोजकत्वेन ज्ञानलक्षणाया: प्रत्यासत्तित्वस्याश्यकत्वात् । एवं रीत्या सामान्यलक्षणाया: संक्षेपेण विचार: कृत: ।

**सन्दर्भग्रन्था:**


१. तत्त्वचिन्तामणि:

२. सामान्यलक्षणा जागदीशी

३. मुक्तावली

४. कारिकावली

५. सामान्यलक्षणा क्रोडपत्रम्



वरिष्ठसहायकाचार्य:, नव्यन्यायविभाग:

राष्ट्रियसंस्कृतसंस्थानम्

(मानितो विश्वविद्यालय:)

श्रीसदाशिवपरिसर:, पुरी

# भेदार्थकपदयोगेऽन्वयबोधविचार:

डॉ. कुञ्जबिहारी द्विवेदी

''गुणो द्रव्याद् भिन्न:'' इत्यत्र ''अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते'' इतिसूत्रेण पञ्चमी विधीयते । सूत्रस्थान्येतरपदेन भिन्नपदस्यापि ग्रहणात् । परन्तु सूत्रे अन्यार्थकथनेनैव भिन्नेतरादीनामपि ग्रहणसंभवात् घटादितर: इत्यत्र पञ्चम्युपपत्त्यर्थं इतरपदोपादानं व्यर्थमिति शङ्का जायते तत्र यद्येवमुच्यते यत् अन्येतरपदयोरेकस्य अन्योन्याभावविशिष्टार्थकत्वमस्ति द्वितीयस्य च पृथक्त्वरूपगुणविशिष्टार्थकत्वं तदा 'पृथग्बिनानानाभिस्तृती- याऽन्यतरस्याम्' इतिसूत्रे पृथक्पदोपादानं व्यर्थं स्यात् तत्र वक्तुं शक्यते पृथक्बिनेतिसूत्रे पृथक्ग्रहणं वैकल्पिकतृतीयाविधानार्थमुक्तम् । वस्तुत अत्र पृथक्पदमसाहित्यार्थकं न तु गुणविशिष्टार्थकम् यथा दुनोति चन्द्रात् पृथगप्यनङ्ग:'' चन्द्रासहितोऽपि मन्मथ: पीडयति इत्यर्थ: । सूत्रेऽन्यादिपदमन्योन्याभावार्थकं नास्ति अन्योन्याभावरूपार्थस्वीकारे 'घट:पटो न' इत्यादौ नञ: अन्योन्याभावार्थकतया पञ्चम्यापत्ति: अन्यपदस्यान्योन्याभावविशिष्टार्थस्वीकारे इतरपदस्यापि स एवार्थ: प्रसिद्ध: । परन्तु भेदस्यासंग्रहेण ''द्रव्याद् गुणस्य भेद:'' इत्यत्र कथं पञ्चमी ? एवं अन्यादिपदस्य पृथक्त्वगुणविशिष्टपरमपि न वक्तव्यम् अन्यथा 'द्रव्यादन्यो गुण:' इत्यत्र पञ्चम्यनुपपत्ति: ''द्रव्यावधिकपृथक्त्ववान् गुण:'' इति बोध: बाधित:, ''गुणे गुणानङ्गीकारात्' अन्योन्याभावार्थस्वीकारे तु तादृशप्रयोग: संगच्छते । निपातातिरिक्तान्योन्याभावार्थकपदप्रयोगे पञ्चमी भवति तेन च घट: पटो न इत्यादौ न पञ्चम्यापत्ति: । वस्तुत: अन्योन्याभावीयप्रतियोगित्वरूपार्थविवक्षायां पञ्चमी भवति । घट: पटो न इत्यादौ च विभक्त्यर्थ: न प्रतियोगित्वमपितु प्रातिपदिकार्थ एव । प्रतियोगित्वन्तु तत्र सम्बन्धतया भासते नतु पदार्थतया (विभक्त्यर्थतया) । आधेयत्वातिरिक्तविभक्त्यर्थ: प्रतियोगित्वेनाऽन्वेति ''भूतले न घट:'' इत्यादौ सप्तम्यर्थाधेयत्वस्य नञर्थाभावे स्वरूपसम्बन्धेन अन्वय: भवति अत: आधेयत्वातिरिक्तेति उक्तम् 'भूतलवृत्तिघटाभाव:' इति तत्र बोध: । न चैत्रस्येदमित्यत्र षष्ठ्यर्थ: नञर्थप्रतियोगी अस्ति । अत्र षष्ठ्यर्थ: स्वत्वं तस्य प्रतियोगित्वसम्बन्धेन नञर्थेऽन्वय: । अत्र हि प्रतियोगित्वं न विभक्त्यर्थ: अतोऽत्र न पञ्चमी ।

अन्येतरपदयोरेकस्य पृथक्त्वगुणविशिष्टार्थस्वीकारे पृथक्त्वगुणास्वीकर्तृमीमांसकमते एकतरोपादानं निरर्थकं स्यादत: एकस्य अन्योन्याभाववाचकत्वम् द्वितीयस्य च अन्योन्याभावविशिष्टवाचकत्वम् तेन घटस्य पटाद् भेद: एवं घट: पटाद् भिन्न: उभयत्र पञ्चम्योपपत्ति: । पटाद्भेद: इत्यादिस्थले क्रियायोगात्पञ्चमीति वक्तुं शक्यते तद्यथा भिदिर् विदारणे पाठादत्र भिद्धातो: घञ् प्रत्यये कृते भेदशब्द: सिद्ध्यति अत: अन्योन्याभावार्थकभेदपदबोध्या क्रियैव एवमत्र भेदस्वरूपक्रियापदार्थस्य प्रतियोगिता पटे वर्तते । धातूपप्यक्रियापदार्थं प्रति कारक: प्रतियोगी भवति इति नियमात् तादृशप्रतियोगिवाचकपदात् पञ्चमी संभवति परन्तु एवं स्थितौ 'घटे वर्तते' इत्यादौ धातूपस्याप्यक्रियापदार्थं प्रति घटस्य कारकत्वेन प्रतियोगित्वं निराबाधम् वृतु धातो: वृत्तित्वमर्थस्तस्य प्रतियोगिताऽपि घटेऽस्ति अत: घटपदोत्तरं पञ्चम्यापत्ति: तस्येदं समाधानं यत् अधिकरणसप्तम्या: परत्वेन पञ्चमीप्रसङ्ग निवर्तते प्रकृते वृतु

धात्वर्थाधेयत्वनिरूपिताधिकरणत्वस्य घटे सत्वात् घटपदोत्तरं सप्तम्येव सम्यक् । अथ घटाद्भेद: इत्यादौ क्रियायोगात्पञ्चमी संभवति परन्तु ''घटादन्यत्वम्''। इत्यत्रान्यत्त्वार्थ: भेद: एव अन्यत्वं तु तद्धित: न तु क्रिया कथमत्र पञ्चमी जाता ? तत्र अन्यपदार्थे विशेषणतया भासमाने भेदे पञ्चम्यर्थप्रतियोगित्वान्वय: स्वीकरणीय: न तु भावप्रत्ययाल्लब्धभेदे । यथा व्युत्पत्तिवैचित्र्येण बहुत्र पदार्थैकदेशेऽन्वय: क्रियते तथैव तद्धितसमासादिरूप-वृत्येकदेशेऽन्वय: कर्तव्य: । तदुक्तम् –

प्रतियोगिपदादन्यत् यदन्यत् कारकादपि ।

वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यते ।।

प्रतियोगिकारकाभ्यामन्यस्य न वृत्येकदेशेऽन्वय:, प्रतियोगिकारकयोस्तु भवत्येव प्रकृते घटरूपप्रतियोगिन: सत्वात्तस्यैकदेशेऽन्वय: इति पञ्चम्योपपत्ति: । तत्र सम्यक् प्राधान्येन भावप्रत्ययाद् भासमानेऽप्यन्यत्वे घटादिप्रतियोगिनां विवक्षया अन्वय: स्वीकार्य: अत: प्रपञ्चार्थमन्येतरपदद्वयोपादानम् घटान्यत्वमित्यत्र त्वप्रत्ययार्थे भेदेऽन्वयाय सूत्रेऽन्यपदम् घटादन्य: इत्यत्र विशेषणीभूतभेदेऽन्वयायेतरपदं सूत्रे उपात्तम् । वस्तुतस्तु अन्येतरपदं स्वरूपपरमर्थात् अन्येतरपदद्वयमेव ग्रहीतुमुक्तम् । अन्येतरार्थपरत्वे घटादन्य: इतिवद् 'घटादेक:' इतिप्रयोगापत्ते: । ''एके मुख्यान्यकेवला:'' इति कोशादेकस्य अन्यार्थकत्वं निर्विवादम् । अत्रैतज्ज्ञातव्यम् यत् एकपदस्य अन्यत्वेन रूपेण अन्यार्थकत्वं नास्ति अपितु बुद्धिस्थविषय: एव एकपदेन बोध्यते अर्थात् एकपदेन प्रासङ्गिक: घटादि: ज्ञायते यथा चैत्र: एकमानयति मैत्रश्चापरम्' इत्यादौ घटत्वपटत्वादिरूपेणैव एकपदार्थे घटपटादौ आनयनकर्मत्वं प्रतीयते । न तु घटान्यत्वपटान्यत्वादिना । एकपदं यदि अन्यत्वेन रूपेणान्वयार्थबोधकं स्यात्तदा प्रतियोगिनं विना एकपदस्य प्रयोगो न स्यात् । प्रतियोग्यन्तरेणान्यपदप्रयोग: न भवति यथा घटादन्य: न तु केवलमन्य इतिप्रयोग: । अन्येतरपदस्य स्वरूपपरत्वपक्षे 'घटादेक:' इति प्रयोग: असाधु: एवञ्च पञ्चमीं परित्यज्य 'घटस्येक:' इति ''शेषे षष्ठी' सूत्रेण षष्ठ्यापत्ति: अत्र षष्ठ्या प्रतियोगित्वं नार्थ अपितु सम्बन्ध: । अन्यार्थकत्वपक्षे च अन्यार्थकतदादियोगेऽपि पञ्चम्यापत्ति: एवञ्च य: खलु नीलघटादन्य: स: घट: ग्राह्य इत्यस्य स्थाने घटात्स: इति प्रयोगापति: । तेन निर्णीयते स्वरूपपरत्वपक्ष: स्वीकरणीय: एवं स्थितौ ''पटाद् भिन्नम्'' ''घटाद् भिद्यते'' इत्यादौ कथं पञ्चमीति शङ्का ?

तत्रोच्यते – भिद्धातो: नान्योन्याभावोऽर्थ: । अत्रेयं स्थिति: भिदिर् विदारणे धातो: रुधादिगणे पाठ: उभयपदी चायं धातु: ''रुधादिभ्य: श्नम्'' इति सूत्रेणात्र गणे श्नम् विकरणं भवति तेन च भिनत्ति ''भिन्ते'' इति परस्मैपदे आत्मनेपदे च क्रमेण रूपम् धातुरयं सकर्मक: तेन चैत्र: काष्ठं भिनत्ति इति प्रयोग: । अन्योन्याभावार्थकभिद्धातो: सकर्मकत्वे ''घटाद्भिनत्ति पट:'' इति प्रयोगापत्ते: तस्माद्भेदार्थकधातुरकर्मक एव ? एवञ्च ''भिद्यते पट:'' इति कथं प्रयोग: आत्मनेपदे, यक्प्रत्यय: कर्मवाच्ये प्रवर्तते न तु कर्तृवाच्ये, कर्तरि यक् आत्मनेपदे न संभवति । भिद्यते इति रूपं यथा 'विद्यते मन्यते' इत्यादि कर्तृवाच्ये दिवादिगणे

भवति तथा प्रतीयमानमाभाति तन्न सम्यक् दिवादिगणे अस्य धातो: पाठाभावात् ''दिवादिभ्य: श्यन्'' इत्यस्य न प्रवृत्ति: अत: कर्तरि आत्मनेपदं तथारूपमिति न वक्तुं शक्यते । भिद्यते: कुसूल:' इत्यत्र भिदेर्विदारणार्थकत्वेन कर्मकर्तृ विवक्षा संगच्छते अकर्मकधातोस्तु कर्मण: अभावात् कथं कर्मकर्तृ विवक्षा ? णिच: प्रयोगे तु कर्मकर्तृ विवक्षा संभवति तत्र अण्यन्तावस्थायां वर्तमानस्य कर्तु: ण्यन्तावस्थायां कर्मत्वात् (प्रयोज्यकर्तु: कर्मत्वात्) ण्यर्थान्तर्भाविन कर्मवाच्ये प्रयोगे 'आस्यते स्वयमेव' इत्यादिवत् कर्मकर्तृविवक्षा संभवति । परन्तु सोऽपि मार्ग: अत्र नानुसर्तुं शक्यते एवं हि णिच: कृते भेदात्मकव्यापारानुकूलभेदात्मकव्यापार: इत्यर्थ स्यात् धातो: । तच्चात्र असंभव: भेदस्य नित्यत्वात् तत्रानुकूलत्वं न संघटते । तस्मादन्यत्वेन ज्ञापनं भिदेरर्थ: वक्तव्य: । ज्ञापनार्थकभिद्धातो: सकर्मकत्वमपि ज्ञेयम् । पृथिवी इतरेभ्यो भिद्यते इत्यस्य पृथिवी इतरेभ्योऽन्यत्वेन ज्ञाप्यते इत्यर्थ: ।

**सन्दर्भग्रन्थसूची —**


१. व्युत्पत्तिवाद: – गूढार्थतत्त्वालोक:

२. व्युत्पत्तिवाद: – आदर्श

३. सिद्धान्तकौमुदी – बालमनोरमा

४. शब्दशक्तिप्रकाशिका

५. व्युत्पत्तिवाद: – जया



संविदाध्यापक:

नव्यन्यायविभाग:

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसर:, पुरी

# न्यायशास्त्रे ईश्वरानुमाननिरासः

डाँ. पीताम्बरमिश्रः

न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धः न दुर्बलैः ।
सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना ।।[१]

इति उदयनाचार्यैरुक्तम् । तदर्थस्तु ईश्वरस्यासिद्धौ ईश्वरनास्तित्वतदकर्तृत्वतच्छरीरत्वसाधकैः अनुमानै ईश्वरानुमानस्य बाधो न सम्भवति, तत्र पक्षभूतस्य ईश्वरस्यैवासिद्धत्वात् । अनुमानसिद्धमीश्वरं पक्षीकृत्य तन्निरसनन्तु न सम्भवति । धर्मिग्राहकप्रमाणेन ईश्वरानुमानेनैव प्रतिपक्षानुमानस्य बाधितत्वात् ।

न हि दुर्बलानि प्रतिपक्षानुमानानि ईश्वरानुमानं बाधितुं प्रभवन्ति । यद्ययं कार्यत्वहेतुः घटादौ शरीरादिमत्कर्तृकत्वव्याप्तो दृष्टः इति पक्षेऽपि क्षित्यङ्कुरादौ शरीरादिमत्कर्तृकत्वमेव साधयति इत्युच्यते । तदा अस्माकं न विरोधः ।[२]

यदि क्षित्यङ्कुरादौ शरीरिकर्तृकत्वादिकं योग्यानुपलब्धिपराहतमित्ययं कार्यत्वहेतुः शरीरादिकं न साधयेत् इत्युच्यते, तदा अशरीरत्वे ईश्वरस्य न कोऽपि विरोधः । एतदेवोच्यते सिद्ध्यसिद्ध्योर्विरोधो नो इति[३] । एवं व्याप्तेः अन्वयव्यतिरेकाभ्यां भूयोदर्शनेन च गृहीतत्वात् व्याप्यत्वासिद्धिः न दोषः इति ईश्वरानुमानं निर्दुष्टमिति नैयायिकमतम् ।

अत्र सिद्धान्तः । विरोधो सिद्धे निषेधस्यानुपपन्नत्वादसिद्धे च निरोधेऽसतः निषेधस्यासम्भवाच्च[४] । एतदेव श्लोकेन उक्तम्–

सिद्ध्यसिद्ध्योविरोधो नेत्येवं प्रलपतस्तव ।
विरोधसिद्ध्यसिद्ध्योश्च तन्निषेधो निषिध्यते ।।[५]

किञ्च विशेषविरोधोऽपि वक्तव्यः । कर्तृत्वस्य शरीरित्वेन व्याप्तत्वात् शरीरित्वविरोधात् अशरीरित्वरूपविशेषस्य विरोधो भवति । यदि घटादिविलक्षणस्य अङ्कुरादेः पक्षीकरणात् लोकदृष्टविलक्षणः शरीरानपेक्षनित्यज्ञानादिमान् कर्ता सिद्ध्येत् । तदा ''हिममग्निमत् तृणादि-मर्मरीभावहेतुत्वात्'' इत्यनुमानेन सिद्ध्यन्नाग्निः पक्षीभूतहिमे पक्षधर्मताबलात् शीताग्निः सिद्ध्येत् ।[६] अयं विषयः शास्त्रदीपिकायामपि प्रतिपादितः ।

तृणादिमर्मरीभावहेतुत्वादग्निमद्धिमम् ।
इति कृत्वा पक्षबलात् शीताग्निर्नहि कल्प्यते ।।[७]
व्यापकत्वेन दृष्टस्य पक्षसम्बन्धमात्रतः ।
अधिकांशग्रहे हेतुः पक्षधर्मोऽपि न क्षमः ।।[८] इति ।

अनेन क्षित्यादिषु कार्यत्वेन हेतुना ज्ञानादिकमेव सिद्ध्येत् । न तु तस्य नित्यत्वसर्व-विषयकत्वशरीरानवच्छिन्नत्वादिकमिति लभ्यते । यदि कार्यत्वेन हेतुना क्षित्यादौ तद्धेतुभूतं ज्ञानादिकमेव सिद्ध्यति चेदपि अधिकांशः नित्यत्वादिः परिशेषादिना सेत्स्यति इत्युच्यते । तदापि परिशेषानुमानस्य दुर्वचत्वं दोषः ।[९]

ननु सपक्षे साध्यं यादृशरूपविशिष्टं दृष्टं तादृशरूपस्य निःशेषतया भङ्गः अभिप्रेतः । तेन प्रकृते सपक्षे घटादौ असर्वज्ञशरीरिकर्त्तृकत्वादिरूपस्य दर्शनेऽपि पक्षे तद्रूपस्य त्यागः एवेति क्षित्यादिकर्तुः सर्वज्ञत्वे अशरीरत्वे च न दोष इति चेन्न । सपक्षे साध्यं यादृशं दृष्टं तद्विलक्षणस्य पक्षे साधने ज्ञानचिकीर्षादिकमपि क्षित्यादिहेतुतया न सिद्ध्येत् । तादृशस्यैव साध्यस्य साधने कर्तुः शरीरनिरपेक्षनित्यज्ञानवत्त्वं न सिद्ध्येत् ।[१०]

दृष्टजातीयनिश्शेषभङ्गे साध्यं न सिद्ध्यति ।
अभङ्गे नाधिकं सिद्ध्येत् न च सामान्यतः स्थितिः ।।[११]

'न च सामान्यतः स्थितिः' इत्यस्य एवं व्याख्यानं कृतं रङ्गरामानुजस्वामिभिः - अनुभूति-स्मृतिहेत्वजन्यत्वेन गुणदोषाजन्यत्वेन च ईश्वरज्ञानस्य भ्रमप्रमानुभूतिस्मृतिवैलक्षण्यप्रसङ्गात् निर्विशेषसामान्यभावाच्च ज्ञानसामान्यस्य सिद्धिः ईश्वरानुमानेन वक्तुं न शक्यते ।[१२] इति ।

महामहोपाध्यायकृष्णताताचार्यविरचितायां 'रत्नपेटिकायाम्' 'तृणादिमर्मरीभावहेतुत्वात्' इत्यादिग्रन्थस्य एवं व्याख्यान्तरं कृतम् । तथाहि- यथा महानसीयवह्न्याभाववान् पर्वतः इति बाधजनकदशायां पर्वते वह्निव्याप्यधूमवत्ताज्ञानात् महानसीयेतरवह्निमान्नित्यनुमितिर्भवति । तथैव योग्यानुपलब्ध्या क्षित्यादौ शरीरादिमत्कर्तृकत्वाभावे सिद्धे सकर्तृकत्वव्याप्यकार्यत्वहेतुनैव शरीरादिमद्भिन्नकर्तृकत्वं सिद्ध्यतीति तार्किकाणामाशयः ।[१३] तत् खण्ड्यते 'तृणादिमर्मरीभावः' इति ग्रन्थेन ।

अयं भावः - 'हिमं शीतेतरवह्न्यभाववद्' इति विशेषबाधज्ञानसहकारेण रूपादिपरावृत्ति-रूपमर्मरीभावहेतुत्वनिष्ठाग्निनिरूपितव्याप्तिज्ञानात् 'हिमं शीताग्निमत्' इत्यनुमितिप्रसङ्गभिया विशेषबाधसहकारेण सामान्यधर्मावच्छिन्ननिरूपितव्याप्तिज्ञानस्य बाधितेतरविशेषानुमापकत्वं न स्वीकर्तव्यमिति ।

अत्र 'रत्नपेटिकायाम्' नवीनतार्किकप्रक्रियाविस्तरेण निरूपिता । पर्वतादौ महानसीय-वह्निवत्तानिश्चयरूपस्य विशेषबाधस्य सत्वेऽपि वह्नित्वावच्छेदेन महानसीयत्ववत्तानिश्चयदशायां महानसीयेतरवह्निमान्नित्यनुमितिर्न जायते । एवं काञ्चनमयेतरवह्न्यभाववान्निति विशेषबाधसत्त्वेऽपि वह्नित्वावच्छेदेन काञ्चनमयेतरत्वनिर्णयदशायां काञ्चनमयवह्निमान्नित्यनुमिति र्न जायते । अतो विशेषबाधसहायेन बाधितेतरविधेयकानुमितिस्थले तत्प्रतिबन्ध-निर्णयविरहोऽपेक्षित एव । महानसीयेतरवह्निमान् इत्यनुमितिं प्रति वह्नित्वावच्छेदेन महानसीयत्वज्ञानं प्रतिबन्धकम् । अत एव काञ्चनमयेतरवह्न्याभाववान् पर्वतः इति बाधज्ञान-सहायेन वह्नेः काञ्चनमयत्वे लाघवमिति लाघवज्ञानसहायेन वा पर्वते वह्निसाधने काञ्चनमयत्वा-भाववद्वह्नेर्बाधत्वं नैयायिकैरुक्तम् ।[१४]

एवञ्च यथा हिमं शीतेतरवह्न्यभाववदिति विशेषबाधसत्त्वेऽपि जगति क्वचिदपि शीतवह्ने-रदृष्टचरत्वेन वह्नित्वावच्छेदेन शीतेतरत्वनिर्णयरूपबाधवशात् 'हिमं शीतवह्निमत्' इत्यनुमितिर्न जायते तथैवाङ्कुरादिषु शरीरादिमत्कर्तृकत्वाभावनिर्णयरूपविशेषबाधसत्त्वेऽपि शरीरादि-रहितकर्तुः क्वचिदप्यदृष्टचरत्वेन कर्तृत्वावच्छेदेन शरीरादिमत्त्वनिर्णयरूपबाधवशान्न शरीरादि-मद्भिन्नकर्तृकत्वानुमितिः सम्भवतीति ।

अपि च महानसीयवह्न्यभाववान् पर्वत इति निश्चयदशायां यदा धूमादीना महानसीयेतर-वह्नित्वावच्छिन्नप्रकारकानुमितिः तदा महानसीयेतरवह्न्याभावविशिष्टधूमत्वावच्छिन्न-व्याप्तिज्ञानादेव तादृशानुमितिर्जायते इति स्वीक्रियते । उक्तव्याप्तिज्ञानस्योक्तजनकतयाः क्लृप्तत्वात्, तदानीं तादृशव्याप्तिज्ञानस्य सम्भवाच्च । अत एतत् सिद्धं यत् सामान्यधर्मावच्छिन्ननिरूपितव्याप्तिज्ञानात् तज्ज्ञाने अगृहीतधर्मप्रकारकानुमितेः स्वीकारः नोचितः । तथा च प्रकृतानुमानेन जायमानानुमितौ कर्तरि शरीरादिमद्भिन्नत्वस्य ज्ञानादौ नित्यत्वस्य च भानासम्भवात् तार्किकेष्टसिद्धिर्न भवतीति ।[१५] अत्र आचार्यैः–

परिशेषानुमानस्याप्यन्वयित्वे समा गतिः ।
केवलव्यतिरेकी तु परस्तान्निरसिष्यते ।।[१६] इत्युक्तम् ।

अयं भावः – कार्यत्वहेतुना कर्तुः सिद्धिः शरीरादिमत्त्वेनैव भवति । घटादिषु सपक्षेषु तथैव व्याप्तेर्गृहीतत्वात् । एवञ्च अनुमानसिद्धमीश्वरमनूद्य तत्र अशरीरत्वविधानमशक्यमुप-जीव्यानुमानविरोधात् इति ।

परिशेषानुमानस्येति श्लोकार्थस्त्वेवम्–अङ्कुरादिकं शरीरादिमत्कर्तृकत्वाभावविशिष्ट-सकर्तृकत्वात् अशरीरकर्तृकमिति भवता साधनीयम् । तत्र हेतुशरीरप्रविष्टः शरीरादिमत्कर्तृक-त्वाभावः किंरूप इति विविच्यते । किमस्मदात्मकशरीरादिमत्कर्तृकत्वाभावः उत शरीरादि-मत्कर्तृकत्वसामान्याभावो वा ? साध्यमपि किमस्मदादिभिन्नकर्तृकत्वरूपमुत शरीरिसामान्यभेद-वत्कर्तृकत्वरूपम् ।[१७]

तत्रास्मदाद्यकर्तृकत्वाभावसहितसकर्तृकेन हेतुना विश्वामित्रादिसृष्टवस्तुविशेषदृष्टान्तेना-स्मदादिभिन्नकर्तृकत्वं यदि साध्यते । तदा सपक्षदृष्टव्याप्त्या शरीरादिमत्कर्तृकत्वमेव सिद्ध्येदिति कार्यत्वलिङ्गकानुमानतुल्यत्वमेव । यदि शरीरादिमत्कर्तृकत्वसामान्याभावसहितसकर्तृकत्वहेतुना अस्मदादिभिन्नकर्तृकत्वं शरीरादिमत्त्वावच्छिन्नभेदवत्कर्तृकत्वं वा साध्यते । तदा केवलव्यतिरेकी निरसनेन तन्निरसनं भविष्यति ।[१८]

नन्वस्मिन्ननुमाने साध्यशरीरप्रविष्टः कर्ता अपि निरूपयितुं न शक्यते । अत्र विकल्पः। सकर्तृकमित्यत्र उपादानादिसमस्तकारणविषयकज्ञानादिमान् कर्तृतया विवक्षितो वा कतिपयविषयज्ञानादिमान् कर्तृतया विवक्षितो वा अथवा सामान्यतः ज्ञानादिमान् कर्तृतया विवक्षितो वा इति ।[१९]

तस्यार्थस्तु किं स्वनिरूपितकारणताश्रययावद्विषयकज्ञानादिमज्जन्यत्वमत्र साध्यतया विवक्षितमुत स्वनिरूपितकारणताश्रयविषयकज्ञानादिमज्जन्यत्वम् । अहोस्वित् ज्ञानाद्यजन्यत्वमिति ।

स्वनिरूपितकारणताश्रययावद्विषयकज्ञानादिमज्जन्यत्वरूपसाध्यस्य कुत्रचित् प्रसिद्धत्वे तादृशसाध्याभाववति घटादौ कार्यत्वरूपहेतोः विद्यमानत्वात् व्यभिचारः । तादृशसाध्यस्य कुत्राप्य प्रसिद्धत्वे साध्याप्रसिद्धिः । इदञ्च साध्यमप्रसिद्धमेव । नहि कुलालादयः घटादिहेतुभूतमदृष्टे-श्वरादिकं सर्वमपि जानन्ति । यदि स्वनिरूपितकारणताश्रयविषयकज्ञानादिमज्जन्यत्वं साध्यं तदा जीवैरेव सिद्धसाधनात् अतिरिक्तेश्वरासिद्धिः । एवं ज्ञानादिमज्जन्यत्वमिति तृतीयपक्षेऽपि सिद्धसाधनमेव दोषः ।[२०]

न च उपादानगोचरापरोक्षज्ञानमेव कर्तृत्वोपयोगि, अस्मदादिषु तदसम्भवात् नाहमङ्कुरादिकं करोमि

इति प्रत्यक्षबाधाच्च अस्मदादिषु कर्तृत्वं तु न सम्भवतीति वाच्यम् 'विश्वामित्रादि' न्यायेन प्रकृष्टादृष्टशालिनि जीवे तत्साक्षात्कारसम्भवात् । उक्तञ्च 'अधिकरण-सारावल्याम्' आचार्यैः अनुमितौ लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्ते विश्वामित्रादिनीत्या स्फुरति विभुमिहासूत्रयच्छास्त्रवेद्यम् इति ।

न च द्रव्याणुकं सकर्तृकं कार्यत्वात् इत्यनुमानेन द्रव्याणुककर्तृत्वेन ईश्वरसिद्ध्यतीति वाच्यम्, अदृष्टद्वारा तत्कर्तृत्वस्यापि जीवे सम्भवात् ।

**टिप्पणी**

१. न्यायकुसुमाञ्जलिः ५/२
२. न्यायसिद्धाञ्जनम्, रत्नपेटिकाव्याख्या, पृ. ३२९
३. न्यायसिद्धाञ्जनम्, श्लो. ८२
४. न्या.सि.रं, पृ. ३२९
५. न्या.स. श्लो. ८२
६. न्या.सि.रं, पृ. ३३०-३३१
७. न्या.स. श्लो. ८४
८. न्या.स. श्लो. ८५
९. न्या.सि.र, पृ. ३३३
१०. न्या.सि.र, पृ. ३३३
११. न्या.स. श्लो. ८७
१२. न्या.सि.र, पृ. ३३३
१३. न्या.सि.र, पृ. ३३१
१४. न्या.सि.र, पृ. ३३४
१५. न्या.सि.र, पृ. ३३४
१६. न्या.सि.र, पृ. ३३४
१७. न्या.सि.र, पृ. ३३१
१८. न्या.सि.र, पृ. ३३२
१९. न्या.सि., पृ. ३३४
२०. न्या.सि.र, पृ. ३३४

संविदाध्यापकः, नव्यन्यायविभागः
श्रीसदाशिवपरिसरः, पुरी

# शाब्दिकानां शब्दस्वरूपनिर्णये पूर्वपक्षस्यावदानम्

डॉ. दुर्गाचरणषडङ्गी

सर्वं वक्तव्यं श्रोतव्यञ्च शब्दाधीनम् । किञ्च लौकिकं वैदिकं वा व्यवहारं शब्दं विना निर्वाहयितुं न शक्यते । अतो भर्त्तृहरिणावाचि–

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवज्ञानं सर्वं शब्देन भासते ।।(वा.प.ब्रह्मकाण्डे)

अपि च प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्येतेषु चतुर्विधप्रमाणेषु वैयाकरणानां मतानुसारेण शब्दो मूर्धन्यभूतं प्रमाणम् । तदुक्तं भगवता पतञ्जलिना महाभाष्ये ''शब्दप्रमाणकाः वयम् । यच्छब्द आह तदस्माकं प्रमाणम् । (पस्पशाह्निक, पृ. ३८ 'चारुदेवशास्त्री') किञ्च सूक्ष्मातिसूक्ष्मपदार्थस्य ज्ञापने यत्र प्रत्यक्षस्यानुमानस्य वा न गतिस्तत्र शब्दस्यैव सामर्थ्यम् । अतः अभिमुक्तैः प्रत्यपादि–

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एनं विदन्ति वेदेन तस्मात् शब्दस्य वेदता ।।(ऋग्वेदभाष्यभूमिका)

अस्माभिः बहवः शब्दाः श्रूयन्ते पठ्यन्ते च । परन्तु सर्वेषां शब्दानामर्थबोधो न भवति । येषां शब्दानामर्थज्ञानमस्ति तेषामेवार्थबोधः । अत्र किं कारणमिति जिज्ञासायामाचार्यैरिदं समाहितम् - शब्दस्यार्थबोधाय शब्दनिष्ठवृत्तिज्ञानं कारणम् । अतः परमलघुमञ्जूषायां नागेशेनालेखि–

''तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुरिति । यद्यपि वृत्तिशब्दो जीविका - आचरण - शास्त्रप्रवृत्ति - उच्चारणविषयाद्यर्थेषु व्यवह्रियते तथापि अत्र सः शब्दः शाब्दबोधजनकपदपदार्थसम्बन्धः एव । अतः सिद्धान्तलघूमञ्जूषायामभ्यधायि पदपदार्थोभयनिरूपितसम्बन्धत्वं वृत्तित्वमिति ।'' (रत्नप्रभाटीका. पृ. १८) वृत्तिज्ञानं विना अर्थबोधासम्भवात् नागेशेनावादि परमलघुमञ्जूषायाम्–

''अतो नागृहीतवृत्तिकस्य, नापि विस्मृतवृत्तिकस्य, नापि तत्पदमजानतः ।''

(शक्तिप्रकरणम्, परमलघुमञ्जूषा)

शाब्दबोधे वृत्तिज्ञानस्य कारणत्वाद् वृत्तिः किम्भूतं शब्दमाश्रयत इति जिज्ञासा मनसि उदेति । तस्य शब्दस्य किं स्वरूपम् ? तद्विषये शास्त्रकाराणां कोऽभिप्रायः ? इति विषयमाधारीकृत्य समासेन किञ्चिदुपस्थाप्यते ?

**मीमांसकानां मतम्—**

मीमांसकाः शब्दो नित्यः इति प्रतिपादयन्ति । परन्तु सः शब्दो वर्णात्मकः । तेषामयमभिप्रायः पदम्भवतु वाक्यं वा भवतु तत्र वर्णानां प्रयोगो दृश्यते । वाक्यस्य किमपि स्वतन्त्रं स्वरूपं नास्ति । केवलं व्यवहारदशायां तेषां वाक्यानां प्रतीतिः । अर्थप्रतिपादने वर्णाः एव समर्थाः तथाहि श्लोकवार्तिके –

विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ।

यावन्तो यादृशा ये च यदर्थं प्रतिपादने
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवार्थबोधकाः ।। (कारिका. ६५,६९)

पदे वाक्ये च मूलम्भवति वर्णः । अश्व - अर्क - अंश इत्यादिषु एकः अकारः । अतः प्रत्याहाराह्निके अइउण्सूत्रे ''एकत्वादकारस्य सिद्धम्'' इति वार्तिकमुपन्यस्तं भगवता पतञ्जलिना । भर्तृहरिणाऽपि अभाणि वर्णव्यतिरिक्तं पदं वाक्यं वा नास्ति । वर्णात्मकमेव पदम्। किञ्च पदानां भिन्नत्वेऽपि वर्णानामेकत्वं न नश्यति । तथाहि वाक्यपदीये–

पदभेदेऽपि वर्णानामेकत्वं न निवर्तते ।
वाक्येषु पदमेकं च भिन्नेष्वप्युपलभ्यते ।।
न वर्णव्यतिरेकेण पदमन्यच्च विद्यते ।
वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन ।। (ब्र.का. ७१,७२)

किञ्च गौरित्यत्र कः शब्दः इति जिज्ञासायामुत्तरं प्रकाशयन्ति आचार्याः शवरस्वामिनो गकारौकार विसर्जनीयाः इति भगवान् उपवर्षः । (मीमांसा शावरवृत्तिः १/१/५) । प्रकरणपञ्चिकायामपि कः शब्दोऽभिमतः इति प्रश्ने इदमुच्यते वर्णाः । तेषामेव श्रोत्रग्राह्यत्वात् । (पञ्चमप्रकरणम्)

**नैयायिकमतम्—**

नैयायिकानां मतानुसारेण ध्वन्यात्मको वर्णात्मकः इति शब्दो द्विविधः । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः । (तर्कसंग्रहप्रत्यक्षपरिच्छेदो न्यायबोधिनीटीका, पृ. २०) किञ्च प्रशस्तपादभाष्येऽपि एतदभिहितं यत् –

शब्दोऽम्बरगुणः श्रोत्रग्राह्यः क्षणिकः कार्यकारणोभयविरोधी, संयोगविभागशब्दजः प्रदेशवृत्तिसमानासमानजातीयकरणः । स द्विविधो वर्णलक्षणो ध्वनिलक्षणश्च । अकारादिवर्णलक्षणः शङ्खादिनिमित्तो ध्वनिलक्षणश्च । (गुणनिरूपणे शब्दप्रकरणम्)

अपि न्यायसिद्धान्तमुक्तावल्याम् एतत्समर्थितम् । तथाहि–

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ।
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।।
सर्वः शब्दन्नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ।
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।। (१६४. १६५)

एतेषां नैयायिकानां सिद्धान्तानुसारेण एतदवगम्यते शब्दोऽनित्यः इति ।

नैयायिकमतं पूर्वपक्षरूपेण उपस्थाप्य नागेशः परमलघुमञ्जूषायां स्फोटात्मकः शब्दो नित्यो वृत्त्याश्रयश्च इत्युपस्थापयति । तथाहि- शब्दोच्चारणकाले पूर्वपूर्ववर्णाव्यवहितोत्तरत्वसम्बन्धेनो - त्तरोत्तरवर्णे पदस्य प्रत्यक्षत्वात् शब्दज्ञानं जायते ।

अथवा वीचितरङ्गन्यायेन यथा एका वीचिः उत्पन्ना सती तरङ्गान्तरमुत्पादयति तथैव एकस्माद् वर्णात् वर्णान्तरस्योत्पत्तिः । यथा रामशब्दे रकारादाकारस्तस्मादूमकारस्तस्मादकारो यथाक्रममुत्पद्यते।

अन्तिमवर्णेऽकारे अव्यवहितोत्तरत्वानुपूर्वीज्ञानस्य विद्यमानत्वाच्छब्दज्ञानं जायते ।

अथवा पूर्वपूर्वानुभवज्ञानजन्यसंस्कारेण चरमवर्णे शब्दज्ञानमुत्पद्यते । अत: आसत्तिप्रकरणे न्यायसिद्धान्तमुक्तावल्यां लिखितमस्ति– ''तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्ते: ।''

**वैयाकरणमतम्–**

मीमांसकनैयायिकयोर्मतं पर्यालोच्य शाब्दिकै: स्वतन्त्रं मतं प्रतिपाद्यते । तेषामयं प्रश्न: - यदि मीमांसकमतं स्वीकृत्य वर्णरूपशब्दो वृत्त्याश्रय: इति स्वीक्रियते तर्हि द्वितीयादिवर्णानामुच्चारणं व्यर्थं स्यात्। किञ्च प्रत्येकं वर्णस्यार्थबोधे तेषां वर्णानामर्थवत्त्वात् प्रातिपदिकसंज्ञायां सत्यां धनं वनमित्यादौ 'न लोप: प्रातिपदिकान्तस्य'' (पा.सू.८.२.७) इति सूत्रेण नकारस्य लोपापत्ति: । नापि वर्णसमुदायो वृत्त्याश्रय: । वर्णस्य उच्चरितप्रध्वंसितत्वात् । अत: पर: सन्निकर्ष: संहिता (१.४.१०८) इति सूत्रे भाष्ये उक्तम्- ''एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति। गौरित्यत्र गकारे यावद् वाक् वर्तते न तावत् औकारे न विसर्जनीये । यावद् औकारे न तावद् गकारे विसर्जनीये च । यदा विसर्जनीये न तावद् गकारे औकारे च । उच्चरितप्रध्वंसिनो वर्णा: कालस्य क्षणस्थायित्वात् ।

अपि च नैयायिकमतं वैयाकरणेभ्यो न रोचते । यतो वर्णस्य उच्चरितप्रध्वंसित्वात् अव्यवहितोत्तरत्वसम्बन्धेन वर्णा: नोपलभ्यन्ते । अत: पदस्य प्रत्यक्षता न स्यात् ।

किञ्च शब्दजशब्दन्यायेन वीचितरङ्गन्यायेन वा शब्दप्रत्यक्ष: असम्भव: । यत: अन्तिमकाले वर्णसमुदायो नोपलभ्यते । अविद्यमाने पदे शक्तिस्वीकारे नष्टो घटो जलवान् इत्यापत्ति: ।

किञ्चानुभवजन्यसंस्कारोऽपि पदप्रत्यक्षनिमित्तं न कारणम् । येन क्रमेणानुभवस्तेनैव क्रमेण संस्कारो विद्यत इत्यस्मिन् विषये प्रमाणाभावात् । कदाचित् विपरीतार्थबोधोऽपि सम्भवति । यथा दीन नदी इति रस: सर इति ।

अतो वैयाकरणा: स्फोटात्मक: शब्दो वृत्त्याश्रय: इति नागेशेनाभिहितम् (परमलघुमञ्जूषायां स्फोटप्रकरणे) मीमांसकवत् वैयाकरणा: अपि 'द्विविध: शब्द:' इति प्रकाशयन्ति । तत्तु ध्वन्यात्मक: स्फोटात्मकश्चेति । अत: गौरित्यत्र क: शब्द: इति जिज्ञासायां पूर्वपक्षेण अनेकमुत्तरमुपस्थाप्य सिद्धान्ते एतत् प्रादर्शि 'भगवता पतञ्जलिना- ''येनोच्चारितेन सास्नालाङ्गुलककुदखुरविषाणिनां सम्प्रत्ययो भवति स: शब्द: ।अत्र येनेत्येकवचनेन विषाणिनामिति बहुवचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितमिति उद्योते अलेखि । (म.भा. पस्पशाह्निकम्) स: स्फोटरूप: शब्द:। अथवा प्रतीतपदार्थको लोके ध्वनि: शब्द: इति । अयं स्फोट: वैयाकरणानां ब्रह्मस्वरूप:, नित्य: शाश्वतश्च । तस्मादेव जगत: प्रक्रिया प्रवर्तते । अतो भर्तृहरिणा अभाणि–

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत: ।। (वा.प., ब्र.का. १/१)

नागेशोऽपि परमलघुमञ्जूषायां प्रतिपादयति - चतुर्विधा वागस्ति । परा-पश्यन्ती-मध्यमा-

वैखरी । परावाक् मूलचक्रस्थाा पश्यन्ती नाभिसंस्थिता । एतद्द्वयं वाग्ब्रह्मयोगिनां समाधौ निर्विकल्पक-सविकल्पकज्ञानविषय इत्युच्यते । परावाग् बिन्दुरूपिणी स्यन्दशून्या । अत: प्रपञ्चसारे उक्तम्–

बिन्दोस्तस्माद् भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।
स एव श्रुतिसम्पन्नै: शब्दब्रह्मेति गीयते ।। (१/४३)

मध्यमा वाग् हृदयदेशस्था । श्रोत्रग्रहणायोग्या, सूक्ष्मा, जपादौ बुद्धिनिर्ग्राह्या स्फोटरूपा च । यदा इयं वाक् कण्ठदेशमागत्य परश्रवणगोचरा भवति तदा सा वैखरीत्युच्यते । वैखरी वाक् भेर्यादिनादवत् निरर्थिका। एकस्मिन् काले मध्यमा-वैखरीभ्यां नाद: उत्पद्यते । मध्यमानाद: अर्थवाचक: स्फोटात्मकशब्दव्यञ्जक: । अतो नागेशो प्रकटयति - ''तादृशो मध्यमानादो व्यङ्ग्य: शब्द: स्फोटात्मको ब्रह्मरूपो नित्यश्च ।'' (प.ल.म. शक्तिप्रकरणम्)

तपरस्तत्कालस्य सूत्रेऽपि महाभाष्ये स्फोट: शब्द: ध्वनि: शब्दगुण: इति लिखितमस्ति ।

एतस्मादनुशीलनादयं सिद्धान्तो निष्पन्नो मीमांसक-वैयाकरणयोर्मते शब्दो नित्यो नैयायिकानां मते तु शब्द: अनित्य: । मीमांसकै: वर्ण: शब्द: इति कथ्यते । वैयाकरणै: स्फोट: शब्द इत्यभिधीयते । स च ब्रह्मरूप:। शाब्दिका: व्यवहारदशायां वर्णान् व्यवहरन्ति । पारमार्थिकदशायां स्फोटरूपशब्दमुपस्थापयन्ति । श्रीमद्भावतेऽपि प्रतिपादितम्–

शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ।
येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मन: ।। (१२/६/४०)

शब्दब्रह्मण: उपासनया एव मुक्तिरिति शाब्दिकानां निष्कर्ष: ।

**सन्दर्भग्रन्थसूची –**


१. महाभाष्यम् ।
२. वाक्यपदीयम् ।
३. परमलघुमञ्जूषा ।
४. प्रपञ्चसार: ।
५. श्रीमद्भागवतम् ।
६. तर्कसंग्रह: ।
७. न्यायसिद्धान्तमुक्तावली
८. प्रशस्तपादभाष्यम् ।
९. श्लोकवार्तिकम् ।
१०. ऋग्वेदभाष्यभूमिका ।
११. सिद्धान्तकौमुदी ।
१२. सिद्धान्तलघुमञ्जूषा ।



सहायकाचार्य:
नव्यव्याकरणविभाग:
श्रीसदाशिवपरिसर:,पुरी

# काव्यशास्त्रे न्यायदर्शनम्

**डॉ. सुशान्तकुमारराजः**

काव्यस्य साहित्यस्य वा तत्त्वप्रतिपादनात्मकं शास्त्रं काव्यशास्त्रं साहित्यशास्त्रं वेति विदितचरमेव। काव्यशास्त्रेऽस्मिन् रसध्वन्यौचित्यवक्रोक्तिरीतिगुणालङ्कारादीनि यानि यानि काव्यतत्त्वानि विचारितानि सन्ति, तेषां सर्वेषां समुद्भावने पर्यालोचने च संस्कृतवाङ्मये विद्यमानानां सर्वेषामपि शास्त्राणं योगदानं समवलक्ष्यते। सर्वेषां शस्त्राणां समवायेन निर्मितत्वात् काव्यशास्त्रं साहित्यशास्त्ररूपेणापि सुख्यातमस्तीति विद्वद्भिरङ्गीक्रियते। तस्मादेव कारणात् काव्यशास्त्रे प्रायतः सर्वाण्येव शास्त्राणि तत्तत्प्रासङ्गिकतया वरीवर्तन्ते इत्यत्र नास्ति काऽपि विप्रतिपत्तिः। प्रबन्धप्रतिज्ञानुरोधेनाऽत्र काव्यशास्त्रे विद्यमानानि न्यायशास्त्रीयतत्त्वानि अनुसन्धेयानि सन्ति।

दार्शनिकचिन्ताधारया न्यायशब्दस्य अर्थो भवति– **नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायः** । अर्थात् येन शास्त्रेण विवक्षितस्य पदार्थस्य सिद्धिर्भवति तदेव न्यायशास्त्रमिति। वात्स्यायनस्य मतानुसारं साध्यस्य सिद्धये प्रतिज्ञाहेत्वादीनि यानि् पञ्चावयववाक्यानि गृह्यन्ते, तान्येव **न्यायपदेन** उच्यन्ते। अतः शास्त्रस्यास्य न्यायशास्त्रम्, अनुमानशास्त्रम्, पदार्थशास्त्रम्, प्रमाणशास्त्रम्, तर्कशास्त्रम्, हेतुशास्त्रमित्यादीनि नैकविधानि नामानि समुपलभ्यन्ते ।नायशास्त्रस्य आदिप्रणेतुः महर्षे गौतमस्य नामानुसारेण गौतमीयशास्त्रमित्यपि व्यवहारो दृश्यते।

**शाब्दबोधे न्यायदर्शनम्-**

न्यायशास्त्रेऽस्मिन् विचारितेषु षोडशपदार्थेषु प्रमाणस्य प्राधान्यं प्राथम्यञ्चाङ्गीक्रियते। पुनश्चात्र प्रत्यक्ष्यानुमानोपमानशब्दा इति चत्वारि प्रमाणानि नैयायिकैः सिद्धान्तितानि सन्ति। तत्र चतुर्षु प्रमाणेषु यद्यपि अनुमानप्रमाणस्य प्राधान्यं न्यायशास्त्रे वर्तते तथापि तत्र शब्दप्रमाणस्यास्ति महत्त्वपूर्णं स्थानम्। तस्मिन् शब्दप्रमाणप्रसङ्गे अभिधाया लक्षणायाश्च विस्तृतमालोचनं विद्यते। तदेव शाब्दबोधः न्यायदर्शने साहित्यशास्त्रात् पूर्वमेव निरूपितः आसीदिति अनिभूयते। साहित्यिकाः संकेतग्रहे प्रसङ्गे यद्यपि वैयाकरणमतमेवावलम्बनं कुर्वन्ति, तथापि तत्र न्यायशास्त्रीयमतं विचारप्रसङ्गे सहायकत्वेन व्यवहरन्ति। प्राचीननैयायिकानां मते सङ्केतग्रहः केवलं जातौ न भवति न वा व्यक्तौ सम्भवति, अपितु जातिविशिष्टव्यक्तौ[१] एव जायते। मम्मटभट्टप्रमुखानामालङ्कारिकाणां मते यतः व्यक्तौ सङ्केतगृह्यते चेत् तत्र आनन्त्यं व्यभिचारश्चेति दोषौ भवतः। पुनश्च जातौ सङ्केतो गृह्यते चेत् तस्माद् जातेः व्यक्तिप्रतीतिर्न जायते। एतन्मतमङ्गी कृत्य व्यक्तिवादिनां मतं साहित्यदर्पणे काव्यप्रकाशे च विखण्डितमस्ति। यतः नव्यास्तु प्रवृत्तिनिवृत्तियोग्यव्यक्तिरितिकृत्वा संङ्केतग्रहो जातिवान्व्यक्तौ भवति इति अङ्गीकृतवन्तः। तस्मात् शब्दशक्तिनिरूपणे प्रसङ्गे साहित्यशास्त्रे न्यायदर्शनस्य विचारो वर्तत इति ज्ञायते।

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा**[२] इति मम्मटभट्टस्य सूत्रानुसारेण काव्यशास्त्रे शब्दः त्रिविध इति सिद्धान्तितोऽस्ति। तथैव अभिधा-लक्षणा-व्यञ्जना चेति तिस्रः शब्दस्य शक्तयः इत्यपि स्वीकृतम्। आलङ्कारिकैरङ्गीकृतेषु शक्तीषु व्यञ्जनाशक्तिं यद्यपि नैयायिकाः नाङ्गीकुर्वन्ति तथापि अभिधाव्यतिरिक्तां लक्षणाशक्तिं

सर्वथा प्रामाणिकतया प्रतिपादयन्ति। गौतमीयन्यायसूत्रे लक्षणाया: स्वतन्त्रविचारो नैव दृश्यते परन्तु तत्पर्यायवाचकस्य **उपचार**[३] इति शब्दस्य व्यवहारोऽप्यवलोक्यते। यथा- **व्यक्त्याकृति जातिसन्निधावुपचारशक्तय:**[४] इति। वृत्तिकारेण तु **व्यक्तिर्लक्षणाबोधे**[५] इत्युक्त्वा लक्षणाया: प्रयोग: कृत:।

मम्मटभट्ट–विश्वनाथकविराजप्रमुखा: आलङ्कारिकाचार्या: लक्षणाभेदनिरूपणप्रसङ्गे उपादानलक्षणाम् **अजहत्सार्था**, तथा लक्षणलक्षणां **जहत्सार्था** वा शुद्धलक्षणाया: यद्भेदद्वयं निरूपितवन्त:[६], तदपि न्यायशास्त्रे विचारितं दृश्यते। यथोक्तं शब्दशक्तिप्रकाशिकायाम् –

**जहत्सार्थोऽजहत्सार्था निरूढा धनिकादय:।**
**लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा।।**[७] इति।

गदाधरभट्टाचार्येणापि तदीये व्युत्पत्तिवादे ग्रन्थे लक्षणाया: विभाजनं सुस्पष्टं प्रतिपादितम्[८]। अस्मादवगम्यते, यद् अभिधाया लक्षणायाश्च विचार: साहित्यशास्त्रात् पूर्वं न्यायशास्त्रे अप्यभवदिति। अवश्यं साहित्यिका: तेषा नैयायिकानां शब्दशक्तिविचारसम्बलितानि सर्वाण्यपि मतानि नाद्रियन्ते। व्यक्तिविवेककार: आचार्य–महिमभट्ट: ध्वनिसिद्धान्तखण्डनवेलायं न्यायशास्त्रीयमनुमितिवादमेव प्रामाणिकतया आश्रयति। यदुक्तमपि –

**अनुमानेऽन्तर्भावं सर्वस्यैव ध्वने: प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमां परां वाचाम्।।**[९] इति।

व्यञ्जनास्थापनप्रसङ्गे तस्य महिमभट्टस्य मतखण्डनमपि न्यायशास्त्रस्य सहायेनैव वाग्देवतावताराचार्येण मम्मटभट्टेन कृतम्। काव्यप्रकाशस्य पञ्चमोल्लासे अस्मिनेव प्रसङ्गे न्यायशास्त्रान्तर्गतस्य हेत्वाभासस्य युक्ति: उपस्थापिता दृश्यते। **भ्रम धार्मिके**त्यादिकाव्ये विधिरूपाद्वाच्यार्थात् **न भ्रमेति** निषेधार्थस्य प्रतीतिर्भवति। सा प्रतीतिस्तु महिमभट्टस्य मतानुसारमनुमानादेव भवति न तु व्यञ्जनाव्यापारादिति[१०]। मम्मटाचार्यस्तु तत्र **अनैकान्तिक: विरुद्ध: असिद्ध:** इत्यादीनां **हेत्वाभासानां** प्रदर्शनं सयुक्तिकं कृत्वा तन्मतं खण्डयति। ततोऽत्र प्रसङ्गे नैयायिकाचार्यस्य श्रीमहिमभट्टस्य मतखण्डनावसरेऽपि न्यायशास्त्रस्य योगदानं वर्तते इत्यत्र नास्ति काऽपि विप्रतिपत्ति:।

काव्यप्रकाशस्य द्वितीयोल्लासे लक्षणावादिनां मतखण्डनप्रसङ्गेऽपि न्यायशास्त्रस्य प्रभावोऽनुभूयते। काव्यप्रकाशगतं **हेत्वभान्नलक्षणे**ति[११] सूत्रानुसारं मुख्यार्थबाधादिहेत्वाभावाल्लक्षणा व्यङ्ग्यार्थं नैव बोधयति। अतोऽत्र व्यञ्जनाप्रतिपादनप्रसङ्गेऽपि तर्कशास्त्रस्य योगदानमनुभूयते।

**रसनिष्पत्तौ न्यायदर्शनम्-**

**विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति:**[१२] इत्यस्य भरतमुने: रससूत्रस्य व्याख्या विविधै: व्याख्याकारै: तत्तच्छास्त्रीयसंस्कारानुरोधेन कृता इति अभिनवभारतीकाव्यप्रकाशसाहित्यदर्पणरसगङ्गा - धरप्रभृतिग्रन्थसारस्येन ज्ञायते। अभिनवभारत्यां समुपस्थापित: रससूत्रस्य द्वितीयव्याख्याकार: श्रीशङ्कुक: आसीत् परमनैयायिक:। तस्य रससूत्रव्याख्यात्मक: सिद्धान्त: न्यायशास्त्राधारेण समुपस्थापित: इति सर्वेषां समालोचकानामभिमतम्। तन्मतानुसारेण भरतमुने: रससूत्रस्य अर्थो भवति विभावानुभावव्यभिचारिभावसंयोगाद्

नाम अनुमाप्यानुमापकभावसम्बन्धाद् रसस्य निष्पत्तिरनुमितिर्भवति इति । वस्तुतः स नैयायिकः आसीदिति झल्किकरः राममूर्त्तित्रिपाठी, पी.वी. काणे, एस्.के देप्रमुखानां समालोचकानामप्यभिमतमस्ति।

श्रीशङ्कुकः प्रथमं भट्टलोल्लटस्य उत्पत्तिवादं न्यायशैल्या खण्डयति[१३]। तन्मतानुसारं रसः **कार्यो** भवति । न्यायशास्त्रे कार्यस्योत्पत्तये कारणस्य कल्पनं क्रियते। अतः विभावानुभावादीन् रसस्य कारणत्वेन कल्पयति श्रीशङ्कुकः। तस्मात् विभावानुभावव्यभिचारिसंयोगात् अर्थादनुमाप्यानुमापकभावसम्बन्धाद् अथवा गम्यगमकभावसम्बन्धाद् रसस्य निष्पत्तिरनुमितर्भवति इति। अस्मात् कारणात् श्रीशङ्कुकः अनुमानवाद्याचार्यस्तथा तस्य रससिद्धान्तः **अनुमितिवादः** इति कथ्यते। अनुमानं भवति न्यायशास्त्रस्य मुख्यविषयः इति विदितचरमेव । अतः रसनिष्पत्तौ अपि न्यायशास्त्रस्य विचारात्मकः सद्भावो वरीवर्तते।

**अलङ्कारनिरूपणे न्यायशास्त्रम्**

काव्यालङ्काराः काव्यशरीरस्य शोभावर्द्धने कारणभूता भवन्ति । भामहादारभ्य पण्डितराजजगन्नाथं यावत् प्रायशः सर्वेऽपि आलङ्कारिकाः स्वकीये काव्यशास्त्रीये ग्रन्थे विविधानलङ्कारान् निरूपितवन्तः। अलङ्काराणामुद्भावने विवेचने च तर्कशास्त्रस्य प्रभावात्मकं योगदानं बहुषुस्थलेषु परिलक्ष्यते । दृष्टान्तानुमान-काव्यलिङ्ग-विभावना- विशेषोक्ति-विरोधाभाषोत्प्रेक्षोपमादयः अलङ्काराः तस्य प्रमाणमावहन्ति। प्रसङ्गेऽस्मिन् न्यायशास्त्रीयालङ्काराणां विचारः क्रियते।

**१. दृष्टान्तालङ्कारः**

न्यायदर्शनेऽङ्गीकृतेषु षोडशपदार्थेषु दृष्टान्तस्य पञ्चमस्थानं वर्त्तते। **लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः**[१४] इति सूत्रानुसारेण लौकिकपुरुषाणां विशेषज्ञपुरुषैः सह साम्यज्ञानं भवति दृष्टान्तः इति नैयायिकानामभिमतमस्ति। काव्येऽपि दृष्टान्तालङ्कारस्य ग्रहणं वाक्योपमावर्गान्तर्गतेऽर्थालङ्कारे भवति। आचार्यभामहो भवति शुद्धदृष्टान्तालङ्कारस्य प्रथमप्रवर्त्तकः । यथोक्तं काव्यालङ्कारे ग्रन्थे -

**यत्र दृष्टान्तमात्रेण व्यज्ञते साध्यसाधने ।**
**तमाहुः शुद्धदृष्टान्तं तन्मात्राविष्कृते यथा ।।**[१५] इति ।

भामहात्परवर्त्तिनः सर्वेऽप्याचार्या दृष्टान्तालङ्कारमङ्गीकृतवन्तः। आचार्यरुय्यकस्य मतानुसारं यत्र धर्मि-धर्मयोः बिम्बप्रतिबिम्बभावो वर्त्तते तत्र दृष्टान्तालङ्कारो भवति यथोक्तम्-

**तस्याऽपि विम्बप्रतिविम्बभावतया निर्देशो दृष्टान्तः**[१६] इति।

मम्मटाचार्यस्य दृष्टान्तलक्षणमपि एवमेव सूचयति । तन्मतानुरारेण दृष्टानस्य लक्षणं यथा-

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिविम्बनम्**[१७] इति।

विश्वनाथकविरजः पण्डतराजजगन्नाथश्च प्रायतः रुय्यकस्य मतमेवानुसरन्ति।

न्यायदर्शनानुसारं दृष्टान्तस्य साधर्म्यं वैधर्म्यञ्चेति भेदद्वयं विद्यते, यथोक्तं तर्कभाषायाम्- **स द्विविधः। एकः साधर्म्यदृष्टान्तः यथा- धूमत्वस्य हेतोर्महानसम्। द्वितीयस्तु वैधर्म्यदृष्टान्तः। यथा तस्यैव महाह्रदेति**[१८] । मम्मटविश्वनाथादीनां मते अलङ्कारस्यास्य साधर्म्येण वैधर्म्येण च द्वौ भेदौ स्तः[१९]। तयोऽत्र विचारप्रसङ्गे न्यायदर्शनेन सह साम्यमेवावलोक्यते। अतः दृष्टान्तालङ्कारनिरूपणप्रसङ्गे न्यायदर्शनस्यावदानं वर्तत इति विचारयितुं शक्यते।

**अनुमानालङ्कार:-**

**अनुमानम्** इति न्यायशास्त्रस्य पारिभाषिक: शब्दोऽस्ति । न्यायशास्त्रं च अनुमानशास्त्रमिति कथ्यते। लिङ्गेन हेतो: ज्ञानमेवानुमानमिति अनुमानस्य लक्षणम् । पुनश्च **त्रिरूपलिङ्गाल्लिङ्गिज्ञानं परार्थानुमानमि**ति न्यायशास्त्रे प्रतिपादतमस्ति। तत्तदनुमानलक्षणानुरोधेन काव्ये संसारेऽप्यनुमानालङ्कारस्य उत्पत्तिर्जायते। साध्यसाधनभावेन यत्र यत्र चमत्कार: आयाति, तत्र अनुमानालङ्कारोऽङ्गीक्रियते। अलङ्कारशास्त्रे अनुमानालङ्कारस्य प्रथमप्रवर्त्तकत्वेन आचार्यभामहस्य प्रसिद्धि: वर्त्तते।

तन्मतेन अनुमानालङ्कारस्य लक्षणं यथा-

**त्रिरूपाल्लिङ्गतो ज्ञानमनुमानं च केचन।**
**तद्विदो नान्तरीयार्थदर्शनं चापरं विदु:।।**[२०] इति।

तत्परवर्त्तिन: आलङ्कारिका: भामहस्य मतानुसारेणापि अनुमानालङ्कारस्य लक्षणनिरूपणेन सह तस्य विचारमपि कृतवन्त:। तत्र रूद्रटस्य विचारे अनुमानलक्षणं यथा-

**वस्तुपरोक्षं यस्मिन्साध्यमन्यस्य साधकं तस्य ।**
**पुनरन्यदुपन्यस्येद्विपरीतं चैतदनुमानम् ।।**[२१] इति ।7

सरस्वतीकण्ठाभरमकारस्य भोजदेवस्य मतानुसारं तस्यानुमानालङ्कारस्य स्वरूपं यथा-

**लिङ्गाद्यल्लिङ्गिनो ज्ञानमनुमानं तदुच्यते ।**
**पूर्ववच्छेषवच्चैव दृष्टं सामान्यतश्च यत्।।**[२२] इति ।

रूय्यकस्य मते साध्यसाधननिर्देशोऽनुमानमिति । तथैव एकावलीकर्त्तु: विद्याधरस्य मतानुसारम्- **अनुमितमनुमानमिदं यत्र स्त: साध्य-साधने कथिते**[२३] इति अनुमानस्य लक्षणम्। तत्परवर्त्तिना वाग्देवतावतारेण मम्मटाचार्येणाप्यस्य परिष्कृतलक्षणं निरूपितम् । यथा- **अनुमानस्तदुंक्तं यत् साध्यसाधनयोर्वच:**[२४] इति । साहित्यदर्पणे कविराजविश्वनाथेनापि सुस्पष्टमुक्तम् यत्- **अनुमानं तु विच्छित्या ज्ञानं साध्यस्य साधनमिति**[२५] ।

न्यायशास्त्रे अनुमानप्रमाणस्य भेदत्रयानुसारं साहित्ये भोजराजेनापि अनुमानालङ्कारस्य **पूर्ववत्, शेषवत्, सामान्यवत्** चेति भेदत्रयमङ्गीकृतम्। अत: अनुमानालङ्कारनिरूपणप्रसङ्गे न्यायशास्त्रस्य योगदानमतुलनीयमस्ति।

**काव्यलिङ्गम्-**

लिङ्गशब्दोऽपि न्यायशास्त्रस्य अनुमानप्रमाणान्तर्गत: पारिभाषिक: शब्द: । न्यायशास्त्रानुसारं **व्याप्तिज्ञानबलेन साध्यबोधकं तत्त्वं भवति लिङ्गम्**[२६]। अत: **लिङ्गपरामर्शज्ञानमनुमानमि**तिकथ्यते । एवं च धूमदर्शनेन साहचर्यज्ञानबलेन अप्रत्यक्षस्य वह्ने: अनुमानं भवति । धूम: वह्ने: लिङ्गम् । साहित्यशास्त्रे च काव्यलिङ्गालङ्कारोऽपि कार्यकारणभावादेवाङ्गीक्रियते। अस्य अलङ्कारस्य प्रवर्त्तको भवति काव्यालङ्कारसारसंग्रहकार: उद्भट्ट:। तन्मतानुसारं एकं वस्तु श्रुत्वा यत्र अपरस्य वस्तुन: स्मरणं वा अनुभवो जायते, तत्र काव्यलिङ्गालङ्कारो भवति । यथा-

**श्रुतमेकं यदन्यत्र स्मृतिरनुभवस्य वा।**

**हेतूनां प्रतिपद्यते काव्यलिंगं तदुच्यते।।**[२७] इति।

दण्ड्याचार्योऽपि हत्वलङ्कारेऽस्य काव्यलिङ्गालङ्कारस्यान्तर्भावं कल्पयन् तल्लक्षणं नरूपयति, यथा-

**हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणं ।**

**कारकज्ञापकौ हेतू तौ चानेक विधौ यथा।।**[२८] इति ।

मम्मटभट्टेन तु काव्यलिङ्गाद् हेत्वलङ्कारस्य भेदोऽङ्गीकृत:। तन्मतानुसारं वाक्यार्थरूपेण काव्यलिङ्गपदार्थाभिप्रायेण हेत्वलङ्कारो भवति। यथोक्तम्- **काव्यलिङ्गहेतोर्वाक्यपदार्थता**[२९] इति। मतमिदं रूय्यक-जयदेव-विद्याधर-विश्वनाथादय: परवर्तिन: आलङ्कारिका: साग्रहमङ्गीकृतवन्त:। न्यायशास्त्रे लिङ्गं हेतुत्वेनाङ्गीक्रियते न्यायाचार्यै:।

**विभावनायां न्यायतत्त्वम्-**

विभावना-विशेषोक्त्योरुभयोरलङ्कारयो: प्रवर्त्तक: आचार्यभामहो भवति। कार्यकारणयो: नित्यसम्बन्ध: इति न्यायशास्त्रीयनियमो वर्त्तते । परन्तु अस्य नियमस्य व्यतिक्रमोऽत्रालङ्कारद्वये समुपलक्ष्यते ।आलङ्कारिकाणां मते कारणाभावेऽपि कार्योत्पत्तौ विभावनालङ्कारो भवति। यथोक्तं काव्यादर्शकारेण दण्डिना-

**प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम्।**

**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना।।**[३०] इति।

काव्यप्रकाशकारस्य मम्मटाचार्यस्य मते विभावनालङ्कारस्य लक्षणं यथा-

**क्रियाया प्रतिषेधेऽपि फलव्यक्तिर्विभावना**[३१] इति।

कविराजविश्वनाथस्य मते तल्लक्षणं यथा-

**विभावना विना हेतु कार्योत्पत्तिर्यदुच्यते**[३२] इति।

अतोऽस्य विभावनाऽलङ्कारस्य निरूपणे प्रसङ्गे यद्यपि कार्यकारणभावस्य विपर्ययोऽनुभूयते तथापि एतादृशचिन्तने न्यायदर्शनस्यावदानं वर्तते इत्यत्र नास्ति कोऽपि सन्दहस्यावकाश:।

**विशेषोक्तौ न्यायतत्त्वम्-**

तस्यैव कारणकार्यभावस्य व्यतिक्रमे काव्यचमत्कृतौ च विशेषोक्त्यलङ्कारोऽपि परिकल्प्यते काव्यसंसारे। आलङ्कारिकाणां मते कारणसत्ताया: उपलब्धौ अपि यत्र काव्ये कार्याभव: परिलक्ष्यते तत्र विशेषोक्त्यलङ्कारो भवति। यथोक्तं काव्यादर्शे-

**गुणजातिक्रीयादीनां यत्तु वैकल्प्य दर्शनम्।**

**विशेषदर्शनायैव सा विशेषोक्तिरिष्यते।।**[३३] इति।

मम्मटाचार्येणास्य शुद्धलक्षणं निरूपितं यथा- **विशेषोक्तिरखण्डेषु कारणेषु फलावच:**[३४] इति। तथैव साहित्यदर्पणकारस्य कविराजविश्वनाथस्य मते तल्लक्षणं यथा- **सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा**[३५] इति। अत: विशेषोक्त्यलङ्कारस्य निरूपणे प्रसङ्गे कारणकार्यसम्पर्काभावकल्पनेऽपि न्यायशास्त्रस्य योगदानं वर्तते इति सर्वैरनुभूयते।

**अभावालङ्कार:**

न्यायशास्त्रस्य अभाववादमनुसृत्य भोजराजेन अभावालङ्कारस्योद्भावनं कृतम्। स: अभावालङ्कारस्य परिभाषानिरूपणेन सह तस्य प्राग्भावादिभेदचतुष्टयमपि निर्दिशति। यथोक्तम्-

**अभाव: प्राग्भावादिभेदेन स चतुर्विध:।**

**घटाभावादिभेदात्तु तस्य संख्या न विद्यते।।**[३६] इति।

एते अभावस्य चत्वारो भेदा: अपि न्यायशास्त्रे परिदृश्यन्ते। न्यायसूत्रानुसारं प्राग्भाव: प्रध्वंसाभाव: अत्यन्ताभाव: अन्यन्याभावश्चेति अभावस्य चत्वारो भेदा: सन्ति। अप्पयदीक्षितोऽपि अभावालङ्कारं स्वकीये कुवलयानन्दे अङ्गीचकार[३६]। तेनास्यालङ्कारस्य नाम अनुपलब्धि: इति उक्तम्। भोजदेव: अप्पयदीक्षितश्च यत् उपमानाख्यम् अलङ्कारं स्वीकुरुत: सोऽपि न्यायशास्त्रोक्तोपमानप्रमाणस्यानुरूप एव।

**उदाहरणालङ्कारे न्यायदर्शनम्**

न्यायशास्त्रानुमानप्रमाणे स्वीकृतेषु पञ्चावयववाक्येषु उदाहरणमन्यतमम्। तत्र दृष्टान्तार्थमुदाहरणं व्यवह्रियते। पुनश्च न्यायशास्त्रे उदाहरणप्रकरणमपि वर्त्तते। तथैव अलङ्कारशास्त्रपरम्परायामपि पण्डितराजजगन्नाथकृत: उदाहरणालङ्कारोऽपि पूर्वोक्तं न्यायतत्वमेव बोधयति। अत: अत्र उदाहरणालङ्कारेऽपि न्यायशास्त्रीयतत्त्वस्य प्रतिबिम्बनं भवतीत्यत्र नास्ति काऽपि विप्रतिपत्ति:।

एवं च शब्दप्रमाणसम्भावनाया: कृते संशयप्रत्यक्षाद्यलङ्काराणामुपरि न्यायशास्त्रस्य प्रभाव: समधिको वर्त्तते। एतत्सर्वं विहाय साहित्यशास्त्रे न्यायशास्त्रस्य पारिभाषिकशब्दावलीनां प्रयोग: समुपलक्ष्यते । यथा- पण्डतराज: महिमभट्टश्च न्यायशैल्या: अवलम्बनं कृतवन्तौ। अनुमानप्रमाणमाध्यमेन एव तत्र सुप्रसिद्धस्य ध्वनितत्त्वस्य अन्तर्भाव: महिमभट्टेन व्यक्तिविवेके कृत:।

अतोऽनया पर्य्यालोचनया अवगम्यते यत् शास्त्रान्तराणीव न्यायशास्त्रीयतत्त्वानि अपि काव्यशास्त्रे विविधप्रकरणेषु समुपलभ्यन्ते । तस्मात् तत्तत् स्थलविशेषे न्यायशास्त्रं वर्तते इति कथनेन नास्ति कोऽपि शङ्कापङ्कलेपलेश:। इति दिक् ।

**सन्दर्भा:–**

१. काव्यप्रकाश:-पृ.-३६

२. काव्यप्रकाश:- २. १

३. व्यक्त्याकृतिर्जातिसन्निधावुपचात्शक्तय:-न्या.सू.२.२.५८।

४. न्या.सू.२.२.५

५. न्यायवृत्ति:-पृ-२१९

६. का.प्र-२.२.वृत्ति:, सा.द. २ वृत्ति: ।

७. श.श.प्र. पृ-१७

८. व्युत्पत्तिवाद:-पृ-१४४ .

९. व्यक्तिविवेक:-१.१

१० व्यक्तिविवेकः-पृ-४३
११.का.प्र. २.२९
१२. नाट्यशास्त्रम्-६.३५
१३. अभिनवभारती-पृ-२७२
१४. या.सू- १.१.२५
१५. का.अ.-भाग-५-५८
१६. अ.सं.-पृ-९६
१७. का.प्र. १०.१०२
१८. त.भा. पृ-२३७-३८
१९. का.प्र.-१०.१०२, सा.द. १०.५०
२०. का.अ.(भामहः) ५.११
२१. का.अ. (रूद्रटः)-३.४७
२२. सरस्वतीकण्ठाभरणम्।
२३. एकावली-८.९. पृ. ३०२
२४. का.प्र-१०.११७
२५. सा.द.-१०. ६३
२६. तर्कभाषा-पृ-७२
२७. का.अ.सा.सं. पृ-४९०
२८. काव्यादर्शः-२.२३६
२९. का.प्र.-१०.११४
३०. काव्यादर्शः-२.१९९
३१. का.प्र.- १०.१०७
३२. सा.दा. १०.६६
३३. का.द.- २.३२३
३४. का.प्र. १०. १०९
३५. सा.द.- १०.६७
३६. स. क. भ. ३.१५
३७. कुवलयानन्दः- पृ.११५

सहायकाचार्यः, साहित्यविभागः
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# अभावपदार्थविषये वैशेषिक-व्याकरणशास्त्रयोर्मतविचार:

डॉ. गगनचन्द्रदे

पदशास्त्रं पदार्थशास्त्रञ्चेति द्विविधं शास्त्रम्। तत्र व्याकरणं पदशास्त्रं वैशेषिकं न्यायशास्त्रञ्च पदार्थशास्त्रम् । पदपदार्थशास्त्रयो: समक्षं नास्ति कस्यापीतरशास्त्रस्य वैशिष्ट्यं प्रभुत्वं वा । अतएव याथार्थेनोक्तम् – ''काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्'' । व्याकरणशास्त्रे बहुत्र न्यायवैशेषिकयो: मतमादाय वैयाकरणैर्व्याख्यानं कृतम् । तेन व्याकरणशास्त्रे वैशेषिकदर्शनस्याऽतीव सान्निध्यं समुपैतीति निधार्यते । व्याकरणज्ञानाय वैशेषिकोक्तद्रव्यादिपदार्थानां ज्ञानमावश्यकम् ।

कणादमतानुसारेण मौलिकपदार्था: षट्संख्याका: सन्ति । यथा – 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्वज्ञानान्नि: श्रेयसम् ।'[१] महर्षिणा कणादेन अभावस्य पदार्थत्वेन निर्देशोऽपि न कृत: । वैशेषिकसूत्रे काणादे कतिपयेषु स्थलेषु अभावपदार्थोऽपि स्वीकृत एव । अभावपदार्थो वैशेषिकैर्न स्वीकृत: स्याच्चेत्तर्हि 'क्रियागुणव्यपदेशाऽभावात् प्राग्वत् (वै.सू-९.१.१) इति सूत्रेण प्रागभाव इत्यस्य, 'सदसत्' (वै.सू-९.१.२) इत्यनेन सूत्रेण ध्वसाभावस्य, ''असत: क्रियागुणव्यपदेशाऽभावादर्थान्तरम्'' (वै.सू-९.१.३) इति सूत्रेणाऽभावादर्थान्तरं भाव:, भावादर्थान्तरमभाव:, इत्यस्य 'सच्चाऽसत्' (वै.सू.९.१.४) इति सूत्रेणाऽन्योन्या भावस्य, ''यच्चाऽन्यदसदतस्तदसत्'' (वै.सू.९.१.५) इति सूत्रेणाऽत्यन्ताभावस्य चेत्येतै: सूत्रैर्निर्देशो न स्यात् । यतश्चोक्तसूत्रैरभावो निर्दिष्ट:, अतोऽभावोऽस्तोति गम्यते । वैशेषिकदर्शनस्य प्रशस्तपादभाष्ये अभावपदार्थस्य सविस्तरं वर्णनं समुपलभ्यते । अतो हि कणादपरवर्तिभि: वैशेषिकाचार्यै अभावस्य पदार्थत्वं स्वीकृतमासीदित्यभ्युपगम्यते । यथा – विश्वनाथपञ्चाननकृत कारिकावल्याम् –

> **''द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।**
> **समवायस्तथाऽभाव: पदार्था: सप्तकीर्तिता: ।।''[२]**

श्रीमदन्नम्भट्टकृते तर्कसंग्रहे यथा –

''द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावा: सप्त पदार्था:''[३] ।

श्रीजगन्नाथदेवपुरोहित-महामहोपाध्याय-विद्यासागर-पण्डित-श्रीदामोदरमहापात्रशास्त्रिकृता सर्वदर्शनकौमुद्याम् -
''शिष्य:-पूज्या: । साम्प्रतं वैशेषिकनये कस्तावत्पदार्थ: ? स च कतिविध: ? इति निर्णय: ।
गुरु: – वत्स । वाच्यत्वम्, अभिधेयत्वम्, ज्ञेयत्वम्, वा पदार्थ–लक्षणम् । ये वचनप्रकाशयोग्या:, अभिधाशक्तिलभ्या:, ज्ञानानां विषया वा त एव पदार्थ: । ते द्विविधा: । भावाभाव भेदात्[४] ।'' तेषु द्रव्यादि षट् भावपदार्था: । प्रागभावादि चत्वारश्चाभावपदार्था: ।

अभावो हि द्विविध: समाख्यातोऽस्ति । संसर्गाभाव: अन्योन्याभावश्चेति । वस्तुन: संसर्गाभावमूलकस्तदभाव: संसर्गाभाव:, यथा तेजसि शीतसंसर्गाभावमूलक: शीतस्पर्शस्याभाव: । एकत्र वस्तुनि वस्त्वन्तरस्य तादात्म्याभावमूलक इदमिदं न भवति इति प्रतीतिसाक्षिकोऽभावोऽन्योन्याभाव: ।

यथा तेज: पृथ्वी न भवति, पृथ्वी तेजो न भवति इत्यादिप्रतीतिसाक्षिकोऽभाव: । संसर्गाभावस्त्रिविध: । यथा – प्रागभाव: प्रध्वंसाभाव:, अत्यन्ताभावश्चेति ।

१. प्रागभाव: – कार्यद्रव्योत्पत्ते: पूर्व कारणद्रव्ये कार्यद्रव्यस्याभाव:, प्रागभाव: । यथा – मृत्तिकायां घटाभाव: ।

२. प्रध्वंसाभाव: – कार्यद्रव्ये नष्टे सति तत् कार्य-द्रव्यस्याभाव: प्रध्वंसाभाव: । यथा घटे नष्टे सति घटस्याभाव: ।

३. अत्यन्ताभाव: – अन्तं पूर्वां उत्तरां कोटिं च अतिक्रान्तो योऽभाव: सोऽत्यन्ताभाव: । प्रागभावस्य पूर्वकोटिहीनस्यापि उत्तरा कोटिर्भवति, प्रध्वंसस्य उत्तरकोटिहीनस्यापि पूर्वकोटिर्भवति, किन्तु अत्यन्ताभावस्य कापि कोटिर्न भवति, सोऽजन्योऽविनाशी च । अयं तत्र स्थाने भवति, यत्र तस्य प्रतियोगी कदापि न तिष्ठति । यथा शशे शृङ्गस्याभाव:, तेजसि शीतस्य वाऽभाव: । प्रसङ्गेऽस्मिन् कारिकावल्याम् । यथा –

**''अभावस्तु द्विधा संसर्गान्योन्याभावभेदत: ।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ।।''[५]**

व्याकरणशास्त्रानुसारेण अभावो विचार्यते । अभावपदघटितानि अभावसम्बद्धानि च सूत्राणि यथा –

१. ''अदर्शनं लोप:'' - पा.सू - १.१.६०

२. ''नञ्'' - पा.सू-२.२.६

३. 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चा - द्यथानुपूर्व्ययौगपद्यसादृश्य- सम्पत्तिसाकल्यान्तवचनेषु'' – पा.सू - २.१.६

४. ''ये चाऽभावकर्मणो:'' - पा.सू - ६.४.१६८

वैशेषिकसम्भताऽभावो व्याकरणशास्त्रे गृह्यते । वैयाकरणा: कथयन्ति यदेक एव अभावो नाम पदार्थो वास्तव: । ''अदर्शनं लोप:'' सूक्षस्यास्य व्याख्यानावसरे श्रीवासुदेवदीक्षितेन बालमनोरमाटीकायामुक्तम् – 'दर्शनस्याभाव: अदर्शनम् । अर्थाभावे अव्ययीभाव: ।''[६]

''विरामोऽवसानम्'' (पा.सू-१.४.११०) इति सूत्रे भाष्यकारेण यथा – इदं विचार्यते – अभावो वाऽवसानलक्षणं स्याद्विरामो वेति ? कश्चात्र विशेष: ? अभावेऽवसानलक्षणे उपर्यभाववचनम् । अत्र कैयटस्य आशय: – ''अदर्शनमभाव इत्येक एवार्थ:[७] तेन पुनरभावग्रहणं न कर्त्तव्यमित्यर्थ: । तत्र लोपसंज्ञायामभाव: संज्ञित्वेनाऽऽश्रीयते, अवसानसंज्ञायां तूपलक्षणत्वेन । तेन वर्णान्तराऽभावोपलक्षितो वर्णोऽवसानसंज्ञ इत्यर्थ: ।

नञर्थविचारावसरे नागेशभट्टेन परमलघुमञ्जूषायाम् – तदुक्तं हरिणा –

''तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्था; षट् प्रकीर्तिता: ।।''[८]

नञर्था: षड् इति प्रसिद्धिर्भवति । एवं च षडेव शक्यतावच्छेदकानि वक्तव्यानि – तत् कथं द्विविधमेव शक्यतावच्छेदकम् उक्तम् ? इति चेत्, उच्यते – संसर्गाभावत्वान्योन्याभावत्वरूपधर्मद्वयावच्छिन्ने अभावपद-

शक्त्यङ्गीकारेणैव निर्वाहसम्भवे गौरवात् षडवच्छेदकानि नाङ्गीकर्त्तव्यानि । यत्र च सादृश्यादिकं प्रतीयते, तत्र लक्षणयैव तथाविधप्रतीतिः सम्भवति'' ।[१] ''अव्ययं विभक्ति - - - - इत्यादिसूत्रे सिद्धान्तकौमुदीटीकाकारेण ज्ञानेन्द्रसरस्वतीमहाभागेनोक्तम् –

''निर्मक्षिकमिति । संसर्गाभावेऽयं समासो, न त्वन्योन्याभावेऽपि अर्थग्रहणसामर्थ्येन, समस्यमानपद-जन्यप्रतीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात् । अन्योन्याभावस्य तु प्रतियोगितावच्छेदकेनैव विरोधात्तस्य च प्रकारत्वेऽप्यविशेष्यत्वात् । ये तु वदन्ति घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः, आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति, तेषामपि मते अर्थग्रहणसामर्थ्यादेवाक्षिप्तधर्म्यभावे अयं समासो न तु धर्माभाव इति न दोषः ''हिमस्याऽत्ययोऽतिहिमम् । अत्ययो ध्वसः''[११] अत्र तत्वबोधिनीकारः – ''अत्यय इति । स्पष्टार्थमेतत् । अर्थाभावेन गतार्थत्वात् । अर्थाभावेन संसर्गाभावो विवक्षितो न त्वन्योन्याभावः । घटः पटो नेत्यन्नातिप्रसङ्गादिति निष्कर्षात् ।[१२]

यथैकमेवाकाशं गृहगवाक्षाद्यवयवाऽवच्छेदकभेदेन नानाविधं भवति, तथाऽभावोऽपि औपाधिकाश्चत्वारो भेदाः प्राक्प्रध्वंसाऽत्यन्ताऽन्योन्याभावरूपाः । अयं सामान्याभावो ''नञ्'' (२.२.६) इति सूत्रेण पाणिनिना ध्वनितः । अत एव 'अव्ययं विभक्ति (२.१.६) इति सूत्रेऽभावात्पृथगत्ययस्य ग्रहणं सङ्गच्छते । अन्यथाऽभावनैवाऽत्ययस्याऽपि संग्रहणात्तद्व्यर्थं स्यात् यथोक्तं हरिणा —

**''चतस्रो हि यथाऽवस्था निरूपाख्ये प्रकल्पिताः ।**
**एवं द्वैविध्यमप्येतद् भावाऽभावव्यपाश्रयम् ।।''**[१३]

हेलराजेन तदीयप्रकाशव्याख्यायाम् – ''प्राक्प्रध्वंसात्यन्तेतरेतरलक्षणोपाधिवशेन नीरूपस्य रूपभेदायोगाद् यथाऽभावस्य चतुर्था भेदः काल्पनिकः, तथा भावाभावलक्षणोऽपि भेदः काल्पनिक एवावगन्तव्य इत्यर्थः ।''[१४] अस्मिन् प्रसङ्गे अम्बाकत्रीटीकाकारेण प्रतिपादितम् – ''अत्र 'हि' शब्दः प्रसिद्धौ, निरुपाख्येउपाख्यायते नानाविधान् धर्मान् पुरस्कृत्याभिधीयते शब्दैरिति उपाख्या, अभिधेयस्य स्वरूपम्, तद्रहिते नीरूपेऽभावे प्राक्प्रध्वंसात्यन्तेतरे-तरलक्षणोपाधिवशेन चतस्रोऽवस्था भेदरूपाः प्रकल्पिताः ।''[१५]

''सरूपाणामेकशेष एकविभक्तौ'' (पा.सू.१.२.६४) इति सूत्रभाष्यस्य प्रदीपेऽप्यभावस्य चतुर्विधत्वमङ्गीकृतं कैयटेन । तथा ह्येतस्य वचनम् – अभावश्चत्वार इति । तेनैतेनाऽभावस्य प्राक्प्रध्वंसाऽत्यन्ताऽन्योऽन्याऽभावा भेदा इत्युररीक्रियन्ते । एषोऽभावपदार्थः कमपि भावपदार्थमाश्रित्यैव संलक्ष्यते। भर्तृहरिणा वाक्यपदीये उक्तम् । यथा –

**''यथा भावमुपाश्रित्य तदभावोऽनुगम्यते ।**
**तथाऽभावमुपाश्रित्य तद्भावोऽप्यनुगम्यते ।।''**[१६]

अयं भावः – निरूपाधे = प्रतियोगिरूपोपाधिरहितस्य, अभावस्य अविशिष्टत्वात् = अव्यावृत्तत्वात्, व्यवहार इति प्रतियोगितया भावोपाधिकस्याभावस्य व्यवहारेऽवतारः घटाभाव पटाभाव इति । भावस्यापि प्रागभावप्रध्वं-साभावावस्थयोर्मध्यावस्थायामेव सत्वात् ।

**व्याकरणशास्त्रे प्रागभाव: –**

यदा कार्यं स्वकारणे स्थितं भवति, तदा कार्यस्य कारणे प्रागभावो भवति । अयं प्रागभावरूपोऽर्थ: पतञ्जलिना ध्वनित:, तथा ह्येतस्य वचनम् – ''कश्चित्कञ्चित्तुवायमाह – अस्य सूत्रस्य शाटकं वयेति । स पश्यति – यदि शाटको न वातव्य:, अथ वातव्यो न शाटक:, शाटक वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाऽभिप्रेता, स मन्ये वातव्य: । यस्मिन्नुते शाटक इत्येतद् भवति ।[१७] एतेन पटो यदि तन्तुरूपेणाऽस्ति तर्हि तत्र पटस्य प्रागभावो लक्ष्यते । तन्तुभि: पटो निर्मितश्चेत्तर्हि पटस्य प्रागभावो नश्यतीति गम्यते ।

**व्याकरणशास्त्रे प्रध्वंसाभाव:–**

यदा कारणात्कार्यं बहिर्भूतं भवति, तदुत्पन्नो घटो लक्ष्यत इति व्यवहार: । उत्पन्नस्य घटस्य ध्वंसो भवति येत्तर्हि तस्य ध्वंसाभावो भवति । अत एवोत्पन्नो घट: स इदानीं ध्वस्त इति प्रतीतिसाक्षिको व्यवहार: प्रवर्त्तते । 'अपे क्लेशतमसो:' (पा.सू ३.२.५०) अपपूर्वाद्धन्तेर्ड: स्यात् । अनाशीरर्थमिदम् । क्लेशापह: पुत्र: । तमोपह: सूर्य: । अत्र ध्वंसाभावस्य प्रतीतिर्भवति । अर्थात् पितु: क्लेशं हन्ति पुत्र:, तमो नाशयति सूर्य: । तथा च यत: क्लेशतमसोर्विनाशी भवति, अत: क्लेशतमसो ध्वंसाऽभावो भवतीति गम्यते । नागेशस्य अयमाशय:– ''उदयति सवितरि तमो नष्टम्'' इत्यनेन तमो नष्टम् नाम तमसो ध्वस: । ''अव्ययं विभक्ति.... (पा.सू-२.१.६) इत्यादिसूत्रे लालमनोरमाकारेणोक्तम् – हिमस्यात्ययोऽतिहिममिति । अतीत्यव्ययपर्याय: अत्ययशब्दो विग्रहे ज्ञेय: । अर्थाभावेत्यनेन पौनरूक्त्यं निरस्यति – अत्ययो ध्वस इति । अर्थाभावशब्देनात्यन्ताभाव एव विवक्षित: । तेन पटस्य प्रागभाव: निष्पटमिति न भवतीति भाव: ।''[१८] अत्र हिमस्य ध्वसाभाव: सूचित: ।

**अन्योऽन्याभाव:, अत्यन्ताभावश्च –**

घटो न पट:, पटो न घट:, चैत्र न मैत्र:, मैत्रो न चैत्र इत्यादावितरेतराभाव: संलक्ष्यते । इह घटो नास्ति, इह पटो नाऽस्तीत्यत्र व्यवहारस्याऽत्यन्ताऽभावो भासते । एते च व्यवहारा लौकिका:, सर्वै: प्रयुज्यमाना: संलक्ष्यन्त इति' तेनैतेनैते वैयाकरणैरप्युरीक्रियन्त एवेति गम्यते ।

वैशेषिकैरभावस्य प्राग्प्रध्वंसाऽत्यन्ताऽन्योऽन्याऽभावा: स्वातन्त्रेण मन्यन्ते । परन्तु वैयाकरणैरैकोऽभाव: स्वतंत्र: स्वीक्रियते । एतस्यौपाधिका: प्रागाद्यभावा इतीयानेव वैशेषिकवैयाकरणयोर्नये भेदो लक्ष्यते । एतेषु चतुर्षु अभावेषु अत्यन्ताभाव:, अन्योऽन्याभावश्य नञा द्योत्यते । यथा – भूतले घटो नास्ति, घटो न पट इत्यादौ । अत्र पतञ्जलिनोक्तम् – ''गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽव्ययस्यति ब्राह्मणोऽयमिति । तत: पश्यादुपलभते नाऽयं ब्राह्मणोऽब्राह्मणोऽयमिति । तत: पश्चादुपलभते नाऽयं ब्राह्मणोऽब्राह्मणोऽयमिति ।[१९] अत्र अब्राह्मणोऽयमित्यस्य क्षत्रियादिरर्थ: । तथा याऽब्राह्मणोऽय मित्यत्र ब्राह्मणात्पूर्ववर्त्तिनञा ब्राह्मणत्वाभावरूपोऽर्थ: क्षत्रियादिगृह्यते । यथोक्तं कैयटेन ''शब्दशक्तिस्वाभाव्यादसत्वरूपमर्थ वाक्येनाह''[२०] इति । अत्र असत्वम्सत्त्वाभाव: ।

अभावाख्यस्य पदार्थस्य कैश्चित् शास्त्रकृद्भि: स्वातन्त्र्यं यद्यपि नाङ्गीकृतम्, तथापि वैशेषिकादिभिर्महता

विचारेण सप्रयोजनमभावस्य स्वातन्त्र्यं समुपपादितम् ।दु:खात्यन्त ध्वंसरूपस्यापवर्गस्य शास्त्रैकलक्ष्यस्याभावं विना नानुपपत्तिरिति वैशेषिकादिशास्त्रेष्वभावपदार्थस्वीकारे महत् प्रयोजनं वर्त्तते । न केवलं शास्त्रकृत्येषु, लौकिकव्यवहारेष्वपीदमिह नास्ति, इद मिदं न भवतीत्याद्यानुभविकव्यवहारप्रयोजकाभावपदार्थ: केनाप्यनङ्गीकर्त्तुं न शक्यते । वैयाकरणा वैशेषिकादेर्मतस्यानुमोदनं कुर्वन्त: प्राक्प्रध्वसादीनौपाधिकान्भेदानैकस्यैवाऽभावस्य व्यवहरन्ति । तेनैतेन भावाद् भिन्नश्याऽभावो वर्त्तत इति स्वीकुर्वन्त्येव वैयाकरणा: । इति शम् ।

**सन्दर्भटिप्पणी -**

१. वैशेषिकसूत्रम् - १.१.४
२. कारिकावली - कारिका - २
३. तर्कसंग्रह: - पदार्थनिरूपणम्
४. सर्वदर्शनकौमुदी - पृ-६३
५. कारिकावली - कारिका - १२
६. सिद्धान्तकौमुदी - बालमनोरमा - सू.सं-५३
७. महाभाष्यम् - प्रदीप: १.४.१०
८. परमलघुमञ्जूषा - निपातार्थ निर्पय: - पृ-१५६
९. अभावविमर्श: - पृ-७
१०. सिद्धान्तकौमुदी - तत्वबोधिनी - सू.सं-६५९
११. सिद्धान्तकौमुदी - सू.सं-६५९
१२. सिद्धान्तकौमुदी - तत्वबोधिनी - सू.सं-६५९
१३. वाक्यपदीयम् - ३.३.६६
१४. वाक्यपदीयम्, प्रकाशटीका - ३.३.६६
१५. वाक्यपदीयम् - अम्बाकर्त्री - ३.३.६६
१६. वाक्यपदीयम् - ३.३.६०
१७. महाभाष्यम् - १.१.४५
१८. सिद्धान्तकौमुदी वालमनोरमा - स.सं - ६५९
१९. महाभाष्यम् - २.२.६
२०. महाभाष्यम् प्रदीप: - २.२.६

सहायकाचार्य:, संस्कृतविभाग:
सर्वसजनीकान्तमहाविद्यालय:
लुटुनिया, पश्चिममेदिनीपुरम्, पश्चिमवङ्ग:

# वृत्तिलक्षणविमर्शः

डॉ. उमेशझा

आकाङ्क्षाऽऽसत्तियोग्यतावत्पदसमूहात्मकस्य 'अयं गौरस्ती' त्यादिवाक्यस्योच्चारणानन्तरं श्रवणानन्तरं चोच्चारयितुः श्रोतुश्च पुरुषस्य पदजन्यपदार्थोपस्थित्या यदन्वयबोधो जायते स एवान्वयबोधः 'शाब्दबोध' इत्युच्यते । अयं शाब्दबोधः प्रत्यक्ष-प्रमातोऽनुमितिप्रमात उपमितिप्रमातश्चातिरिक्त एव प्रमाशाब्दिकानां वैशेषिकेतरनैयायिकानां मीमांसकानामपि । वैशेषिकादयस्तमन्वयबोधम् अनुमितौ प्रत्यक्षे वाऽन्तर्भावयन्ति । सोऽस्तु तत्र तत्रान्तर्भूतो वा यथा तथा, किन्तु सोऽन्वयबोधः किमविशेषेण सर्वस्यैवोच्चारयितुः श्रोतुश्च भवति, आहोस्विद् व्यक्तिविशेषयोरेव ? व्यक्तिविशेषयोरेवेति पक्षेऽपि किं विधयोः ? तत्रापि उच्चारण-श्रवणाव्यवहितोत्तरमेव, आहोस्विद् विलम्बेन, विलम्बेन चेत् कियता विलम्बेन ? इत्यादि विकल्पः स्वभावत एव समापतति विचिन्तकानाम् । तत्र समाधानं व्यधायि विचिन्तकैः शास्त्रकृद्भिर्यत् व्यवहारादिना यस्योच्चारयितुः श्रोतुश्च उच्चारणश्रवणातः पूर्वमेव यदा कदा उच्चार्यमाण-श्रूयमाणपदपदार्थयोर्वृत्त्याख्यः सम्बन्धविशेषोऽनुभूतो भवति, तज्जन्यस्तद्वृत्तिविषयकः संस्कारोऽपि तत्र पूर्वत एवावतिष्ठते । स हि संस्कारस्तद्वृत्त्याख्यसम्बन्धविशेषसम्बन्धिनः पदस्य ज्ञानादुद्बुद्धो भवति । उद्बुद्धश्च सन् सः स्वसम्बन्धिनं पदार्थमुपस्थापयति । यद्यपि वृत्त्याख्यपदपदार्थसम्बन्धस्य सम्बन्धिनः पदस्य ज्ञानेन याऽर्थस्मृतिरूपोपस्थितिः सा 'एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयती' ति लोकशास्त्रानुभवसिद्धनियमादेव । दृष्टा हि गजे हस्तिपकसम्बन्ध-ग्रहाहितसंस्कारसहकृतेन हस्तिपकदर्शनेन गजस्मृतिः । घटानुभवात् पटस्मरणाजनने समानविषयकानुभवस्यैव स्मरणजनकत्वाङ्गीकारात् भिन्नविषयकतया पदज्ञानं नार्थस्मारकं भवितुं शक्नोतीति न शङ्क्यम्, पदज्ञानस्य उद्बोधकविधयैव पदार्थस्मारकत्वस्वीकारात् । तदुक्तं पदवाक्यरत्नाकरे म.म. गोकुलनाथोपाध्यायेन —

**पूर्वानुभूत्या संस्कारशेषया स्वार्थगोचरा ।**
**जन्यमाना स्मृतिः शब्दमुद्बोधकमपेक्षते ।। इति[1]**

परन्तु 'अयं गौरस्ती' त्यादिवाक्यघटकस्य गवादिपदस्य सास्नादिमता गो-रूपार्थेन सह यथा वृत्त्याख्यः सम्बन्धस्तथाऽन्योऽपि स्वनिष्ठप्रमेयत्ववत्त्वादिसम्बन्धोऽस्त्येव, एवं यथा गवादिपदस्य सास्नादिमता अर्थेन सह वृत्त्याख्यः सम्बन्धस्तथैव गवादिपदस्य आकाशाद्यर्थेनापि स्वाश्रयत्वादिः सम्बन्धो भवत्येव । किन्तु तस्यैव सास्नादिमतोऽर्थस्य वृत्त्याख्यसम्बन्धेतरसम्बन्धस्य स्ववृत्तिप्रमेयत्वादिवत्त्वरूपस्य ज्ञानेन अर्थस्मृतौ सत्यामपि सास्नादिमतोऽर्थस्याकाशादेर्वा न तत्र शाब्दबोधोऽपितु वृत्त्याख्यपद-पदार्थसम्बन्धज्ञानेनोपस्थितपदार्थस्यैव शाब्दबोधो भवति । अतश्च-'शाब्दबोधजनिका या पदार्थोपस्थितिस्तस्या उपस्थितेर्जनकं यस्य पदपदार्थयोः सम्बन्धविशेषस्य ज्ञानम्, तज्ज्ञानविषयसम्बन्ध एव पद-पदार्थयोः वृत्त्याख्यसम्बन्ध' इत्यभिधीयते ।

अयं विभिन्नशास्त्रकृन्मते विभिन्ननिबन्धकृन्मते च किमात्मकः ? कतिविधः ? कुत्र कथं च

मतभेदस्तत्र किमादरणीयं किम्वाऽनादेयम् ? अभिनवोऽपि पन्था: सम्भवति न वा ? सम्भवति चेत् कः कथमित्यादि- जिज्ञासा समुदेति । तत्र ये खलु शाब्दबोधमतिरिक्तप्रमां नैव मन्यन्ते, अलौकिकप्रत्यक्षप्रमायामनुमितावेव वा गतार्थयन्ति तमन्वयबोधम्, तन्मते शाब्दबोधोतिरिक्ताप्रमैव नास्ति, न वा तत्रोपस्थितिः कारणम् । न च शाब्दबोधजनकोपस्थित्यर्थ वृत्तिज्ञानमपि तत्रापेक्षितम् । वृत्तिज्ञानस्यानपेक्षितत्वे तद्विषयीभूता वृत्तिरपि अनपेक्षितैवेति किं वृत्तिविचारः काकदन्तपरीक्षणादेव चकास्ति ? मैवम् । तन्मतेऽतिरिक्तशाब्दप्रमााया अभावेऽपि 'अयं गौरस्ती' त्यादिवाक्योच्चारयितृश्रोतृपुरुषयोः तदुच्चारणश्रवणोत्तरं प्रत्यक्षात्मिका वाऽनुमित्यात्मिका वा यादृशी प्रमा जायते, यत्र प्रमात्मके धर्मिणि शाब्दबोधं ते गतार्थयन्ति, तत्र तेऽपि प्रमायां नियतपदार्थस्यैव भानार्थं पदपदार्थसम्बन्धविशेषात्मकवृत्तिज्ञानजन्यां पदार्थोपस्थितिमपेक्षन्त एव । गवादिपदात् स्वाश्रयत्वादिसम्बन्धान्तरज्ञानाधीनोपस्थितानामाकाशाद्यर्थानां तन्मतेऽपि तत्र भानविरहात् ।

प्रमाणसमीक्षायाम् 'न्यायनये वृत्तिस्वरूपं शाब्दिकदृष्ट्या तन्निरासश्चेति शीर्षकाधस्ताद्-'शक्तिवादे श्रीगदाधरभट्टाचार्येण 'सङ्केतो लक्षणाचार्थे पदवृत्ति' रित्युपन्यस्यता, शक्तिलक्षणान्यतरत्वं वृत्तित्वमितिवाभिप्रेतम्, अन्यथा वृत्तेः सामान्यज्ञानस्य हेतुत्वादिति यदुपन्यस्तम्,[२] तत्तु शाब्दबोधोपयिकसम्बन्धत्वस्वरूपसामान्यधर्मवत्तयाऽपि पूर्व वृत्तिज्ञाने सति वृत्तिविभागानौचित्यनिवारणन्नोचितं, उक्तञ्च हरिनाथेन सविवृत्तिकशक्तिवादे स्वीयविवृतौ 'शाब्दबोधोपयिकसम्बन्धत्वरूपसामान्यधर्मस्योक्तरीत्या मनसैव सुग्रहत्वाद् विभागे उद्दिष्टधर्मस्य शब्दजन्यज्ञानमात्रानपेक्षणाच्चे'ति ।[३] तथा सङ्केतलक्षणान्यतरत्वमेव चेद् वृत्तिलक्षणतया गदाधराभिप्रेतं तदा तद्विभेदज्ञानमपि लक्षणाज्ञानान्तः समाविष्टमेव । तथात्वे च तत्रैव तेनैव पृथग् विभागकरणान्नोचितं स्यात् । 'सङ्केतो लक्षणा चार्थे पदवृत्तिरि' त्येतद्ग्रन्थभागस्य तद्घटके 'अर्थे' इत्यत्र चर्मणि द्वीपिन' मित्यत्रेव निमित्तसप्तमीं स्वीकृत्य वृत्तिपदस्य व्यापारार्थकत्वं मत्वा अर्थे- अर्थज्ञानाय अर्थात् शाब्दबोधोपयोगिपदार्थस्मरणाय पदस्य वृत्तिः पदव्यापारः सङ्केतात्मको लक्षणात्मकश्चेत्येवं विवरणमपि नासङ्गतम् ।

किंवा अर्थे-सङ्केतो लक्षणा च पदवृत्तिरित्येवमन्वयेन-अर्थे शाब्दान्वयोपयोग्यर्थस्मारकः सङ्केतो लक्षणा च पदस्य वृत्तिः पदव्यापारो, न त्वर्थस्य । एतावता लक्षणायाः मीमांसकाभिमतार्थव्यापारत्वाभावः सूचितस्तथा लक्षणाया मीमांसकाभिमतवाक्यधर्मत्वाभावः, सङ्केतस्य शाब्दिकाभिमतवाक्यधर्मत्वस्याभावोऽपि, लक्षणायाः शाब्दिकाभिमतत्वप्रतिक्षेपश्च । एतावतोक्तग्रन्थभागो नो वृत्तिलक्षणपरो नापि तद्विभागपरः, किन्तूक्ताभिप्रेतपरक एवेत्यपि व्याख्यातुं शक्यम् । भट्टाचार्यहरिनाथेन तु 'चकरार्थः' समुच्चयः, तच्च धी-विशेषविषयत्वं द्वित्वं पर्य्यवसितम्, वृत्तिः शाब्दबोधौपयिकः सम्बन्धः, तथा चार्थप्रतियोगिकः पदाऽनुयोगिकोऽर्थानुयोगिकः पदप्रतियोगिको वा शाब्दबोधोपयिकः सम्बन्धः सङ्केतलक्षणाद्वयमित्यर्थो विवृतः ।[४] तत्र 'अर्थे' इत्यस्यानुपादाने अर्थात् शाब्दबोधौपयिकज्ञानविषयसम्बधत्वमात्रस्य शक्तिलक्षणोभयानुगमकरूपताप्रदाने घटमानयेत्यादौ शाब्दबोधौपयिकं यदव्यवहितोत्तरत्वसम्बन्धेन एकपदविशिष्टतया अपरपदविषयकस्वरूपाकाङ्क्षा ज्ञानं तद्विषयेऽव्यवहितोत्तरत्वत्वादिसम्बन्धेऽतिव्याप्तिः स्यादतो 'अर्थे'

इत्युक्तम् । तदुक्तौ च तत्रोभयोरव्यवहितोत्तरत्वादिसम्बन्धप्रतियोग्यनुयोगिनो: पदरूपत्वान्नातिप्रसक्ति: । पदपदानुक्तौ तु देवदत्त: पचतीत्यादौ शाब्दबोधौपयिकं यद्योग्यताज्ञानम् अनुकूलत्वसम्बन्धेन पाकविशिष्टकृतिमान् देवदत्त इत्याद्याकारकं, तद्विषयीभूतेऽनुकूलत्वा- दिसम्बन्धेऽतिप्रसङ्ग: स्यादतस्तत्र 'पद' पदोपादानम्, तदुक्तौ च अनुकूलत्वादिसम्बन्धस्य पदानुयोगिकत्वविरहादतिप्रसङ्गविरह: ।

चिन्तामणिकारोक्तस्य शाब्दबोधौपयिकोपस्थितिजनकपदपदार्थसम्बन्धत्वस्य शक्तिलक्षणयोरनुगमकरूपस्य वृत्तिलक्षणस्य सा दर्शिताकाङ्क्षाज्ञानविषयभूते अव्यवहितोत्तरत्वादौ, दर्शितयोग्यताज्ञानविषयीभूते अनुकूलत्वादौ च आकाङ्क्षाज्ञानयोग्यताज्ञानयो: साक्षात्शाब्दबोधस्यैव जनकत्वात् शाब्दबोधौपयिकोपस्थितिजनकत्वाभावादेवातिप्रसक्त्यभावेन तत्रार्थपदोपादानं पदपदोपादानञ्च व्यर्थमिति नाशङ्क्यम्, यत्राकाङ्क्षाज्ञानं योग्यताज्ञानं च नानुभवात्मकम्, अपितु उपस्थित्यात्मकं नामस्मरणात्मकम् एव, तत्र तादृश्युपस्थित्यात्मकाङ्क्षाज्ञानजनकवाक्यविषयकानुभवविषयभूते अव्ययहितोत्तरत्वादिसम्बन्धे तथा उपस्थित्यात्मकयोग्यताज्ञानजनकानुभवात्मकयोग्यताज्ञानविषयीभूतेऽनुकूलत्वादिसम्बन्धे चातिप्रसङ्गवारणाय पूर्ववदेव क्रमश: अर्थपद-पदपदयो: सार्थक्यात् । अथापि शाब्दबोधौपयिकोपस्थितिजनकपदपदार्थयो: सम्बन्धो वृत्तिरित्यस्य शाब्दबोधनिरूपिता स्मृतित्वावच्छिन्ना या जनकता, तादृशजनकतानिरूपिता या अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावछेदकता, तन्निरूपिता या सांसर्गिकी विषयता, तद्वत्त्वमेव विवक्षितोऽर्थ: । तत्तदर्थविषयकशाब्दबोधम्प्रति न सर्वविधा तत्तदर्थविषयिण्युपस्थितिरर्थात् स्मृति: कारणम् भवति, किन्तु वृत्ति अर्थात् शक्तिलक्षणान्यतरसम्बन्धेन अर्थविशिष्टतया यत् पदज्ञानमव्यवहितोत्तरसम्बन्धेन तादृश-पदज्ञानविशिष्टतत्तदर्थोपस्थितिरेव । एवं स्थितौ आकाङ्क्षायोग्यताज्ञानयोर्दर्शितदिशा कदाचित् स्मृतिरूपत्वसम्भवेऽपि तयो: शाब्दबोधम्प्रति निश्चयत्वरूपेणैवजनकत्वसत्त्वात् स्मृतित्वावच्छिन्नाया: जनकतायास्तत्रा-सत्त्वादेव तादृशाकाङ्क्षाज्ञानयोग्यताज्ञानविषयीभूते अव्यवहितोत्तरत्वानुकूलत्वादौ सम्बन्धेऽतिप्रसक्तिवारणात् पुनरपि अर्थपद-पदोपादानं व्यर्थमेवेति चेत्, अत्र समाहितम् यत् वर्णादिविषयकशाब्दबोधस्थले वर्णपदं शक्तिसम्बन्धेन वर्णवदित्याकारकं यत् वर्णविषयकशाब्दबोधौपस्थितिजनकवर्णपदविशेष्यकं शक्तिसम्बन्धेन वर्णार्थप्रकारकं ज्ञानं तज्ज्ञानविषयीभूते वर्णवर्णत्वयो: समवायात्मकसंसर्गेऽतिव्याप्तिवारणार्थमेव तत्र 'अर्थे' इत्युक्तम् । 'पद' पदन्तु तत्रैव तादृशज्ञानमेववर्णपदं शक्तिसम्बन्धेन वर्णवदित्याकारकमादाय तद्घटकवर्णपदतद्गतानुपूर्वीविशेषयो: सम्बन्धनिष्ठा या सांसर्गिकविषयता, तामादाय तादृशसम्बन्धेऽतिप्रसक्तिवारणायैवेत्याशय: ।[५]

पुन: प्रमाणसमीक्षायां तत्रैव हरिनाथविवृतिलक्षणनिरासाय यदुपन्यस्तं, वृत्तित्वज्ञानं एतद्घटककार्यकारणाभावज्ञानम्, तज्ज्ञाने चोक्तवृत्तित्वज्ञानम् इत्यन्योन्याश्रयदोषेण स्मृतेर्व्यापारत्वाभावोपपादकेन नव्यानां सिद्धान्तेन च द्वितीयस्याप्यभावादिति,[६] तदपि खण्डनाभासमात्रम् यतो हि मणिकृता आचार्यगङ्गेशेन शब्दचिन्तामणौ-'वृतिश्च शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपद-पदार्थयो: सम्बन्ध:' इत्युल्लिखितम्[७] तत्रैव प्रकाशे-पुन: 'आकाशपदे आकाशोपस्थित्यनुकूल: समवायोऽपीत्यतिव्याप्तेराह-हेत्वन्तमि' त्युल्लेखानन्तरम् । 'न च वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुत्वं ग्राह्यमित्यन्योन्याश्रय:,

शाक्तिज्ञानजन्योपस्थितित्वादिना शाब्दबोधविशेषजनकत्वग्रहानन्तरं तद्ग्रहस्य सम्भवात्, तृणादीनामग्निजनकत्ववदिति ।[८]

ग्रन्थांशेनानेन दर्शितान्योन्याश्रयाशङ्कायास्तत्-समाधानस्य च तत्रैव विहितत्वात्, एतेन तत्रैव अत्र च पदपदार्थयो: सम्बन्धविशेषत्वमेव वृत्तिलक्षणम् । शाब्दबोधानुकूलेत्यादिविषयान्तस्तु न विशेषणम्, अपितूपलक्षणम्, अन्यथेत्यादि 'अन्योन्याश्रयदो-षोऽत्र दुर्वार: स्यादि'त्यन्तं यदुपन्यस्तम्, तदपि समाहितमेव । स्मृतेर्व्यापाररूपताऽपि स्वयं प्रमाणसमीक्षाकृता स्वीकृतैव । ''अतश्च तादृशपदार्थज्ञानस्य व्यापारत्वं शाब्दिकमते निराबाधम्'' इत्युक्त्या, ''वस्तुतस्तु विचारे क्रियमाणे उक्तपदार्थज्ञानस्यैव व्यापारता लभ्यते''[९] वाक्यशक्तिपक्ष एव तथा स्वाभिमतत्वं दर्शितम्, न तु सर्वत्र । किञ्च सर्वत्र स्मृतौ पूर्वानुभूततात्मकतत्तो-ल्लेखनियमो नैवं दरीदृश्यते, प्रमाणसमीक्षाकृताऽपि 'हा मम माते' त्यादिदृष्टान्तीकृत्य तथा नियमाभाव एवाभ्युपगत: ।[१०] अत: पदार्थोपस्थिते: स्मृतित्वाभावोपपादको नैव तत्तोल्लेखविरह: ।

प्रयोज्य-प्रयोजकव्यवहारत आद्यशक्तिग्रहस्थले पदजन्यज्ञानमात्रस्य शाब्दबोधात्मकत्वमुक्त्वा पदजन्यपदार्थोपस्थिते: स्मृतित्वाभावोपपादनमपि नैव श्रद्धास्पदम्, यतो हि पदपदार्थयो: सम्बन्धस्तु मत एव, तथा एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति नियमोऽपि नापलपितुं शक्य: । ततश्च पदात्मकैव-सम्बन्धिज्ञानादपरस्य पदार्थात्मकसम्बन्धिन: स्मृतिरनिवार्यैव । एतेन 'घटानुभवात्पटादिस्मृतेरभावात् समानविषयकानुभवस्यैव समानविषयकस्मृतिजनकत्वौचित्यात्पदानुभवतो न पदार्थस्मरणसम्भवोऽपीति यदुक्तं तदपि समाहितम्, पदज्ञानस्य पदार्थोपस्थितौ पूर्वकालिक-पदपदार्थसम्बन्धानुभवजन्यसं-स्कारोद्बोधकतयैव तत्र स्मृतौ हेतुत्वाभ्युपगमात् । पूर्वमप्युपपादितमेतत् 'पूर्वानुभूत्या' इत्यादि पदवाक्य रत्नाकरांशमुद्धृत्य । पदार्थोपस्थिते: स्थाने पदज्ञानोद्बुद्धपदार्थविषयकसंस्कारस्य व्यापारत्वं स्वीकुर्वता संस्कारे साक्षात् श्रावणप्रत्यक्षात्मकपदज्ञानजन्यत्वविरहात् । तत्र तज्जन्यत्वघटितव्यापारलक्षणगमनाय कष्टकल्पनासंस्कारे पदजन्यत्वारोपकल्पनात्मिका आश्रयितव्येत्यपि कष्टमेव । अणुदित् सूत्रभाष्यमुद्योतयता नागेशेन वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वं भाष्यकृदभिमतमिति स्वोक्त्यैव पूर्वमावेदितम् ।

पदपदार्थसम्बन्धविशेषत्वस्याकाशपदेन सहाकाशार्थस्य समवायात्मके सम्बन्धेऽपि सत्त्वात् शाब्दबोधहेतुत्वं, शाब्दबोधहेतुपदार्थोपस्थितिजनकज्ञानविषयत्वम्वा तद्विशेषणतयाऽपेक्षितमेव । विशेषपदेन विवक्षित-विशेषस्यैव परिग्राह्यत्वोक्तौ तु परिनिष्ठितादिलक्षणमपि 'अप्रवृत्तनित्यविध्युद्देश्यताव-च्छेदकानाक्रान्तत्वादि' नोचितं स्यात्, शब्दविशेषत्वमात्रस्यैव पर्याप्तत्वसम्भवात् । तथा शाब्दिकदृष्ट्या शक्तिव्यञ्जनान्यतरत्वं यदि वृत्तिलक्षणं निर्दुष्टम्, तदा व्यञ्जनानङ्गीकर्तृलक्षणमङ्गीकर्तृमते शक्तिलक्षणान्यतरत्वं तल्लक्षणं कुतो नोचितम् ? वृत्तिपदव्यवहार्यत्वस्य वृत्तिपदव्यवहारोपयोगित्वाभावेऽपि व्यावर्तकत्वन्तु सम्भवत्येव, व्यावृत्तिर्व्यवहारो वा लक्षणमिति दर्शितसिद्धान्ते विकल्पार्थक 'वा' शब्दस्य व्यावृत्ते: प्रथमोपादानस्य च विद्यमानत्वात् ।

इत्थं सकलपदार्थसाधारणैकजातीयसम्बन्धत्वविरहाय समवाये कालिके च सत्त्वेऽपि स्वनिष्ठवाच्यत्ववत्त्व, स्वनिष्ठप्रमेयत्ववत्वादिषु नैव सत्त्वम्, सर्वार्थेषु सर्वशब्देषु च तादृशसम्बन्धसत्त्वात् ।

'वैजात्यं च सम्बन्धे शाब्दबोधानुकूलपदार्थस्मृत्यनुकूलज्ञानविषयकरोतीति कथञ्चिद् वक्तुं शक्यते' इत्युपन्यस्तम् ।[१] तत्र कथञ्चिदि' ति तु नोचितं प्रत्येमि । असाधारणधर्मो लक्षणमेतदनुसारं केवलं लघुभूते असाधारणधर्मेऽन्वेष्टव्ये वृत्तित्ववत्त्वमपि वृत्तेर्लक्षणं भवितुं शक्नोति, वृत्तिपदशक्यतावच्छेदकतया च वृत्तित्वजातिसिद्धिसम्भवात् । वृत्तित्वस्य जातिरूपत्वानङ्गीकारेऽपि भेदत्वादेरिव अखण्डोपाधिरूपता-मङ्गीकृत्यापि तथासम्भवात् । अतो यावच्छक्यं सखण्डतोपपादनमेव वरम्, अन्यथा अष्टमपदार्थतैव स्यादिति सखण्डं स्वरूपमेवास्तु इति शम् ।।

**सन्दर्भग्रन्थाः—**


१. पदवाक्यरत्नाकरः पृ.५१
२. पाणिनीयव्याकरणे प्रमाणसमीक्षा पृ.२०८
३. विवृत्तिटीका, शक्तिवादः पृ.२
४. शक्विादस्य विवृतिटीका, पृ.१
५. शक्तिवादविवृति-टीका.पृ.३
६. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ.२०८
७. तत्त्वचिन्तामणिः पृ.६२७
८. तत्त्वचिन्तामणिप्रकाशटीका, पृ.६२७
९. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ.२०७
१०. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ. २०४, २०६
११. पाणिनीयव्याकरणे प्रमाणसमीक्षा, पृ.२०८



सहायकाचार्यः

रोसड़ासंस्कृतमहाविद्यालयः

# काव्यशास्त्रपरम्परायामात्मतत्त्वम्

डॉ. अनिलकुमारः

कवेः कर्म काव्यमिति काव्यस्य व्युत्पत्तिनिमित्तं लक्षणं, प्रवृत्तिनिमित्तं च सर्वसम्मतं मम्मटनिरूपितम्– 'तददोषौ शब्दार्थौ सगुणवनलङ्कृती पुनः क्वापि' इति काव्यलक्षणम् । अर्थात् च्युतिसंस्कृत्यादयो ये नित्यदोषाः सन्ति ते काव्ये न स्युः, रसस्य नित्यधर्मा ये गुणास्तेऽपि तत्र भवेयुः किञ्च सर्वत्र तु सालङ्कारौ शब्दर्थौ कुत्रचिद्रसस्य यदि रसस्य प्रतीतिर्भवति अलङ्कारस्य च स्फुटतया प्रतीतिर्न जायते तदापि न काव्यस्य हानिः अर्थात् काव्यं भविष्यत्येव । अस्य काव्यस्य सौन्दर्यधायकानि यानि तत्त्वानि सन्ति तेषां सर्वेषां लक्षणानि काव्यशास्त्रे निरूप्यन्ते । तस्य काव्यशास्त्रस्यैका विस्तृता महनीया च परस्परा विद्यते सा चाभरतादधुनापर्यन्तं निरन्तरं प्रवहमाना दरीदृश्यते । सर्वेषु शास्त्रेषु प्रायेणात्मतत्त्वस्य विषये वर्णनमायात्येव उपनिषत्सु अहं ब्रह्मास्मि, तत्त्वमसि, सत्यं ज्ञानमनन्तं ब्रह्म एवमेव कठोपनिषदि तस्य विषये उल्लिखितमस्ति –

**न जायते म्रियते च विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।**

**गीतायामस्य महत्त्वमेवं विधमुच्यते –**

**वासांसि जीर्णानि यथा विहाय नवानि गृहणाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ।।** (२.११)

न्यायशास्त्रे ज्ञानाधिकरणमात्मेत्युक्त्वा चैतन्यं च तद्वैशिष्ट्यं प्रतिपादितम् । सङ्केतितचिह्नानि च तस्य - प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि (वै.सू.३.२.४) निरूपितानि सन्ति । स चात्मा द्विविधः परमात्मा जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मैक एव । जीवात्मा प्रतिशरीरं भिन्नं विभुर्नित्यश्चैवं तर्कसंग्रहे । मीमांसाशास्त्रे स्वसंवेद्यः स भवति, नासावन्येन शक्यते द्रष्टुं दर्शयितुं वेति शाबरभाष्ये वदति तद्ग्रन्थकारः । सर्वसिद्धान्तसंग्रहे च –

**बुद्धीन्द्रियशरीरेभ्यो भिन्नात्मा विभुर्ध्रुवः ।**
**नानाभूतः प्रतिक्षेत्रमर्थज्ञानेषु भासते ।।** (स.सि.सं.६)

अद्वैतवेदान्ते शाङ्करभाष्ये – ''आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिद्धयति । एवं सर्वेषु शास्त्रेषु आत्मतत्त्वस्य निरूपणमवलोक्यते । सम्प्रति काव्यशास्त्रपरम्परायात्मतत्त्वस्य विषये उच्यते - काव्यशास्त्रे षट् सम्प्रदायाः सन्ति ते च रसालङ्काररीति वक्रोक्ति-औचित्यध्वनिश्चेति । एतेषु सम्प्रदायेषु रससिद्धान्तस्य संस्थापको भरतो नाट्यशास्त्रस्य प्रणेता यस्मिन् रससूत्रमेवं प्रतिपादितम् – विभावानुभावव्यभिचारिसंयोगाद्रस-निष्पत्तिरिति । यद्यपि अस्मिन् नाट्यशास्त्रे रस आत्मरूपेण नोल्लिखितस्तथापि रसो वै स इति आप्तवचनात् स आत्मैव विद्यते । तत्र काव्यवासनापरिपक्वमात्रसंवेद्यैः विभावादिशब्दव्यपदिश्यैः रत्यदिवासनैव रसः । स च तथैवालौकिकस्यास्वादस्य प्रतीतौ समर्थः यथा

शरावादीनां पिहितो दीपस्तन्निःसृतौ स्वसमीपवर्तीन् पदार्थान् प्रकाशयति स्वं च प्रकाशते । तस्य च प्रमाणं सचेतसामनुभव एव यथोक्तं साहित्यदर्पणकारेण -

**करुणादावपि रसे जायते यत्परं सुखम् ।**
**सचेतसामनुभवः प्रमाणं तत्र केवलम् ।।** (सा.द. ३.४)

यतोहि काव्ये रससारश्चमत्कारः । मम्मटोऽपि काव्यप्रकाशे तथैवास्य रसस्य महत्त्वं काव्यप्रयोजनेषु निगदति – ''सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम् ।'' (का.प्र.का.वृ.) वस्तुतो रस सहृदयस्यान्तःकरणे विद्यते परञ्च सर्वदा सुप्तावस्थायां यदा विभावानुभावव्यभिचाभिस्सह तस्य संयोगो जायते तदा स जागृतो भवति अस्माभिश्च तस्य अनुभूति आलम्बनैर्नटैः उद्दीपनैस्तत्परिवेशैः अनुभावैः चेष्टादिभिः, व्यभिचारिभिनिर्वेदादिभिः संयोगात् रसो जायते । एवमेवास्यैव वस्तुतो रसस्यात्मत्व काव्ये विद्यते । आचार्यभामहो विद्यतेऽलङ्कारसिद्धान्तस्य प्रवर्तकस्तत्र काव्यालङ्कारे तेन 'न कान्तमपि निर्भूषं विभाति वनिताननम् इत्युक्त्वालङ्कारस्य काव्यशास्त्रे महत्त्वं प्रदर्शितम् । किञ्चालङ्कारशास्त्रमपि काव्यशास्त्रस्यैव नामापरमुच्यते । सोऽवादीत् –

**रूपकादिरलङ्कारस्तथान्यैर्बहुधोदितः ।**
**न कान्तमपि निर्भूषं विभाति वनिताननम् ।।**
**रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ।।**
**तदेतदाहु सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।**
**शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ।।** (का.भा.१ परिच्छेद)

अत्रापि आत्मेति शब्दस्यालङ्कारविषये प्रयोगो नास्ति परञ्चालङ्कारशब्दस्य भावव्युत्पत्त्या ग्रहणं क्रियते चेदनेनालङ्कारपदेनालङ्कृतिरलङ्कार इत्यनेन समेषां काव्यसौन्दर्याधायकतत्त्वानां समावेशो भवति । करणव्युत्पत्त्या च यमकादीनां समावेशः । अतः सौन्दर्यधायकं प्राणस्वरूपं यत्तत्त्वं विद्यते तदात्मैवेति उपपद्यते । चालङ्काराः काव्यस्य सर्वेष्वंशेषु तिष्ठन्ति सौन्दर्यधायकत्वेन जयदेवस्य वचनमपि विषयेऽस्मिन् श्लाघनीयम् –

**अङ्गीकरोति यत्काव्यं शब्दार्थावनलङ्कृती ।**
**असौ न मन्यते कस्मादनुष्णमनलंकृती ।।** (च.लो.१.८)

एवमलङ्कारसिद्धान्तस्यापि आत्मत्वं सिद्धयत्येवेति सुस्थिरम् । आत्माशब्दस्य प्रयोगः साक्षाद्रूपेणाचार्यवामनेन स्वकाव्यलङ्कारसूत्रवृतौ एवादौ विहितः । यथोद्धरति सूत्रं स - 'रीतिरात्मा काव्यस्य' रीतिनामेयमात्मा काव्यस्य, का पुनरियं विशिष्टा पदरचना रीतिः अत्र विशिष्टपदेन गुणानां ग्रहणं अर्थात् विशिष्टगुणयुक्तपदरचना रीतिः । सा च रीतिः आनन्दवर्धनादिभिस्समासमाध्यमेन विभक्ताः । यथोक्तम् –

**असमासासमासा च मध्यमेन च भूषिता ।**
**तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता ।।**

**गुणान् आश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा रसान् ।।''**

अत्र सङ्घटनेति रीतिः सा त्रेधा वैदर्भी अल्पसमासासमासा वा, गौडी समासाबहुला ओजकान्तिमती च, माधुर्यसौकुमार्योपपन्ना पाञ्चाली । वैदर्भी समग्रगुणोपेता भवति । सम्प्रति या वाक्यरचना सा काव्यस्य आत्मा कथमिति अस्मिन् प्रसङ्गे वामनेन दृष्टान्तोऽयं प्रस्तुतः - यथा चित्रे रेखात्मवत् भवति नैव तद्विना चित्रस्य चित्रत्वं तथैव काव्येऽपि रीतीनां स्थितिरवगन्तव्या । अर्थात् चित्रे यदि रेखा न स्यात्तदा तत्र चित्रस्य सत्तापि नैव भविष्यति तथैव रीतिरपि काव्ये न चेत्काव्यमपि नैव सिद्धयति । अत सा तस्य भाव्यस्यात्मा । चतुर्थः सम्प्रदायोऽस्ति वक्रोक्तिसम्प्रदायः यस्य च संस्थापको वक्रोक्तिजीवितकारः कुन्तकः । तत्र च तेन यथा ग्रन्थस्याभिधानं कृतं तेन जीवितमित्यात्मा तस्याश्च किं लक्षणमिति जिज्ञासायामाह –

**उभावेतालङ्कार्यौ तयोः पुनरलङ्कृतिः ।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते ।।** (व.जी.न.न)

वृत्तौ भणति स एव - वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा कीदृशी - वैदग्ध्यभङ्गीभणितिः । वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः तया भणितिः विचित्रैवाभिधा वक्रोक्तिरित्युच्यते । तस्या वक्रोक्तेः षड् भेदा वर्ण-पदपूर्वार्द्ध-प्रत्ययाश्रयः-वाक्य-प्रकरण-प्रबन्धभेदात् । अर्थात् आवर्णात् प्रबन्धपर्यन्तं वक्रता तिष्ठत्येव अतस्तस्या स्थितिरात्मवत् काव्ये भवति । वक्रोक्तिसिद्धान्तात्परं ध्वनिसम्प्रदायस्य प्रवर्तक आनन्दवर्धनः स्वमहनीये ग्रन्थे ध्वन्यालोके काव्यस्यात्मा ध्वनिरित्युद्घोषयति यस्य नामान्तराणि रसः, व्यङ्ग्यः, व्यञ्जकः, व्यञ्जनाव्यापारः, उत्तमं काव्यञ्च विद्यन्ते । स च ध्वनिः मुख्यरूपेण वस्त्वलङ्काररसभेदात् सर्वत्र तिष्ठति । सो ध्वनिः प्रतीयमानं वा महाकवीनां वाणीषु कथं विभाति तस्मिन् विषये उच्यते –

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।।** (ध्व.१.४)

यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः इति वृत्तौ । अयं ध्वनिः सामान्येन द्विविध अविवक्षितवाच्यविवक्षितान्यपरवाच्यश्च । अविवक्षित-स्यार्थान्तरसङ् क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्वौ भेदौ । विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यः, अंसलक्ष्यक्रमव्यश्च । संलक्ष्ये वस्त्वलकारौ, अंसलक्ष्ये रसः । एवं सामान्यावलोकनेन सो ध्वनिरपि तथैव आवर्णात्प्रबन्धपर्यन्तं तिष्ठति तस्मात्कारणाद् काव्यस्यात्मा ध्वनिरिति सिद्धयति यश्च वस्तुतो काव्यस्य आत्मा वस्त्वलङ्काररसेष्वपि आत्मरूपेण –

''काव्यस्यात्मा स एवार्थः'' अर्थात् रस एव यतोहि वस्त्वलङ्कारौ अन्ते रसं प्रति पर्यवस्येते । औचित्यसिद्धान्तो विद्यतेऽस्यां परम्परायामन्तिमः सिद्धान्तो यस्य प्रवर्तकेनाचार्यक्षेमेन्द्रेण औचित्यविचारचर्चायां अस्य सिद्धान्तस्य विषये उक्तम् । औचित्यस्य लक्षणं कुर्वन्नाचार्यो वदति –

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत् ।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ।।**

अर्थात् यदौचित्यं काव्यजीवातुभूतमङ्गीक्रियते तस्य स्वरूपमिदमस्ति – यस्य वस्तुनः यत् किल निश्चयेन सदृशमनुरूपं तत् काव्यतत्त्वविदः उचितं कथयन्ति तस्य च यो भावस्तदेवौचित्यमुच्यते । तदौचित्यं विना कुत्रापि किमपि न शोभते यथोदाहरणं

**कण्ठे मेखलया नितम्बफलके तारेण हारेण वा,**
**पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा ।**
**शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-**
**मौचित्येन विना रूचिं प्रतनुते नालङ्कृतिर्नो गुणाः ।।** (औ.वि.६)

अर्थात् अस्मिन् पद्ये सर्वत्रानौचित्यमेव लक्ष्यते । अतः इदमुच्यते –

**उचितस्थानविन्यासादलङ्कृतिरलंकृतिः**
**औचित्यादच्युता नित्यं भवन्त्येव गुणा गुणाः ।।** (औ.वि.६)

औचित्यमिदमपि आपदात् प्रबन्धपर्यन्तं कथं व्यापि जीवितमस्ति तस्मिन् विषये क्षेमेन्द्रेण प्रोक्तम् –

**पदे वाक्ये प्रबन्धार्थे गुणेऽलङ्करणे रसे ।**
**क्रियायां कारके लिङ्गे वचने च विशेषणे ।।**
**उपसर्गे निपाते च काले देशे कुले व्रते ।**
**तत्त्वे सत्त्वेऽप्यभिप्राये स्वभावे सारसंग्रहे ।।**
**प्रतिभायामवस्थायां विचारे नाम्न्यथाशिषि ।**
**काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम् ।।**

अत्र जीवितमिति पदेन काव्यस्यात्मा तदेवौचित्यं ज्ञातव्यम् । तेनैव काव्ये चमत्कारः आयाति कथमिति चेत्तस्योदाहरणं यथा –

तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम् ।
चन्द्राननेव कस्तूरीकृतं श्यामेव चान्दनम् ।।

अस्यौचित्यस्य मूलतत्त्वरूपेणोल्लेखस्तु ध्वन्यालोककारेण कृतः आसीत् परञ्च तस्य पल्लवितरूपं क्षेमेन्द्रेणैव प्रदर्शितम् । ध्वन्यालोके –

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।**
**प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ।।** (ध्व.३.१४)

किञ्च नाट्यशास्त्रेऽपि सङ्केतो विद्यते –

**अदेशजो हि वेषस्तु न शोभां जनयिष्यति ।**
**मेखलोरसि बन्धे च हास्यायैवोपजायते ।।**

परञ्चात्मरूपेण निरूपणस्य श्रेयो गच्छति क्षेमेन्द्रम्प्रति अतः सर्वेषां वस्तूनां या आनुकूल्येन स्थितिः सैवौचित्यनाम्ना आत्मरूपेण क्षेमेन्द्रोऽङ्गीचकार । एवं काव्यस्यात्मा क इत्यस्मिन् विषये प्राचीनाचार्याणां मतमत्र प्रतिपादितं सम्प्रति ये आधुनिकाः काव्यशास्त्रकारास्तेषामपि मतमवधेयं भवति – तत्रादौ

आचार्यरेवाप्रसादद्विवेदिनो मतमस्ति – ''काव्यस्याङ्गपरीक्षायामलङ्कारो हि नस्तत:'' अर्थात् एतेषां मतेऽलङ्कार एवात्मा काव्यस्येति प्रतिपादितं तेन काव्यालङ्कारकारिकायाम् । तदनन्तरमवलोकनीयोऽस्ति आचार्यराधावल्लभत्रिपाठिनोऽभिमतम् - पूर्णता चालङ्कार:, अलङ्कार: काव्यजीवनमिति अनेन कथनेनापि अलङ्कारस्यैवात्मत्वं सिद्धयति न त्वन्यस्य । वस्तुतोऽत्र अनयोर्मत्यो: प्रभावो लक्ष्यते आचार्यवामनस्यास्य सूत्रस्य - 'सौन्दर्यमलङ्कार:' अत्रालङ्कारस्य भावव्युत्पत्त्या ग्रहणमाचार्यौ कृतवन्तौ तेन च सर्वाणि सौन्दर्याधायकानि तत्त्वानि अलङ्कारपदेन समावेशितानि भवन्ति । जम्मूविश्वविद्यालयस्याचार्य: काव्यस्य जीवितं चमत्कारमेवाङ्गीकरोति रामप्रतापवेदालङ्कार: । एवमनेनाध्ययनेन ज्ञायते यदद्यापि काव्यस्यात्मस्वरूपविषये विभिन्नानि मतानि सन्दृश्यन्ते । परञ्चैतानि मतानि काव्यशास्त्रपरम्पराया: पोषकानि न तु दुष्कानि । अन्ये ये आचार्या हर्षदेवमाधवाभिराजराजेन्द्रसदृशा:, तै: काव्यशास्त्राणि तु रचितानि परञ्चात्मनो विषये प्रायो नैव विशिष्टानि तथैव आचार्यरहसबिहारिद्विवेदिनोऽपि काव्यशास्त्रमेकं रचितं परञ्चात्मनो वैशिष्ट्यं न लक्ष्यते ।

सर्वं समीक्षणानन्तरं वस्तुतो आचार्यानन्दवर्धनस्यैव मतं सर्वेषामभिमतम् । यतोहि अलङ्कारा: काव्ये कटकादिवत् भवन्ति, रीति: अवयवसंस्थाविशेषवत्, गुणा: शौर्यादिवत्, रसश्चात्मा, शब्दार्थौ तस्य काव्यस्य शरीरम् । परञ्च यो ध्वनि: वस्त्वलङ्काररसभेदात् त्रिविधस्तत्रापि आत्मा रस एवेति प्राक्प्रतिपादितोऽस्ति । गुणा रसस्य स्थिरधर्मा:, अलङ्काराश्चानित्या: । रीतिश्च शरीरस्य यथा आकृतिविशिष्टा तथैव काव्ये शब्दार्थयोरियं संरचना विशिष्टा: । यो बाह्यपदार्थो भवति तस्यात्मत्वं कथमपि नैव सम्भवि । रसस्तु सामाजिकानामन्तश्चेतसि द्रवीभूतमयी वासनाख्य: संस्कारयुक्ता जागृतावस्था । स च नित्य:, अत: तस्य धर्मो गुणो माधुर्यादिरपि नित्य: । एवं रसस्यात्मत्त्वं सिद्धयति । एवं काव्यशास्त्रपरम्परायामात्मनो विषयेऽनेकानि मतानि अधुनावलोक्यन्ते । प्रथमेन द्वितीयस्य खण्डनं विधाय स्वस्य मतमुपस्थापितम् । तेन खण्डनमण्डनेन शास्त्रचिन्तनपरम्परा निरन्तरं सुदृढा भवति इति मे मति: । अत: शास्त्राणामध्ययनम्, मननम्, आचरणम्, प्रचारणम् चावश्यकानि तेनैव शास्त्रपरम्पराया: सरक्षणं सम्भवि भविष्यति । यथोक्तं श्रीहर्षेण - अधीतिबोधाचरणप्रचारणै: - विद्याचतुर्दशं कृतवान् कृत: स्वयमिति शम् ।।

संविदाध्यापक:

मुक्तस्वाध्यायकेन्द्रम्

राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.)

श्रीसदाशिवपरिसर:, पुरी

# न्यायदर्शने आत्मतत्त्वम्

डॉ. नवीनकुमारप्रधानः

"प्रमाणैरर्थपरीक्षणं न्यायः[१]" प्रमाणानां प्रमेयेषु संघटनात् इदं दर्शनं "न्यायदर्शन" नाम्नोच्यते । न्यायदर्शनस्य प्रणेता गौतममुनिः (अक्षपादः) इति स्वीक्रियते । न्यायदर्शनस्य विकासो द्विधा जात आसीत् । प्रथमपक्षः सूत्रकाराद् आचार्यगौतमाद् आरभ्यते । अत्र प्रमाणप्रमेयसंशयप्रयोजनादीनां षोडशतत्त्वानां प्रमेयाणां वा विवेचनं विहितम् अस्ति । अतः अयं "प्राचीनन्यायः" प्रमेयमीमांसात्मकपक्षनाम्ना उच्यते । द्वितीयपक्षः "नव्यन्यायः" प्रमाणमीमांसात्मकपक्षः उच्यते । यतो हि अत्र प्रत्यक्षानुमानोपमानशब्दाभिधानानां चतुर्णां प्रमाणानां सूक्ष्मं विवेचनं विहितम् अस्ति ।

गौतमाचार्यस्य न्यायसूत्रं पञ्चसु अध्यायेषु विभक्तमस्ति । एकैकोऽध्यायः द्वयोः आह्निकयोः विभक्तोऽस्ति । तत्र षोडशपदार्थानाम् उद्देशः अर्थात् नामकथनम्, लक्षणम् अर्थात् परिभाषा परीक्षणं च एतानि विहितानि सन्ति । षोडशपदार्थानां ज्ञानेन निःश्रेयसः अर्थात् मोक्षस्य प्राप्तिः भवतीति न्यायदर्शनस्य मतमस्ति ।

न्यायदर्शने षोडशतत्त्वानि निःश्रेयसप्राप्तये हेतुभूतानि उक्तानि सन्ति । तद्द्वारैव मनुष्यः मोक्षं लब्धुं शक्नोति । तानि सन्ति एतानि-प्रमाणम्, प्रमेयम्, संशयः, प्रयोजनम्, दृष्टान्तः, सिद्धान्तः, अवयवः, तर्कः, निर्णयः, वादः, जल्पः, वितण्डा, हेत्वाभासः, छलम्, जातिः, निग्रहस्थानं चेति । तत्र द्वयोः प्राधान्यमस्ति प्रमाणप्रमेययोः । प्रमाणम् ज्ञानप्राप्तेः साधनमस्ति । यथार्थानुभवः[२] प्रमा तत्साधनं च प्रमाणम्" इति लक्षणानुसारेण यथार्थानुभवस्य साधनं प्रमाणम् उच्यते । प्रमीयते अनेन इति प्रमाणम् । प्रमाणम् चतुर्विधं भवति – प्रत्यक्षम्, अनुमानं, उपमानम्, शब्दप्रमाणं च इति । इन्द्रियार्थसन्निकर्षयोगेन यस्य ज्ञानस्य प्राप्तिः भवति तत् प्रत्यक्षमुच्यते । प्रत्यक्षं सामान्यतया द्विविधम् – निर्विकल्पकसविकल्पकभेदात् । प्रत्यक्षप्रमाणस्य अन्यौ द्वौ भेदौ अपि भवतः लौकिक - अलौकिकभेदात् । लौकिकप्रत्यक्षम् अपि द्विधा भवति - वाह्यम् आन्तरं चेति । वाह्यप्रत्यक्षम् एकमेव भवति । एवं रूपेण लौकिकप्रत्यक्षम् षड्विधम् उक्तं भवति । लौकिकप्रत्यक्षस्य कृते इन्द्रियार्थसन्निकर्षः षड्विधो भवति - यथा - संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायसमवायसमवेतसमवायविशेषणविशेष्यभावभेदात् ।

कस्यचन लिङ्गस्य हेतोः ज्ञानेन तत् लिङ्गधारकस्य वस्तुनो ज्ञानस्य प्राप्तिः "अनुमानम्" इत्युच्यते अनुमानं त्रिविधं भवति - पूर्ववत्, शेषवत् - सामान्यतोदृष्टं चेति । अनुमानस्य कृते पञ्चवाक्यानि भवन्ति यानि "न्यायावयव" नाम्ना पञ्चावयव नाम्ना च उच्यन्ते । तानि - यथा - प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनं चेति । यथा – पर्वतो वह्निमान् धूमात् यथा महानसम्, तथा चाऽयं तस्मात् तथा इति । अनुमानस्य तृतीयोऽन्यो भेदो प्रकारो भवति; तदनुसारेण अनुमानं त्रिविधं भवति - केवलान्वयि -

केवलव्यतिरेकि - अन्वयव्यतिरेकिभेदात् । नैयायिकानां तृतीयं प्रमाणम् अस्ति उपमानम् । पूर्वानुभूतेन दृष्टेन वस्तुना वा सादृश्यधारणात् यत्र कस्यचन नूतनस्य वस्तुनो ज्ञानं भवति तद् ''उपमानम्'' उच्यते । यथा - गौरिव गवयः । चतुर्थं प्रमाणम् अस्ति - शब्दः । कस्यचन आप्तपुरूषस्य वचनं शब्दरूपं प्रमाणं भवति तथा हि आप्तोपदेशः शब्दः आप्तविषये उक्तम् – ''आप्तनाम अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रामादिवशादपि नान्यथावादीति चरके पतञ्जलिः''[३] ।

न्यायदर्शनस्य अन्यद् विवेच्यं तत्त्वमस्ति - प्रमेयम् । प्रमेयस्य ज्ञानम् मुक्ते; साधकं भवति । प्रमेयं द्वादशविधं भवति - आत्मा, शरीरम्, इन्द्रियम् अर्थः, बुद्धिः, मनः, प्रवृत्तिः, दोषः, प्रेत्यभावः अर्थात् पुनर्जन्म, फलं, दुःखम्, अपवर्गः अर्थात् मोक्षः, चेति । तृतीयपदार्थः संशयः - वस्तुविशेषस्य ज्ञानस्य प्राप्तेः विषये सन्देहः । कस्यचन फलस्य प्राप्तये क्रियमाणं कार्यं प्रयोजनं भवति । विवादरहितं वादिप्रतिवादिमध्ये निर्णीतोऽर्थः सिद्धान्तो भवति । स सिद्धान्तः चतुर्विधो भवति - सर्वतन्त्र - प्रतितन्त्र - अधिकरण - अभ्युपगमभेदात् । अवयवः ज्ञानस्य अङ्गानि । तानि पञ्चविधानि भवन्ति - प्रतिज्ञा - हेतु - दृष्टान्त - उपनय - निगमन - भेदात् । संशयस्य उपरमः तर्कः भवति । सन्देहतर्कानन्तरं जायमानो निश्चयः निर्णयो भवति । वादिप्रतिवादिनोर्मध्ये जायमानं प्रश्नोत्तरं वादः । विजयेच्छया वादी प्रतिवादी वा छलादीन् प्रयुङ्क्ते स जल्पः । पक्षप्रतिपक्षसाधनविहीनस्तर्कः वितण्डा भवति । हेत्वाभासे हेतोः आभासमात्रमेव भवति । हेत्वाभासः पञ्चविधो भवति - असिद्ध - विरूद्ध - अनैकान्तिक - कालात्यापदिष्ट - प्रकरणसमभेदात् । वक्तुः अभिप्रायस्य भ्रष्टतया प्रस्तुतिमुखेन अन्यार्थप्रतीतिकारकं तथ्यं छलं भवति । छलम् त्रिविधम् - वाक्छल - सामान्यछल - उपचारछलभेदात् । जातौ अदूषणस्य दूषणवद् आभासो भवति । सा जातिः चतुर्विंशतिप्रकारा भवति । निग्रहस्थाने विपक्षस्य निग्रहो विधीयते । एतेषां पदार्थानाम् अवदानं तेषां यथार्थमीमासा च दार्शनिकस्य जगतः कृते न्यायदर्शनस्य महत्त्वपूर्णं योगदानम् अस्ति । न्यायसूत्रोपरि वात्स्यानेन भाष्यं प्रणीतम् । तथा च उद्योतकर - वाचस्पतिमिश्र - जयन्तभट्ट - भासर्वज्ञ - उदयाचार्य - गङ्गेशोपाध्याय - जयदेवप्रभृतयो विद्वांसः विविधान् टीकाग्रन्थान् प्रणीतवन्तः ।

न्यायदर्शनशास्त्रे ईश्वरस्य सिद्धान्त अतिमहत्त्वपूर्णो भवति । ईश्वरो जगतो निमित्तकारणम् अस्ति । न्यायदर्शनशास्त्रस्य मते निःश्रेयसतत्त्वं मुक्तिः, मोक्षः, अपवर्गो वा भवति दुःखस्य आत्यन्तिकी निवृत्तिः । तथा च उक्तम् - ''तदत्यन्तविमोक्षोऽपवर्गः'' इति ।

न्यायदर्शनस्य दृष्टिः अतिसंवलितयथार्थवादस्य अस्ति । तदनुसारेण अस्य विश्वस्य मूले परमाणु - आत्मा - ईश्वरादयो नित्याः पदार्थाः वर्तन्ते । येन जगत् स्थितमस्ति । इन्द्रियगोचरजगत् वस्तुतः सदेव परमाणुः अस्य समवायिकारणम् । ईश्वरस्य निमित्तकारणं भवति । ईश्वरः अनुमानगम्यो वर्तते ईश्वरस्य अनुमानप्रकाराः च इत्थम्, अस्ति - ईश्वरः अस्ति । कार्यात्, आयोजनात्, धृत्यादेः, पदात्, प्रत्ययतः,

श्रुतेः, वाक्यात्, संख्याविशेषात्, अदृष्टात् च । तदुक्तम् उदयनाचार्येण –

''कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।

वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ।। इति ।

न्यायदर्शनस्य मतेन मुक्तौ सुखदुःखोभयमनोवृत्तीनां नाशे सति मनः कारणं सम्पद्यते । मिथ्याज्ञानकारणेन एव दोषस्य, प्रवृत्तेः, जन्मनः, दुःखस्य च उत्पत्तिः भवति । मिथ्याज्ञानमिदं तत्त्वज्ञानेन विनश्यति । यमनियमध्यानधारणादिना आत्मनः साक्षात्कारेण सुखदुःखरहितस्य चित्तस्य साम्यावस्थायाः प्राप्तिः एव न्यायदर्शनस्य चरमं लक्ष्यमस्तीति दिक् ।

**सन्दर्भाः –**


१. वात्स्यायन-न्यायभाष्यम् - १/१/१

२. उदयनन्यायकुसुमाञ्जलिः ।

३. नागेशभट्ट - परमलघुमञ्जूषा ।

४. गौतमन्यायसूत्रम् - १/१/२२

५. उदयन - न्यायकुसुमाञ्जलिः ५/१



संविदाध्यापकः

साहित्यविभागः

राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.)

श्रीसदाशिवपरिसर, पुरी, ओडिशा

# शब्दस्य प्रमाणान्तरत्वविमर्शः

श्रीरमेशप्रसादरायः

वैशेषिकादयो हि आकांक्षादिमद् गौरस्तीत्यादि-पदकदम्बश्रवणसमनन्तरं जायमानबोधम् अन्यत्रैव गतार्थयन्तोऽतिरिक्तां शाब्दीं प्रमां, तत एव च शब्द नामकमतिरिक्तं प्रमाणं नाङ्गीकुर्वन्ति । यदुक्तम् - ''शब्दोपमानयोर्नैव पृथक् प्रमाण्यमिष्यते ।अनुमानगतार्थत्वादिति वैशेषिकं मतम् । ''इति ।[१] वैशेषिकादिकान् लक्ष्यीकृत्य कथयन्ति जगदीशतर्कालङ्कारा यत् शब्दस्य प्रमाणान्तरत्वाभावे गौरस्तीत्यादौ जायमानो बोधो भवतां मते किमात्मकः ? स्मृत्यात्मकः, अनुभवात्मको वा ? तत्र न प्रथमः, समानाकारकसंस्कार-जन्यत्वाभावात्, यद्धर्मिकयद्वत्तासंस्कारः पूर्वतो यत्र नास्ति तद्धर्मिक-तद्वत्तान्वयबोधस्य कारणबोधस्य कारणबाधेन स्मृतित्वसम्भवाभावादेव पदार्थोपस्थित्यात्मकेन ज्ञानलक्षणसंनिकर्षेण जनित उपनीतभानापरपर्यायः ।द्वितीयश्चेत्-सः किं लौकिकप्रत्यक्षात्मकोऽथवा अलौकिक एव पदार्थोपस्थित्यात्मकेन ज्ञानलक्षणासन्निकर्षेण जनित्त उपनीतभानापरपर्यायः । न तावत् प्रथमः, विषयैर्विशेष्यविशेषणसं-सर्गैरिन्द्रियसन्निकर्षाभावात् । नापि द्वितीयः, उपनीतभाने आकांक्षादिमत्पदापेक्षाया अभावात् । एकसम्बन्धिज्ञानस्यापरसम्बन्धिनः स्मारकत्वात् आश्रयतया गोपदसम्बन्ध्याकाशस्मरणे जाते पदानुपस्थितस्यापि तस्य स्मृत्यात्मकज्ञानलक्षणया तत्रोपनीतभानापत्तेश्च ।तत्र तद्विषयकोपनीतभानस्येष्टत्वे तदुत्तरकालमस्तित्वेन गां जानामीति गोधर्मिकास्तित्वान्वयबुद्धिविषयकानुव्यवसायवदेव आकाशान्वयबुद्धेरपि तत्रानुव्यवसायविषयत्वप्रसङ्गात् ।आपादितानुव्यवसायवारणाय तत्र आकांक्षादिमत्पदज्ञानतत्तदनुभवव्यक्तेः प्रतिबन्धकत्वकल्पने गौरवाधिक्यप्रसङ्गात् ।

यदि पदार्थोपस्थित्यात्मकोपनायकज्ञानादलौकिकं यद्युपनीतभानं तदा गवादावस्तित्वादेरिव अस्तित्वादावपि गवादेर्भानस्यातिप्रसङ्ग स्यात् । तस्माद् गौरस्तीत्यादावाकांक्षादिमतपदप्रयोज्य-तत्तदर्थसंसर्गावगाहिनो ये विशिष्टा अन्वयबोधास्तेषां नियन्त्रितार्थकत्वात् अतिरिक्तप्रमात्वमेव, न तु पूर्वोक्तेषु कुत्राप्यन्तर्भावः । अस्मादेव कारणात् 'एते पदार्थाः मिथः संसर्गवन्तस्तात्पर्यवद् योग्यतावत् साकांक्षपदकदम्बघटकपदस्मारितगोकर्मत्वादि- पदार्थवदि'त्यादिरीत्याऽनुमायामन्तर्भावोऽपि दर्शितविशिष्टान्वयबोधानां निरस्तः[२] यो वह्न्यादिर्यत्र शब्दानुमितिविषय एव वैशेषिकमतेऽपि, सोऽपि तत्र बाधकविरहे शाब्दानुमितिविषयतां गच्छेदित्याशयेन । शाब्दधियः प्रत्यक्षान्तर्गतत्वमनुमित्यन्तर्गतत्वं वा मतन्तुः भिन्नविषयकप्रत्यक्षधियम्प्रति भिन्नविषयकानुमितिम्प्रति च शाब्दधीसामग्र्याः प्रतिबन्धकता अपि नैव सम्भवा स्यात्, स्वं प्रति स्वस्य प्रतिबन्धकत्वाभावात् । शाब्दधीसामग्री-प्रति-बद्धयस्यान्यविषयकप्रत्यक्षस्य अन्यविषयकानुमितेश्च शाब्दसामग्रीप्रतिबद्ध्यायाः शाब्दबोधानात्मकत्वेन विशिष्य प्रतिबध्यप्रतिबन्धकभावः कल्प्येत चेत्, तदा तत्प्रयुक्त-गौरवाधिक्यापेक्षया शाब्दधियः प्रत्यक्षभिन्नानुमितित्वभिन्नत्वस्वीकृतिरेव लघीयसी स्यात् । तदुक्तम् ''साकांक्षशब्दैर्यो बोधस्तद-र्थान्वयगोचरः । सोऽयं नियन्त्रितार्थत्वात् न प्रत्यक्षं न चानुमा ।।'' इति ।[३]

शाब्दधियो दर्शितदिशा लिङ्गजत्वेनानुमितित्वसाधनायासोऽपि आयासाभास एव, बाधनिश्चयाभावेन अन्यथासिद्धस्य बाधविरहित्वरूपयोग्यतानिश्चयस्य तत्र कारणत्वाभावात् योग्यतामात्रलिङ्गकसंसर्गानुमितेरन्वय (शाब्द) बुद्धित्वे घटः कर्मत्वम् आनयनम् कृतिरित्यादिस्थलीयस्यापि तथात्वापत्तेश्च, योग्यतासंशयस्थलेऽपि अन्वयबुद्धेरनुभवसिद्धतया योग्यतानिश्चयस्य तत्र हेतुत्वस्वीकारासम्भवाच्च । गवादावस्तित्वादेर-न्वयबोधानुकूलाया आनुपूर्वीविशेषपर्यवसिताया आकांक्षाया गवाद्यर्थे विद्यमानत्वाभावेन गवादौ अस्तित्वादिसाध्यानुमापकत्वासम्भवाच्च । केवलयोग्यतायाः केवलाकांक्षायाश्च हेतुत्वासम्भवेन योग्यताविशिष्टाकांक्षाया आकांक्षाविशिष्टयोग्यताया वा हेतुतापि निरस्तैव ।[४] तदुक्तम्– "योग्यतार्थगताकांक्षा शब्दनिष्ठानुभाविका । प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः ।।" इति ।

नव्यवैशेषिकाः शब्दप्रामाण्यसाधनाय शब्दाप्रामाण्यवादिमतेऽपि पदानामेकवाक्यापन्नत्वरू-पसमभिव्याहृतत्वनिश्चयं विनाऽन्वयबोधानुत्पत्तया पूर्वहेतुज्ञानावश्यकत्वसन्दर्शनेन गौरस्तीत्यादौ गौरस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकांक्षावत्पदस्मारितत्वात्, घटवत् अथवा गौरस्तितावान् अस्तिपदसमभिव्याहृतगौः पदस्मारितत्वात् चक्षुर्वदित्याद्यनुमानेभ्य-एवान्वयधियः सिद्धिं विदधते । विनष्टेभाविनि वा घटे चक्षुरादौ वा अस्तित्वरूपसाध्याभाववति हेतोः सत्त्वेन व्यभिचारेऽपि न दोषः, स्वार्थानुमानेऽज्ञातव्यभिचारस्य दोषाधायकत्वानङ्गीकारात् समानप्रकारकस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वेन एकविधव्यभिचार-ग्रहदशायामन्यविधव्याप्तिनिश्चयसम्भवादित्युपपादयन्ति ।[५]

परन्तु नैतत् समीचीनम् गवादेः पदस्मारितत्वाद्यज्ञानदशायां जायमानस्य 'गौरस्ती' त्यादावन्वयबोधस्य उक्तहेतुना निष्पत्त्यसम्भवात् । पदजन्यायाः पदार्थस्मृतेः स्वरूपत एव (स्वविषयक-ज्ञानापेक्षाराहित्येनैव) अन्वयबुद्धावपेक्षितत्वात् प्रमाणविरहेऽपि पदजन्यपदार्थस्मृतिज्ञानस्य हेतुत्वाङ्गीकारे पदैरस्मारितस्यापि पदस्मारितत्वग्रहदशायामन्वयधीप्रसङ्गात् ।

गवादिपदानां ज्ञानपूर्वकत्वाद्यभावनिश्चयदशोत्पन्नस्य गवादिमुख्यधर्मिकास्तित्वान्वयबोधस्य सर्वानुभवसिद्धस्योत्पादानुपपत्त्य' गौः पदम् अस्तित्ववद् गो-गोचरज्ञानपूर्वकम् अस्तिपदसाकांक्ष-गौःपदत्वात्, तन्नैवं यथाकाशमि' त्याकारकं पदपक्षकानुमानमपि वैशेषिकोक्तमसङ्गतमेव । वाक्यार्थस्य वाक्यार्थ-बोधतः पूर्वमगृहीत्वेन वाक्यार्थगर्भसाध्यस्य प्रागनुत्पत्या अनुमानासम्भवात् ।

अपि च वाक्यार्थबोधस्य अनुमितित्वसिद्धौ सत्यामेव तत्र साकांक्षपदत्वादिलिङ्गकत्वकल्पनासम्भवः, परन्तु प्रमाणविरहेण तत्रानुमितित्वमेव न सिद्धयति, तदुत्तरमस्तित्वेन गामनुमिनोमीत्यनुव्यवसायविरहात् । प्रत्युत अस्तित्वेन गौः श्रुतो, न तु अनुमित इत्यनुभवस्यैव तत्र जायमानत्वात् । आत्मा वाऽरे श्रोतव्यः' इत्यादि-श्रुतिस्वारस्येन शाब्दत्वस्य श्रृणोतिपदशक्यतावच्छेदकत्वात् बाधकाभावेन भ्रान्तेस्तत्र वक्तुमशक्यत्वात्, तत्र तादृशानुव्यवसायस्यापलापे तु अनुमितिमात्रस्य पदजन्यत्वं प्रकल्प्य शाब्दबोधत्वमेव कुतो न स्यात्, समानविषयकप्रत्यक्षसामग्रीप्रतिबध्यत्वस्यानुमिताविव अन्वयबुद्धावपि सत्त्वात् ।

घटः कर्मत्वमानयनम् कृतिरित्यादिनिराकांक्षवाक्यस्थलीयपदार्थोपस्थितिमूलकोपनीतभाने व्यभिचारवारणाय आकांक्षादिमत्पदज्ञानजन्यत्वस्यैव शाब्दत्वसाधकत्वोपगमाद् वह्न्याद्यनुमितितः

पूर्वमाकांक्षाज्ञानासम्भवात् न वह्न्याद्यनुमितौ शाब्दत्वसम्भव-इत्यपि अकिंचित्करमेव, यतो हि पटादि-पदैस्तदर्थस्य पटादेः स्मरणे सति तदीयसम्बन्धस्मृतेरिव दहनाद्यर्थैस्तदर्थकवह्न्यादिपदस्य स्मरणोत्तरं तत्रापि पदधर्मिकाकांक्षाज्ञानसम्भवात् वाच्यतावद्वाचकत्वस्यापि सम्बन्धस्य स्मारकत्वाविशेषात् ।

ह्रदे धूमाभावानुमितौ साध्याघटितस्यैव धूमव्यापकीभूताभाव-प्रतियोगिवह्न्यभाववान् ह्रद इत्याकारकपरामर्शस्य अपेक्षिततया तस्य धूमाभावात्मकसाध्यस्य ज्ञानं विनैव सम्भवेन तादृशानुमितौ नान्वयबुद्धित्वोपादानसम्भव इत्यपि न, तत्रत्य परामर्शे साध्यस्य प्रवेशविषयेऽपि उद्बोधकान्तरवशात् तत्रापि साध्यवाचकपदस्मरणासम्भवात् । तत्रत्यपरामर्शे धूमस्तु प्रविष्ट एव, स स्व-विरोधि धूमाभाववाचकप-समुपस्थापयेत् ।

अपि च घटादन्य इत्यस्मात् घटप्रतियोगिकान्यत्वप्रकारेण निरवच्छिन्नविशेष्यताको घटान्यस्य बोधो यथा यादृशो भवति, तस्योपपत्तिः शब्दप्रामाण्यपक्षे तादृशानुपूर्वीप्रकारकज्ञानत्वेन तथाविधान्वयबोधम्प्रति हेतुत्वाज्जायते, शब्दाप्रमाण्यवादिनो वैशेषिकस्य तु तत्र भेदो घटप्रतियोगिकः तत् साकांक्षान्यपदस्मारि-तत्वादित्यादिरीत्या तथा न सम्भवः, तत्र पक्षविधया भेदरूपस्यान्यत्वभानेऽपि अन्यत्वप्रकारेणान्यस्य भानाभावात् । निर्धर्मितावच्छेदकानुमितेरदर्शनात् अन्य पदस्यैव घटान्यत्वप्रकारेण घटान्यस्य लक्षकत्वे घटादित्यस्य वैयर्थ्यं स्यात् । तात्पर्यग्राहकतया घटादित्यस्य सार्थक्योपपादने घटोऽस्तीत्यादावपि घटादिपदस्यैवास्तित्वादिविशिष्टघटादिलक्षकत्वसम्भवे तत्रास्तित्वघटयोरन्वयबोधापलापापत्तेः ।

अत्र जरन्मीमांसकाः कथयन्ति-यत् साकांक्षत्वादि-धीरिव वाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वरूपा-प्तोक्तत्वनिश्चयोऽपि शाब्दबुद्धौ हेतुः, अतो नैकपदार्थधर्मिकोऽपरपदार्थस्यान्वयबोधोऽनुमित्यात्मको भवितुं शक्नोति, सिद्धिसत्वे विनानुमित्सामनुमितेः सम्भवविरहात् । किन्तु अनुमित्यतिरिक्तोऽपि शाब्दान्वयबोधो गृहीतग्राहित्वात् न प्रमा । धारावाहिकप्रत्यक्षव्यक्तीनां गृहीतग्राहित्वेऽपि नाप्रमात्वम्, यज्जातीय-विशिष्टज्ञानत्वावच्छेदेन समानाकारकं निश्चयोत्तरत्वं भवति तज्जातीयान्ययथार्थज्ञानस्यैवागृहीतग्राहितया प्रमात्वाभ्युपगमात् । धारावाहिक-प्रत्यक्षज्ञानस्थले च द्वितीयादिज्ञानेषु समानाकारकनिश्चयोत्तरत्वाभावा-दुक्तनियमान्तर्गतान्यपदबोद्ध्यभेदप्रतियोगिबोधकतज्जातीयपदेन धारावाहिकज्ञानाग्रहणात् । समानाकारकानुभवजनितस्मृतिव्यक्तीनां वाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वरूपाप्तोक्तत्वनिश्चयोत्तर-जातशब्दधियां च समासां समानाकारकनिश्चयोत्तरत्ववत्त्वात् तज्जातीयपदग्राह्यत्वस्यैव सत्त्वात् प्रमात्वाभाव एवेति ।

प्राकरणिकं जरन्मीमांसकमतं प्रत्याख्यातं शब्दशक्तिप्रकाशिकाकृद्भिः-यत् शाब्दधियः पूर्व वाक्यार्थज्ञाननैयत्यविरहेण दर्शिताप्तोक्तनिश्चयस्य शाब्दधीहेतुता नोचिता । आप्तोक्तत्वनिश्चयस्य शाब्दधीहेतुत्वाभावे च नोक्तदिशा अप्रमात्वोपपादनसम्भवः । स्वोक्तौ निर्युक्तिकदुराग्रहे तु-लौकिकशब्दानामिव वैदिकशब्दानामपि तेषां प्रमाणत्वं न स्यात् । लोक इव वेदेऽपि तदुक्तदिशा तादृशाप्तोक्तत्वनिश्चयस्य शाब्दमतावपेक्षणात् । केवलं लोक एव तथास्वीकारे बीजाभावात् कार्यतावच्छेदककोटौ आप्तोच्चरितत्वेन ज्ञातवाक्येन जनितत्वस्य शाब्दधीविशेषणतया प्रवेशे गौरवात्

आप्तोक्तत्व-संशयोत्तरमपि लोके शाब्दबुद्धेरनुभवाच्च । तदुक्तम्[६] – ''नाप्तोक्तता तु वाक्यार्थगर्भा ज्ञातोपयुज्यते । वाक्यार्थानामपूर्वत्वात् संशयेऽप्यवयो-दयात् ।'' इति ।

प्रभाकरास्तु वदन्ति यत् वाक्यार्थप्रतीतिजनकतया अभिप्रेतत्वरूपतात्पर्यनिश्चयोऽवश्यं शाब्दान्वयबोधे हेतु:, तात्पर्यसंशये तात्पर्यव्यतिरेकनिश्चये च सति शाब्दबोधोदयादर्शनात्, युगपदनेकार्थोपस्थितौ सत्यामेकार्थविषयकस्यैव शाब्दबोधस्योत्पादे तात्पर्यनिश्चयस्यैव गमकत्वाच्च । तात्पर्यनिश्चयत्वघटमिति वाक्यं कर्मताधर्मिकाधेयतासम्बन्धेन घटप्रकारकप्रतीतिजनकमित्यादिस्वरूपकम् । सिद्धे च तात्पर्यनिश्चयस्य शाब्दान्वयधीहेतुत्वे तात्पर्यविषयीभूतज्ञानविषयतया वाक्यार्थस्य पूर्वसिद्धत्वसत्त्वात् तादृशवाक्यार्थविषयकं प्रत्यक्षानुमितिभ्यां भिन्नमपि शाब्दान्वयबोधात्मकमनुभवं भावयन्नपि शब्दो गृहीतग्राहित्वेनानुवादकत्वादप्रमाणमेवेति ।[७]

एतदप्युत्तरितं जगदीशमहाभागैरित्थं कर्मताधर्मिकघटाद्यन्वयपरत्वाभावनिश्चयदशायां प्रमेयत्वादिप्रकारेण घटकर्मत्वपरत्वनिश्चयसत्त्वेऽपि अर्थात् घटमिति विभक्तितत्प्रकृतिघटितं वाक्यम् आधेयतासंसर्गकघटप्रकारकर्मताविषयकबोधपरत्वाभाववदित्याकारकनिश्चयदशायां घटमिति वाक्यं प्रमेयधर्मिकाधेयतासंसर्गकघटप्रकारकबोधपरमित्येव निश्चयसत्त्वेपि कर्मत्वं घटीयमर्थात् कर्मता आधेयतासंसर्गेण घटविशिष्टेत्येवं शाब्दबोधोत्पत्तेरभावात् तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वस्वीकारेऽपि निरूपकभावापन्नविषयताकत्वेनैव अर्थात् कर्मतात्वावच्छिन्नविशेष्यतानिरूपिताधेयत्वसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकत्वादिनैव तस्य (तात्पर्यज्ञानस्य) तादृशशाब्दहेतुत्वावश्यकत्वे तत्र (तात्पर्ये) एकपदार्थविशिष्टपरपदार्थरूपवाक्यार्थप्रवेशो नास्ति । यदेदानीमुच्चरित-घटमिति वाक्यधर्मिककर्मताविशेष्यकाधेयत्वसंसर्गकघटप्रकारकबोधपरत्वरूपतात्पर्यनिश्चयो न भवति, अथवा घटमिति वाक्यधर्मिकतादृशबोधपरत्वाभावनिश्चयो भवति, अथवा घटमिति वाक्यं कर्मताप्रकारकघटविशेष्यकबोधपरमित्येव निश्चयो भवति, अथ च अन्यकालोच्चरितघटमितिवाक्यधर्मिककर्मताविशेष्यकाधेयत्वसम्बन्धेन घटप्रकारकबोधपरत्वनिश्चयो भवति, तदेदानीमुच्चरितघटमितिवाक्यत: कर्मताविशेष्यकाधेयत्वसंसर्गकघटप्रकारकबोधस्योत्पादविरहात् विशिष्य कालविशेषघटितस्यैव तत्तत्वाक्यधर्मिकघटकर्मत्वादिनिश्चयस्य तत्तदन्वयबोधहेतुता वक्तव्या एवं स्थितौ तत्तत्तात्पर्यनिश्चायकानां प्रकरणादिज्ञानानां 'तद्धेतोरेवतदस्तु किं तेने'ति न्यायात् शाब्दबोधहेतुत्वौचित्ये प्राप्ते तात्पर्यनिश्चयस्य शाब्दधीहेतुतैव सिद्धा । अपि च-कविवाक्यानामन्यार्थपरत्वनिश्चये तत: सामाजिकानां तदितरार्थानुभवोत्पादात् एवं शुकाद्युच्चरितवाक्यानां स्वार्थपरत्वाभावनिश्चये तत: शाब्दान्वयधियो जननाद् व्यभिचारेण तात्पर्यनिश्चयस्य शाब्दबुद्धौ हेतुता वक्तुमशक्यैवेति चोपपाद्य प्रभाकरमतं प्रत्याख्यातम् ।[८]

नैयायिकमूर्द्धन्यै: श्रीमद्बच्चाझामहोदयैस्त्वत्र प्रयोज्यप्रयोजकवृद्धव्यवहारेण गामानय, कुठारेण छिन्धीत्यादिवाक्यघटकपदानां यदाऽऽद्यग्रहो जायते तदोक्तवाक्यार्थोऽनुमानेनैव जायते, यतो हि तदा तत्र पूर्वत: शब्दशक्तिग्रहो न भवति, शक्तिग्रहाभावे च तदपेक्ष: शाब्दान्वयबोधो न तत्र सम्भवदुक्तिक: । उक्तञ्च भट्टकुमारिलेन –

**'शब्दवृद्धाभिधेयाँश्च प्रत्यक्षेणात्र पश्यति ।**

**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।**

**अर्थापत्त्यावबुद्धयेत सम्बन्धं त्रिप्रमाणकम् ।' इत्यादि ।**[९]

एवञ्च प्रथमशक्तिग्रहविषयवाक्यस्यार्थ इव तदितराशेषवाक्यानामर्था अनुमानगम्या एव । तदनुमानप्रकारौ च द्वौ । तत्रैको वाक्यधर्मिको-घटमानयेति वाक्यं घटकर्मत्वान्वितानयनबोधतात्पर्यकं घटाद्यर्थस्मारकसाकाङ्क्षपदकदम्बत्वाद् गामानयेति वाक्यवदित्याकारकः । द्वितीयः पदार्थधर्मिकः-एते (घट, कर्मत्व, आनयन, कृति) पदार्थाः मिथः संसर्गवन्तः तात्पर्यवत्साकाङ्क्षपदकदम्बघटकपदस्मारितत्वात् गोकर्मत्वादिपदार्थवदित्याकारकः अथवा कर्मत्वं घटीयं, घटस्मारकपदसाकाङ्क्षपदस्मारितत्वादित्याकारक इति शब्दप्रमाणमनुमानप्रमाणेऽन्तर्भावयतो युक्तिं प्रकारञ्च प्रदर्श्य तन्मतं, व्याप्तिपक्षधर्मत्वाद्यप्रतिसन्धानेऽपि साकाङ्क्षत्वादिग्रहे शाब्दबोधोदयादनुमानेन गतार्थयितुमशक्यत्वात्, शाब्द-स्थले सर्वत्रव्याप्तिज्ञानादिकल्पना-त्वयुक्तैव, शृणोमि, शाब्दयामीति विलक्षणाज्ञानगोचरानुभवाद् विजातीयप्रमासिद्धौ तत्करणान्तरस्यावश्य-मुपेयत्वाद् दर्शितविजातीयप्रमायाः करणान्तरस्य (ज्ञायमानपदस्य पदज्ञानस्य वा दर्शितविलक्षण-प्रमाकरणत्वेन) अस्वीकारे दर्शितविलक्षणप्रमाया आकस्मिकत्वापत्तेः । शाब्दबोधस्य आकाङ्क्षा-ज्ञानादिघटिता या सामग्री, तद्घटिता या व्याप्तिज्ञानादिघटिताऽनुमितिसामग्रीजन्याऽनुमितिरेव अमुमर्थ शृणोमीत्यनुव्यवसायाभिलापवाक्यघटक 'श्रु' धात्वर्थ इति तु न वक्तुं शक्यम्, तादृशसामग्रीजन्यत्वप्रति-सन्धानविरहेऽपि तादृश (अमुमर्थ शृणोमीति) प्रतीत्युत्पादात् उक्तार्थस्य गौरवग्रस्तत्वात् तद्घटकाकाङ्-क्षादेरनुगतत्वाभावाच्चेत्याशयेन निरस्तमावेदितम् ।[१०] बहुविविच्य प्रतिक्षिप्तञ्च शाब्दत्वजातेः सिद्धावपि शाब्दात्वस्यानुमितित्वव्याप्यत्वम् । यथोक्तं-सत्येवमनुमितित्वस्यैव शाब्दत्व-व्याप्यत्वं कुतो न स्याद् विनिगमकाभावादिति, तस्माद् विरुद्धमेवानुमिति-त्वञ्चेति शाब्दान्वयधियोमानसत्वन्तु न सम्भवदुक्तिकं बहिरर्थे मनसः स्वातन्त्र्यविरहात्, यदसाधारणं सहकारि आसाद्य मनोबहिर्गोचरां प्रमां जनयति, तस्यैव प्रमाणान्तरत्वात् मनसस्तथात्वविरहादिति चोपन्यस्तम् ।[११] वेदान्तरिभाषाशिखामणौ प्रमाणशब्दस्य लक्षणम् मानान्तराबाधिततात्पर्यविषयीभूतसंसर्गबोधकत्वमिति ।[१२] न्यायनये साङ्ख्यदर्शने च-आप्तवाक्यत्वमेव शब्दप्रमाणस्य लक्षणं तर्कसङ्ग्रहादौ निर्दिष्टम् ।[१३] सिद्धान्तलेशसङ्ग्रहे तत्त्वमसीति महावाक्यत आत्मसाक्षात्कार-समर्थनावसरे दशमस्त्वमसीत्यादि-वाक्यं दृष्टान्तीकृत्य शब्दादपरोक्ष-धीरुपपादिता ।[१४] एवं सति-यद्यपि शाब्दत्वप्रत्यक्षत्वयोर्जातित्वं साङ्कर्यान्नोपपन्नं, किन्तु तन्मते गुणगतजातौ साङ्कर्यस्य जातिबाधकत्वा- स्वीकारान्नानुपपत्तिः । दर्शितञ्चैतद् गीता-गूढार्थतत्वालोके ।[१५] साङ्ख्यदर्शने च -

**'प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**

**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनन्तु ।।**[१६]

एतत् कारिकाभागेन 'आप्तश्रुतिराप्तवचनन्तु' इत्यनेन शब्दाख्यं तृतीयं प्रमाणं स्वीकृतमेव । प्राचीनन्यायदर्शनकारैः सूत्रभाष्यवार्तिकादिकृद्भिः 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणनि' इत्याद्युल्लिखद्भिः शब्दप्रमाणमभ्युपगतमेव,[१७] विवृतञ्च यदत्यन्तापूर्व स्वर्गापूर्वदेवतादि, तद्वाक्यार्थरूपमेव, नास्मदादिप्रत्य-

क्षविषयम् । न चागृहीतं लिङ्गं तत्र प्रवर्तितुमर्हति, न चागृहीते सम्बन्धिनि सम्बन्धः शक्यग्रहः, पदान्येव पदार्थस्मरणद्वारेण तत्संसर्ग बोधयन्ति वाक्यार्थे प्रमाणमित्यादि ।

'तदशिष्यं संज्ञाप्रमाणत्वात्लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते'[१८] यच्छब्दआह तदस्माकं प्रमाणम्[१९] इत्यादिभ्यः शब्दशास्त्रप्रमाणभूताचार्याणां सूत्रवार्तिकभाष्यकाराभ्युपगतत्वन्तु शब्दप्रमाणं सुतरां सुप्रसिद्धम् । शब्दशास्त्रापरप्रमाणात्मनाभर्तृहरिणाऽपि स्वीये वाक्यपदीये प्रत्यपादि-

**'इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।**

**आचण्डालं मनुष्याणां स्वल्पं शास्त्रप्रयोजनम् ।।** इति ।

एवमेव सायणाचार्येण तैत्तिरीयसंहिताभाष्यभूमिकायामपि-

**'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**

**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।** इति ।

नव्यशाब्दिकेन नागेशेनापि स्वीयवैयाकरणसिद्धान्तलघुमञ्जूषायाः प्रारम्भे एव-'पदसमूहो वाक्यमर्थसमाप्तौ समर्थमिति शेषः' - इत्याद्युल्लिखता सादरं शब्दप्रामाण्यमुपपादितम् ।[२०] आर्हता अपि शब्दप्रामाण्येऽविप्रतिपन्ना एव ।[२१] केवलं बौद्धचार्वाकावेव तत्र तत्र विप्रतिपन्नौ ।[२२] किन्तु ताभ्यामपि स्वस्वव्यवहारनिर्वाहाय अकामाभ्यामपि अन्ततः शब्दस्य सांख्यावहारिकं प्रामाण्यमभ्युपेयमेव । अन्यथा शब्दमादायैव सम्भवन्ती सर्वाऽपि लोकयात्रा ताभ्यां कथं निवोढुं शक्या स्यादिति दिक् ।।

**सन्दर्भटिप्पणी -**

१. न्यायसिद्धान्तमुक्तावली, कारिका १४०-१४१.

२. शब्दशक्तिप्रकाशिका, पृ.९

३. शब्दशक्तिप्रकाशिका, कारिका - ३

४. शब्दशक्तिप्रकाशिका, कारिका - ४

५. शब्दशक्तिप्रकाशिका, पृ.१३-१४

६. शब्दशक्तिप्रकाशिका, कारिका - ५

७. शब्दशक्तिप्रकाशिका, पृ.२४

८. शब्दशक्ति प्रकाशिका, पृ.२८-२९

९. श्लोकवार्त्तिकम्, पृ. ६८०

१०. श्रीमद्भगवदीतागूढार्थदीपिकायाः तत्वालोकव्याख्या, १०८-९

११. तत्रैव, पृ.१०९

१२. वेदान्तपरिभाषायाः शिखामणि, पृ.२३९

१३. (क) 'आप्तस्तु यथार्थवक्ता लौकिकं तु आप्तोक्तं वाक्यं प्रमाणम् ।अन्यदप्रमाणम्' इति तर्कसङ्ग्रहः

पृ.१५८, 'तच्च (आप्तवाक्यजनितं वाक्यार्थज्ञानम्) स्वत: प्रमाणम्-अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति, इति' सांख्यतत्त्वकौमुदी, पृ. ७६-७७

१४. मानान्तरस्याप्रसरात्परोक्षेण भ्रमक्षयात् - सिद्धान्तलेशसंग्रह: ३.२१

१५. गीतामधुसूदनी - गूढार्थतत्त्वालोक: पृ. १०५

१६. सांख्यतत्वकौमुदी, कारिका– ५

१७. महर्षिगौतम:, न्यायसूत्रम्, १,१,३

१८. व्याकरणमहाभाष्यवार्त्तिकम् पस्पशाह्निकम्, पृ.५५

१९. व्याकरणमहाभाष्यपस्पशाह्निकम्, पृ.६६

२०. वैयाकरणसिद्धान्तलघुमञ्जूषा ( ), पृ.१

२१. स्मृति-प्रत्यभिज्ञानोहानुमानागमास्तद्विधय: इति, हेमचन्द्राचार्य:, प्रमाणमीमांसा, १.२.२, पृ.७५

२२. 'प्रत्यक्षमनुमानञ्च प्रमाणं हि द्विलक्षणम् । प्रमेयं तत्योगार्थ न प्रमाणान्तरं भवेत् ।।' कारिका २

दर्शनाध्यापक:

रोसडासंस्कृतमहाविद्यालय:

# व्याकरणशास्त्रे आत्मतत्त्वविमर्शः

डॉ. गिरिधारी पण्डा

ज्ञानाधिकरणमात्मा। दर्शनशास्त्रानुसारेण पृथिव्यादिनवद्रव्येष्वन्यतमो भवति आत्मा । दर्शनशास्त्रे तस्यैव आत्मनः द्विविधत्वं परकिल्पनीयं जायते जीवात्मा परमात्मा इति भावेन। जीवात्मा प्रतिशरीरं भिन्न एव। परमात्मा त्वेकैव। वेदान्तिनः परमात्मनः ब्रह्मरूपत्वं साधयन्ति । श्रीमद्भगवद्गीतायामात्मनः स्वरूपविवेचनावसरे तस्य अविनवरत्वं प्रतिपादितं विद्यते । यदुक्तं तत्र –

नैनं च्छिन्दन्ति शस्त्राणि नैनं दहति पावकाः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।।[१]

उपनिषद्यपि परमात्मनः ब्रह्मरूपत्वं प्रतिपाद्य तद् ब्रह्मण अमृतत्वं प्रतिपाद्यते- तद्ब्रह्ममृतमश्नुते।एवं भावेन आत्मनः स्वरूपप्रतिपादनावसरे विभिन्नेषु शास्त्रेषु शास्त्रान्तरेषु वा तस्य ब्रह्मरूपता निरूपिता अनादि-निधनं-सच्चिदानन्दं वाङ्मनस अगोचरमिति भावेन। जगत्सृष्टौ कारणीभूतं ब्रह्म, ब्रह्मणा एव जगदिदं गतिशीलम्। सत्यं चिरमनन्तं सच्चिदानन्दस्वरुपं ब्रह्म। उपायान्तरेण 'स आत्मा', 'तत्त्वमसी'ति विधिमुखेन, 'नेति नेति नेह नानास्ति किञ्चन' इति निषेधमुखेन श्रुतिषूपवर्ण्यते । तत् जगन्मूलत्वं सजातीयविजातीयस्वगतभेदशून्यं ब्रह्म एव। ''यतो वा इमानि भूतानि जायते। येन जातानि जीवन्ति, यत् प्रत्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेति""[२] (तै.उ.३.१.), शास्त्रेषु यस्य वर्णनं 'एकं सद् विप्रा वहुधा वदन्ति' इति धिया ब्रह्मप्रतिष्ठा उपगता विद्यते। तद्यथा – वाक्यपदीये 'अनादि निधनं ब्रह्म..'[३] (वाक्यपदीयम्-१-१), वृहदारण्यकोपनिषदि- 'विज्ञानमानन्दं ब्रह्म'[४] (वृह.उ.३-९-२८),तैतिरीयोपनिषदि– 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१-१),ऐतरेयोपनिषदि- 'प्रज्ञानं ब्रह्म'[५] (ऐ.उ.५-३), छान्दोग्योपनिषदि- 'एतदमृतमभयमेतद् ब्रह्म'[६] (छा.उ.८-७-४) इति भावेन। गतिशीलस्यास्य जगतः नियामकं ध्रुवम्-अविचालि–अनपायोजनविकारिमूलभूतं कूटस्थं किञ्चित् तत्त्वमस्ति,तदेव ब्रह्म। तदेव जगतः विवर्त्तोपादानम्। ब्रह्मविवर्त्तकमिदं जगदित्याशयः।

विषयेऽस्मिन् शास्त्रकाराः स्वस्वाभिप्रयेण स्व-स्व-मतावलम्बनपुरःसरं बहुधा वर्णयन्ति। सत्यम् आनन्दम् अद्वयम् अमृतम् एकरूपं वाङ्मनसोऽगोचरं सर्वगं सर्वातीतं देशकालापरिच्छिन्नमपादमपि शीघ्रगमपाणि सर्वग्रहचक्षुरपि सर्वद्रष्टृ अश्रोत्रमपि सर्वश्रोतृ अचिन्तमपि सर्वज्ञं, सर्वनियमन्तृ-सर्वशक्तिसम्पन्नं सर्वेषां सृष्टि-स्थितिलकर्त्तृ किमपि वस्तु ब्रह्मेति वेदा वदन्ति। शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरणम् इति दिगम्बराः, सर्वज्ञ इति चार्वाकाः, विश्वकर्मेति शिल्पिनः। ब्रह्म तेजोमयम् (ज्ञानात्मकम्) इति योगशास्त्रिणः । अद्वैतवेदान्तिनः एकमेवाद्वितीयं सच्चिदानन्दरूपं ब्रह्म इति प्रतिपादयन्ति। वैयाकरणास्तु शब्द एव ब्रह्मरूप इति स्वीकुर्वन्ति।

शब्दानुशासननाम्ना ख्यातेषु व्याकरणशास्त्रेष्वप्येतस्यात्मनः परमात्मरूपस्य ब्रह्मरूपस्य वा दार्शनिकं रहस्यं शब्दतत्त्वमुरोरीकृत्य प्रतिपादितं विद्यते। व्याक्रियन्ते व्युत्पाद्यन्ते असाधुशब्देभ्यः साधुशब्दाः पृथकीकृत्योपस्थाप्यन्ते अनेनेति व्युत्पत्त्या साधुशब्दसम्पादकेऽस्मिन् व्याकरणशास्त्रे यद्यपि प्रत्यक्षतया

आत्मन: लक्षणं तटस्थतया अथवा स्वरूपतया, प्रतिपादितं न विद्यते, तथापि महाभाष्याकालात् समारब्धायां व्याकरणस्य दर्शनपरम्परायां विषयस्यास्योपस्थापनमालोचनं वा सविस्तरं विहितं विद्यते। एतद् व्यतिरिच्य पाणिने: सूत्रात्मिकाया: शैलीत:,तत्र प्रतिपादितेषु सूत्राणामनुशीलनाच्च विषयस्यास्य प्रतिपादनं विधीयते इति सप्रमाणं वक्तुं शक्यते।यतो हि अष्टाध्यायीमनुसृत्य प्रतिपन्नं पाणिनीयं व्याकरणं न केवलं पदसाधुत्वसम्पादानार्थमुद्दिष्टमुपदिष्टञ्च - इत्येतस्मिन् विषये भाष्यकारेण निर्मथ्य तथ्यमिदं प्रतिपादितं यत् - सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैक: पन्था: शक्य: आस्थातुम्[७] इति। सर्वेषां शास्त्राणां सिद्धान्तानां तथ्यानां च सर्वविध: समन्वय: दृष्टो विद्यते। एकस्मिन् पक्षे शब्दशास्त्रस्य मर्य्यादादृष्ट्या शब्दानामनुशासनम्, अपरस्मिन् पक्षे भाषाया: चरित्रदृष्ट्या संस्कृते: प्रकाशनं शास्त्रियतत्त्वस्याभिमन्थनम् इत्येतद् भवति व्याकरणस्य चारित्रिकमनुसन्धानम्। सूत्रात्मकरीत्या स्वात्मप्रकाशं लभमानं पाणिनीयव्याकरणं न केवलं शब्दानुशासनस्य रुपरेखसंघटनमादधाति, परन्तु संस्कृतेरात्मप्रकाश: भारतीयविद्यायां दृष्टिगोचरीभूतो भवति। तेन क्रमेण आत्मन: स्वरूपविषयकमालोचनं शास्त्रीयपर्य्यालोचनं वा अन्यतमम्।

महाभाष्यात् समारब्धा व्याकरणस्येयं सुमहती दार्शनिकी परम्परा शब्दस्य ध्वनिरूपत्वं स्फोटरूपत्वं वा प्रतिपाद्य आत्मन: जीवात्मकत्वं परमात्मत्वञ्चेति द्विविधत्वं प्रतिपाद्य परोक्षतया आत्मन: स्वरूपलक्षणं तटस्थलक्षणं च प्रतिपादयति। शब्दस्य स्फोटरूपे आत्मनि नैनं च्छिन्नन्ति शस्त्राणि नैनं दहति पावक:। न चैनं क्लेदयन्त्यापो न शोषयति मारूत:।। इति धिया आत्मन: अविनश्वरत्वमनादि-निधनत्वञ्चोपपादितं विद्यते। यदुक्तं भर्त्तृहरिणा वाक्यपदीये — अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।।[८]

अत्र स्फोटात्मकस्य शब्दस्य ब्रह्मरूपत्वप्रतिपादनेन ब्रह्मरूपस्य परमात्मन: स्वरूपं निर्णीयते। यत्तथ्यमाधारीकृत्य महाभाष्ये पतञ्जलिना शब्दस्य स्फोटात्मकं लक्षणं प्रतिपादितम्-येनोच्चारितेन सास्नालाङ्गुलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द:।[९] अत्र प्रथमलक्षणे अर्थ-प्रत्यायकस्य स्फोटात्मकस्य शब्दस्य ग्रहणं भवति।यत्र आत्मन: ब्रह्मरूपं प्रतिपाद्यते ।

पुनश्च प्रतीतपदार्थको लोके ध्वनि: शब्द इत्युच्यते[१०] इति शब्दस्य द्वितीयं ध्वन्यात्मकं स्वरूपं प्रतिपाद्य जीवात्मन: स्वरूपमप्युपपादितं महाभाष्ये। अस्मिन् द्वितीयलक्षणे तु पदार्थवोधकत्वेन प्रसिद्ध: श्रोत्रेन्द्रियग्राह्य: लोके ध्वनिसमूह: शब्द इति। यथा जीवात्मा प्रतिशरीरं भिन्नत्वेनानित्यत्वं प्रतिपादयति, तथैव अस्मिन् द्वितीयलक्षणे प्रतिपादितोऽयं ध्वन्यात्मकशब्दोऽनित्य: प्रक्रियाकार्यसाधक:।

भगवता पाणिनिना स्वकीयायामष्टाध्यायां जीवात्मन: परमात्मनश्चेति स्वरूपद्वयप्रतिपादनार्थं शब्दब्रह्मण: स्वरूपं स्वीकृत्य प्रातिपदिकसंज्ञाविधानार्थं सूत्रद्वयमुपकल्पितम् - "अर्थवदधातुरप्रत्यय:प्रातिपदिकम्[११] "कृत्तद्धितसमासाश्च[१२] इति। धातुं प्रत्ययं निर्विकल्पकस्य अनादिभूतस्यानन्तस्य निराकारस्य सच्चिदानन्दस्वरूपस्य धातु- प्रत्यय - प्रत्ययान्तभावेन यदुपलब्धं तत् प्रातिपदिकं ब्रह्म एवेति। ब्रह्मण: "सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन इति श्रुतिवाक्यात् परमात्मन: स्वरूपमत्र प्रतिपादितम्। द्वितीयसूत्रे कृदन्तस्य तद्धितस्य समासस्य च प्रातिपदिकं संज्ञाविधानमिच्छता प्रोक्तमिदम्। कृत्तद्धितसमासाश्च "जीवो ब्रह्मैव नापर: इति सिद्धान्तात् जीवात्मन: स्वरूपमत्रोपपादितम्।

सुतसंहितायां प्रणवो द्विविध: कल्पित:। परोऽपरश्च। पर: ब्रह्मात्मक: अपर: शब्दात्मक: इति व्याख्यानेन शब्द: प्रणवपदवाच्य: ।"सत्यं ज्ञानम् अनन्त ब्रह्म इति श्रुतिप्रतिपादितं ब्रह्मज्ञानमानन्दादिरूपं यथा प्रकर्षेण नवं-निखिलविकाररहिततया कूटस्थं तथा प्रकर्षेण नवस्तत्प्राप्तिरूपो सम्पादयति विग्रहबलेन शब्दोऽपि प्रणव इति तात्पर्यम्।

व्याकरणदर्शने शब्द एव ब्रह्मरूप इति प्रतिपादित:। शब्द एव जगत: निमित्तोपादानरूपं कारणमिति वैयाकरणानां सिद्धान्त:। शब्दब्रह्मण: विवर्त्तरूपमेतत् जगदित्येतेषामाशय:।अत्र निर्विकल्पकत्वेन आत्मन: परमात्मरूपविषये पुन: सविकल्पकत्वेन जीवात्मविषये चर्च्चा विहिता। एवञ्चात्र शब्दब्रह्मण: स्वरूपविषयेऽपि महती चर्च्चा दृष्टिपथमारूढा। निर्विकल्पकं सविकल्पकं वा ज्ञानं गौ: शुक्लश्चलो डित्थ इति शब्दविशिष्टमेवार्थमवबोधयति। शब्दाख्यविशेषणानुरक्तस्य तस्य विशेष्यस्य स्वरूपं शब्देनैव दर्शयति। शब्दपरित्यागलब्धप्रकाशस्वरूपया वा अनुभूत्या अनुभवति सोऽपि विशेष्य: शब्दरूप एव। शब्द एवार्थोपारुढ: प्रतिभाति इति व्यवतिष्ठते। किञ्च यदुपारूढ: शब्द: प्रकाशते तं पृथक्-प्रदर्शयितुमनुभवितुं चाऽशक्यत्वात् । शब्द एव तथा प्रतिभाति यथा च इन्द्रियजज्ञानेषु प्रकमस्तथा शब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वा अथ: शब्दारूढो व्रार्थ: प्रतिभातीति शब्दविवर्त्त एवायमर्थो नान्य: कश्चित्। अत्रायमेवाशय: यत् शब्द एव अर्थापगुढ:। कदाचित् विशेष्यरूपेण, कदाचित् विशेषणरूपेण विवर्त्तवादेन शब्दब्रह्म विभिन्नं सत् प्रवर्त्तते इति विशेष:।अत: शब्दब्रह्म इदमेकम् अविद्योपाधिदर्शित विचित्रभेदमविद्योपरमे यथावस्थितरूपं प्रकाशते। यत् तात्पर्यमादाय श्रुतिवाक्यं प्रथ्नाति यत् – 'वागेव विश्वा भूवनानि जज्ञे' इति। व्याकरणशास्त्रे शब्दस्य नित्यत्वस्वीकरणेन ब्रह्मरूपत्वप्रतिपादनेन चात्र आत्मन: परमात्मरूपं विविच्यते। अद्वैतवेदान्तिनोऽपि ब्रह्मण: सच्चिदानन्दरूपत्वमद्वित्वियत्वञ्च स्वीकुर्वन्ति।तेषां नये सच्चिदानन्दमद्वयमनन्तं नित्यमेकं यत् तद् ब्रह्मेति। यदुक्तमात्मवोधकारेण –

तिर्यगूर्ध्वमध: पूर्णं सच्चिदानन्दमद्वयम्।
अनन्तं नित्यमेकं यत् तद ब्रह्मेत्यवधारयेत्।।[१३] (आत्मबोध:-५.५)

एतदेव तात्पर्य प्रतिपाद्य योगीन्द्रेण श्रीसदानन्देन वेदान्तसारग्रन्थे मङ्गलाचरणप्रतिपादनावसरेऽपि ब्रह्मण: सच्चिदानन्दत्वमखण्डत्वञ्च निरूपितम्। यथोक्तं तत्र-

अखण्डं सच्चिदानन्दमवाृनसगोचरम्।
आत्मानमखिलाधारमाश्रयेऽभिष्टसिद्धये।।[१४] वे.सा. – १

आचार्य: श्रीशङ्कर: ब्रह्मण: सत्यरूपतां प्रतिपाद्य तदतिरिक्तस्य मिथ्याप्रपञ्चीभूतस्य जडरूपस्य जगत: मिथ्यात्वं प्रतिपादितवान्।यदुक्तं तेन –

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभि:।
''ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर:।।[१५] (ब्र.ज्ञा.मा. २०)

महाभाष्यकृताऽपि 'चत्वारि श्रुङ्गा' इति मन्त्रव्याख्यानावसरे ''महान् देव: शब्द:, तेन न: साम्यं यथा स्यादित्यध्येयं व्याकरणम्''[१६] इत्यन्तर्यामिरूप:, साम्यम् सायुज्यमिति व्याख्यातं टीकाकरै:। इदमेव तात्पर्यम् आधारीकृत्य

शब्दब्रह्मता निर्धारिता भर्तृहरिणा। ब्रह्मकाण्डस्य प्रथमे श्लोके शब्दब्रह्मण: अर्थरूपेण विवर्त्तनं प्रतिपादितं तेन। तथाहि उक्तम्-

अनादि निधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।

विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यत:।।[१७]

अनादिनिधनं सर्वग्रहग्राहकाकारवर्जितं शब्दब्रह्म मायासहितं सत् नामरुपात्मकनिखिलं प्रपञ्चं प्रथमं बुद्धौ आकल्य इदं करिष्यामि इति सङ्कल्पयति, ततो निजया कालाख्यया स्वातन्त्र्यशक्त्या आकारयतीति तस्याशय:। महाभारते[१८] भागवते एतदेवोपस्थापितम्। श्रीमद्भागवद्गीताया: षष्ठाध्याये चतुश्चत्वारिंशत्तमे श्लोके अस्य शब्दब्रह्मणो विचारोऽपि दृश्यते। यथोक्तं तत्र-

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि स:।

जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते।।[१९]

'परमपुरुष: विन्दुरुप' इति प्रपञ्चसारतन्त्रे उपपादितम्। तस्मात् बीजरूपयोक्तप्रकृत्या सम्बन्धत् उभयाभेदलक्षणो देदीप्यमान: परापश्यन्त्यात्मको रवोऽभवत्। सोऽयं रव: कारणविन्दुतादात्मापन्नत्वात् सर्वगतोऽपि व्यञ्जकयत्नसहकृतपवनवशात् प्रणिनां मूलाधारे ब्यज्यते। तदिदं कारणविन्द्वात्मकमव्यं शब्दब्रह्म स्वप्रतिष्ठितया निष्पन्दं परावाग् इत्युच्यते इति प्रपञ्चसारतन्त्रे[२०] (१/४१) स्पष्टतया वर्णितमस्ति।

शारदातिलके एदेव तथ्यं पुरस्कृत्य प्रतिपादित् यत्-पराद् विन्दोरित्यनेन शक्त्यवस्थारूपो य: प्रथमोविन्दु: तस्मादव्यक्तात्मा वर्णादिविशेषरहितोऽखण्डो नादमात्रं रव उत्पन्न:। स एव शब्दब्रह्म इत्युच्यते। ''वागेवेदं बभूजो'' इत्येषा श्रुति: वाच: भुवनपालकत्वं संहारकर्तृञ्चोपपादयति। ''यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति अभिसंविशान्ति'' इत्यादिश्रुत्या ब्रह्मण: जगत्कर्त्तृत्वं, संहारकर्तृत्वञ्च प्रतिपादयन्त्य सहैकवाक्यतया वाक्तत्त्वस्य ब्रह्मरूपता समागता। तात्पर्यमिदं महाभाष्येऽप्युपवर्णितम्। यथा-

''वर्णज्ञानं वाग्विषयो यत्र ब्रह्म प्रवर्त्तते।

तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते।''[२१]

वास्तवेन तु शब्दस्य नित्यत्वं विभूत्वं वा प्रतिपाद्य तस्याद्वितीयत्वं ब्रह्मरूपत्वं वोपपादितं व्याकरणशास्त्रे। यस्याभिमण्डनं श्रुतिशास्त्रेषु दर्शनशास्त्रेषु च विद्यते।

नागेशेन अनादिनिधनमिति शब्दब्रह्मणे नित्यतोक्ति: यावत्सृष्टिस्थित्या व्यवहारनित्यतया वा स्वीक्रियते। मैत्रेयोपनिषदि द्विविधं ब्रह्म स्वीकृतम्। तदेव तथ्यं पुरस्कृत्य नागेशेनेदमुपस्थापितम्। यथोक्तं मैत्रेयोपनिषदि-

''द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।

शब्दब्रह्मणि निष्णात: परंब्रह्माधिगच्छति।''[२२]

वेदान्तादिशास्त्रेषु प्रतिपादितै: ''तत्त्वमसि''[२३] इत्यादि महावाक्यै: ब्रह्मसाक्षात्कारद्वारा यथा मुक्ति: अभ्युपगम्यते तथा शाब्दिकै: शब्दस्वरूपज्ञानेन मुक्ति: स्वीक्रियते शब्दस्य ब्रह्मरूपत्वात्। तथैव व्याकरणशास्त्रे अपि साधुशब्दज्ञानेन धर्मो जायते,येन अनन्तमपि प्राप्यते। महाभाष्यस्य पष्पशाह्निके प्रसङ्गेस्मिन् व्याकरणाध्ययनस्य प्रयोजननिरूपणावसरे पतञ्जलिना वेदमन्त्र: उपस्थापित:

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।

सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चाऽपशब्दैः।।[२४] (मा.भा.पृ.८)

अर्थात् वाग्योगविदः शाब्दिकाः शब्दाऽपशब्दविवेकद्वारा वाचस्तत्त्वं यथाज्ञानं निरुप्य तस्मिन्नेव वाक्तत्त्वे सायुज्यं लभन्ते। अपि वाक्यपदीयटीकायां हरिवृषभेण अभ्यधायि —

वाचः संस्कारामाधाय वाचं ज्ञाने निवेश्य च।

विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम्।।[२५] (कारिका. १.३२)

शाबरभाष्येऽपि — "ते मृत्युमतिवर्त्तन्ते ये वै वाचमुपासते"[२६] इति वाक्यं मुक्तिविषयं निगदति। शब्दस्वपपरिज्ञानस्यैव मुक्तितत्त्वे परमात्मप्राप्तिरूपत्वे वा तत्संस्कारस्य परतत्त्वसाक्षात्काराय उपायरूपत्वमिति भर्त्तृहरिणा प्रादर्शि। तथाहि–

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।

तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते।। (वाक्यपदीय – १/३१)

"अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्त्तृकम्"[२७] "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं"[२८] इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः"[२९] इत्याद्युक्त्या अस्यैव शब्दब्रह्मणः ब्रह्मरूपत्वं यत्प्रतिपादितम्,तद् सर्वथा परमात्मनः स्वरूपस्योपपादने विहितं जायते ।"शब्दब्रह्मणि निष्णातः परंब्रह्माधिगच्छति"[३०] इति धिया शब्दब्रह्म एव परंब्रह्मप्राप्तेरूपायविशेषः। शास्त्रस्यास्यानुशीलनेन निश्चयेन वक्तुं शक्यते यत् व्याकरणशास्त्रेऽपि दार्शनिकरीत्या आत्मनः स्वरूपविषये चर्चा विहिता उपपादिता च विद्यते इति शम्।

**पादटीका :**

१. श्री.भ.गी.२.
२. तै.उ.३.१.
३. वाक्यपदीयम्-१-१
४. वृह.उ.३-९-२८
५. ऐ.उ.५-३
६. छा.उ.८-७-४
७. म.भा.पस्पशा
८. वाक्यपदीयम्-१-१
९. म.भा.पस्पशा
१०. तत्रैव
११. पा.सू.१.२.४५
१२. पा.सू.१.२.४६
१३. आत्मबोधः-५.५
१४. वे.सा. – १
१५. ब्र.ज्ञा.मा. २०
१६. म.भा.पस्पशा
१७. वा.प.१.१
१८. म.भा, शान्तिपर्व
१९. श्री. भ. गी.६-४४
२०. प्र.त.१.४१
२१. म.भा.पस्पशा
२२. मै.उ.-६.२२
२३. वे.सा. – महावाक्यम्
२४. मा.भा.पृ.८
२५. वा.प.का. १.३२, हरिवृ.वृत्तिः
२६. शाबरभाष्यम्
२७. बा.प.१-१४४
२८. बा.प.१-१
२९. वा.प.१-११३
३०. मै.उ.-६,२२

सहायकाचार्यः, विभागीयप्रधानश्च
स्नातकोत्तरसंस्कृतविभागः
मेदिनीपुर स्वयंशासित महाविद्यालयः, पश्चिमवंगः

# व्याप्तिस्वरूपविचार:

डॉ. प्रियब्रत बेहेरा

प्रमाणव्युत्पादकत्वात् आन्वीक्षिकीशास्त्रं प्रमाणशास्त्रमित्युच्यते । चतुर्विधं प्रमाणमङ्गीकृतं नैयायिकै: । तत्रापि अनुमानप्रमाणं विस्तरेण प्रपञ्चितम् । तत्रानुमित्यात्मिकाया: प्रमिते: यद्व्यापारवदसाधारणं कारणं तदनुमानं प्रमाणम् । तच्च व्याप्तिज्ञानात्मकम् । करणत्वं तावत् व्याप्तिज्ञानत्वरूपेणैव नैयायिकैरङ्गीक्रियते । तद्व्याप्तिज्ञानमनुभवात्मकं स्यात्, स्मरणात्मकं वा स्यात् । तत्र अनुमित्यसाधारणकारणे व्याप्तिज्ञाने घटकीभूतो व्याप्तिपदार्थ: क इति जिज्ञासायां उक्तम् – ''व्याप्ति: साध्यवदन्यस्मिन्नसम्बन्ध उदाहृत:'' । इति व्याप्ते: पूर्वपक्षलक्षणम् । तथा च साध्यवद् भिन्नावृत्तित्वं व्याप्ते: लक्षणम् । पर्वतो वह्निमान् धूमादित्यादिसद्धेतुस्थले साध्यो वह्नि: तद्वान् महानसादि:, तदन्य: जलह्रदादि: तन्निरूपितवृत्तित्वं मीनादौ तादृशवृत्तित्वाभाव: धूमे इति सद्धेतौ लक्षणसमन्वय: । पर्वतो धूमवान् वह्ने: इत्यादौ साध्यो धूम:, तद्वान् महानसादि:, तदन्य: तप्ताय: पिण्डम्, तन्निरूपितवृत्तितैव वह्नौ विद्यते न तु तादृशवृत्तित्वाभाव: । प्रतियोगितदभावयो: वैयधिकरणत्वनियमादिति असद्धेतौ लक्षणसङ्घटनात् व्याप्तिलक्षणस्य नातिव्याप्ति: । अत्रेदमाशङ्क्यते यत् व्याप्ते: ईदृशलक्षणे अव्याप्ति: आपतति, यतो हि साध्यो वह्नि: तद्वत्वं समवायेन वह्न्यवयवानामिति तदन्यो जलह्रदादिरिव महानसादिरपि इति तद्वृत्तित्वमेव धूमे, न तु तादृशवृत्तित्वाभाव इति व्याप्तिलक्षणे अव्याप्तिदोष: जागर्ति । तामेतामव्याप्तिं निराचिकीर्षु: परिष्करोति यत् येन सम्बन्धेन साध्यता चिकीर्षिता तेनैव साध्यवत्वं बोध्यम् । तथा च अत्र साध्यतावच्छेदकसम्बन्ध: संयोग: न तु समवाय: । एवञ्च संयोगेनैव साध्यवत्वं ग्राह्यं न तु समवायेनेति पूर्वोक्तप्रकारेण लक्षणासङ्घटनात् नाव्याप्तिदोष: । साध्यवदन्यो नाम साध्यवत्वावच्छिन्नसाध्यनिष्ठप्रतियोगिता निरूपकभेदवान् । तेन वह्निमान् धूमादित्यत्र साध्यवत्पदेन महानसं गृहीत्वा तस्मात् महानसात् भिन्ने चत्वरादौ धूमस्य वृत्तित्वेऽपि अव्याप्ति: नहि प्रसरति ।

ननु एवमपि वह्निमान् धूमादित्यत्र अव्याप्ति: प्रसज्येत । तथा हि साध्यतावच्छेदकसंयोगसम्बन्धेन साध्यवान् महानसादि:, तदन्यो जलह्रद इव धूमाद्यवयवोऽपि, तन्निरूपितवृत्तितैव समवायसम्बन्धेन धूमे विद्यते, अवयवावयविनो: समवायात् । एवञ्च तादृशसाध्यवदन्यवृत्तित्वाभावलक्षणस्य धूमे सद्धेतौ असंघटनादव्याप्ति: स्यात् । अतो लक्षणे साध्यवदन्यनिरूपितवृत्तिता हेतुतावच्छेदकसम्बन्धेन ग्राह्या । तथा च धूमस्य संयोगसम्बन्धेन हेतुत्वविवक्षणात् हेतुतावच्छेदकसंयोगसम्बन्धेन साध्यवदन्ये धूमावयवे धूमस्य वृत्तित्वं नास्ति इति नाव्याप्ति: । एवं साध्यवदन्यवृत्तित्वाभावो नाम साध्यवदन्यवृत्तितात्वावच्छिन्नप्रतियोगितानिरूपकाभावो बोध्य: । पर्वतो धूमवान् वह्नेरित्यादि असद्धेतुस्थले साध्यवदन्यजलह्रदादिनिरूपितवृत्तित्वाभावस्य वह्नौ सत्त्वेऽपि नातिव्याप्ति: ।

तथापि द्रव्यं गुणकर्मण्यत्वविशिष्टसत्त्वादित्यादौ अव्याप्ति: प्रसरति एव । यतो हि विशिष्ट: शुद्धान्नातिरिच्यते इति न्यायेन द्रव्यत्ववदन्यस्मिन् गुणादौ विशिष्टसत्त्वस्यापि वृत्तित्वमेवास्ति न तु तादृशवृत्तित्वाभाव: इति अव्याप्ति: सुस्पष्टं प्रतीयते । तामपाकर्त्तुं साध्यवदन्यनिरूपितवृत्तितानवच्छेदकं

वस्तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति सम्बन्धधर्मिकोभयाभावघटितं लक्षणम् । पर्वतो वह्निमान् धूमादित्यत्र समन्वयप्रकारश्च साध्यतावच्छेदकसंयोगसम्बन्धे घटाभावीयप्रतियोगितावच्छेदक–घटत्वावच्छिन्नप्रतियोगिकत्वसत्त्वेऽपि हेत्वधिकरणीभूतपर्वतादिव्यक्त्यनुयोगि-कत्वाभावेन 'एकसत्वेऽपि द्वयं नास्ती' ति न्यायेन तादृशोभयाभावस्समागतस्तादृशप्रतियोगितावच्छेदकघट-त्वमनवच्छेदकं साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसाध्यसामानाधिकरण्यस्य धूमे सत्वाल्लक्षणसमन्वयः ।

◆ प्रतियोगिताधर्मिकोभयाभावघटितव्याप्तिलक्षणपरिष्कारः– ''प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्माव - च्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति लक्षणम् । पर्वतो वह्निमान् धूमादित्यत्र संयोगेन घटाभावीयप्रतियोगिताश्रयानधिकरणधूमाधिकरणपर्वतवृत्तिघटाभावीयप्रतियोगितायां यत्सम्बन्धावच्छिन्नत्वस्य यद्धर्मावच्छिन्नत्वस्य चाभावाद् भवत्युभयाभावस्तेन साध्यतावच्छेदकसम्बन्धेन वह्नित्वावच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वाद् भवति लक्षणसमन्वयः ।कालो घटवान् महाकालत्वादित्यत्र च संयोगादिसम्बन्धेन घटाभावमादाय तदभावीयप्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वाव - च्छिन्नत्वोभयाभावसत्त्वात् कालिकसम्बन्धेन घटत्वावच्छिन्नघटसामानाधिकरण्यस्य महाकाले सत्त्वाद् भवति लक्षणसमन्वयः । इति शम् ।।

**सन्दर्भग्रन्थसूची–**


१. तत्त्वचिन्तामणि: (चौखम्बासंस्कृतप्रतिष्ठानम्, वंगलो रोड, जवाहरनगरम्, दिल्ली-११०००७)

२. माथुरीपञ्चलक्षणी (व्याप्तिचन्द्रिकाव्याख्यासहिता, व्या.श्रीमधुनाथोपाध्यायः, चौ.सं.संस्थानम्, वाराणसी)

३. सिद्धान्तलक्षण-जागदीशी (भावप्रकाशिकाव्याख्यासंवलिता, व्याख्याकारः-डॉ महेशझा, प्रका.-चौखम्बा कृष्णदास अकादमी, वाराणसी)

४. सिद्धान्तलक्षण-गादाधरी (विवृतिसहिता, सम्पा.-एन्.एस्.रामानुजताताचार्यः, प्रका.-राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः)

५. न्यायसिद्धान्तमुक्तावली (''किरणावली'' समाख्यव्याख्योपेता, पं.कृष्णवल्लभाचार्यः, चौ.सं.संस्थानम् वाराणसी)

६. व्याप्ति-परिष्कारः (लेखकः–डॉ. महेशझा, प्रका.-चौखम्बा कृष्णदास अकादमी, वाराणसी)



सहायकाचार्यः

पिंगला थाना महाविद्यालयः

पश्चिममेदिनीपुर, पश्चिमवंगः

# शब्दानित्यत्वविचार:

**अजयानन्दसाहु:**

प्रत्यक्षानुमानोपामानशब्दा:[१] प्रमाणानि इति न्यायदर्शनस्य चतुर्षु प्रमाणेषु शब्दप्रमाणम् अन्यतमम्। तत्र न्यायदर्शने शब्दविषये आदौ शब्दस्य प्रमाणमध्ये अन्तर्भाव: अनन्तरम् अनुमानेन चरितार्थभाव: अनित्यत्वं शब्दस्वरूपमिति प्रदर्शितम्। तत्र प्रथमाऽऽह्निके प्रमाणपदार्थनिरूपणावसरे प्रत्यक्षनुमानोपमानशब्दा: प्रमाणानीति सूत्रेण प्रमाणनाम्ना निर्दिश्य तेषां लक्षणमपि प्रोवाच। अस्य प्रमाणभूतशब्दस्य व्युत्पत्ति: शब्दधातो: घञ् प्रत्यये निष्पन्ना। तत्र श्रोत्रेन्द्रियस्य ग्रहणविषय: इत्यर्थ: लभ्यते। तेन शब्दस्य प्रमाणत्वमुक्तम् । विषयेऽस्मिन् वहुभि: सूत्रै: आक्षेपान् कृत्वा शब्दस्य प्रमाणत्वम् स्थापयन्ति सूत्रकारा:।

अपि च न्यायदर्शने आप्तोपदेश: शब्द:[२] इति सिद्धान्तसूत्रे प्रमाणरूपशब्दे आप्तोपदेश: इति विशेषणं प्रदत्तम्। तत्र महर्षिणा गौतमेन शब्दा: बहुविधा इति सूचितम्। एवञ्च द्वितीयाध्यायस्य द्वितीयाह्निके शब्दस्य नित्यत्वम् अनित्यत्वं वा इत्यस्मिन् विषये महान् विचार: उपस्थापित:। प्राचीनमीमांसादर्शने आकाशगुण: शब्द: नित्य: विभु:। अर्थात् शब्द: आकाशद्रव्यस्य गुणो भवति। स: व्यापक: नित्यश्च। नित्यत्वेन अभिव्यक्तत्वाद् शब्दस्य उत्पत्ति: न भवति। अर्थात् अभिघातसंयोगेन प्रेरितवायु: तेन वायुना वर्णरूपशष्कुलीद्वारा युक्तेन आकाशेन समवेत: नित्य: शब्द: प्रकटितो भवति। एवञ्च गन्धादिसहवृत्ति: द्रव्येषु सन्निविष्ट: गन्धादिवद् अवस्थित: अभिव्यक्तधर्मक: इति केचन वदन्ति। गन्धरूपादिगुणै: साकं द्रव्येषु विद्यमान: एवञ्च गन्धादिगुणवत् नित्य:। नित्य: शब्द: अभिव्यक्तिशब्दस्याधार: भवति । एतत्तु सांख्यानां मतम्। वैशेषिकानां मते तु आकाशगुण: शब्द: उत्पत्तिनिरोधधर्मक: बुद्धिवत् इति। तेषां मते आकाशगुण: शब्द: अनित्य:। उत्पतिविनाशधर्मस्य आधारभूत: शब्दगुण: ज्ञानगुणवद् अनित्य:। महाभूतसङ्क्षोभज: शब्द: अनाश्रित: उत्पत्तिधर्मक: इति बौद्धानां मतम्। पृथिव्यादिमहाभूतद्रव्याणां विकारात् उत्पन्न: शब्द: अनाश्रितो भवति। अर्थात् तस्य कोऽपि आश्रयो न वर्त्तते। एवञ्च उत्पत्तिविनाशधर्मवान् भवति। अत एव शब्द: अनित्य: इति बौद्धसिद्धान्त:। न्यायदर्शनेऽपि शब्दस्यानित्यत्वं प्रतिपादितम्। अनेन शब्द: नित्य: अनित्य: वा संन्देहो जायते। तत्र नित्य: नाम नियतं भव: इत्यर्थे निशब्दात् ''त्यब्नेर्ध्रुव इति वक्तव्यम्''[३] इति वार्त्तिकेन त्यप् प्रत्यये नित्यशब्द: सिद्ध्यति। अमरकोषे तु - शाश्वतस्तु ध्रुवो नित्यसदातनसनातना:[४]। महाभाष्येऽपि लिखितमस्ति यत् - नित्येषु नाम शब्देषु कूटस्थैरविचालिभि: वर्णैभवितव्यमनपायोपजनविकारिभि:[५]। अर्थात् नित्या: नाम कूटस्था:, अविनाशिन:,अविचालिन:-देशान्तरप्राप्तिरहिता:। अपायश्च उपजनश्च विकारश्च अपायोपजनविकारा:। न अपायोपजनविकारा: अनपायोपजनविकारा:। अपाय: लोप:। उपजन: अपूर्वस्य शब्दस्य उत्पत्ति:। विकार: आदेश:। एतद् नित्यलक्षणं शब्देषु कथं संगच्छते इत्यपि शङ्का उदेति।

अत एव अस्य संशयस्य निराकरणाय प्रबन्धेऽस्मिन् शब्दस्य नित्यानित्यविषये समासेन उपस्थाप्यते।

**शास्त्रान्तरेषु शब्दानित्यत्वम्-**

शुक्लयजुर्वेदप्रातिशाख्ये "वायु: खात्, शब्दस्तत्" इत्येताभ्यां सूत्राभ्यां वायुमेव शब्दमुक्त्वा अस्यानित्यत्वं प्रकटितम्। वौद्धदर्शनेऽपि उत्पत्तिनिरोधधर्मत्वात् शब्दस्यानित्यत्वं साधितम्। "शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मको इत्यन्ये" इति वात्स्यायनभाष्ये प्रतिपादितम्[६]। जैनदर्शनेऽपि पुद्गलपरमाणुभि: विनाशोत्पतिविशिष्टस्य शब्दस्य घटितत्वकल्पनया शब्दस्यानित्यत्वं निरूपितम्।

अत्र स्वीक्रियमाणं शब्दस्योपादानकारणं विलक्षणमेव स्वीकरणीयम्। सर्वत्र हि उपादानकारणं क्वचिद् कार्यात् पृथकत्व वर्त्तते। यथा पटस्योपादानानि कारणानि तन्तव: पटात् पृथक् वर्त्तन्ते परन्तु वर्णोपादानगृह्यमाणस्य शब्दस्य वर्णात् पृथक् सत्ता एव नास्ति। अत: शब्द: अनित्य:।

ध्वनिरिति कथ्यमान: वैकृतध्वनि: लोके शब्देति व्यवह्रियते। तादृशध्वने: अनित्यत्वादेव तन्मते शब्द: अनित्य:।

सांख्यमते सूक्ष्मस्थूलभेदेन द्विविधोऽपि शब्द: अनित्य:। तथापि इन्द्रियविषयमतिवर्त्तमानम् आकाशतन्मात्रमेव सूक्ष्मशब्द:। स च अहंकारस्य विकारत्वाद् अनित्य:। इन्द्रियग्राह्य: स्थूलशब्दोऽपि आकाशतन्मात्रस्य विकारत्वाद् अनित्य:।

पूर्वमीमांसांयामपि आदौ शब्दानित्यत्वे युक्ति: उपस्थापिता। अन्ते तु तस्य प्रत्याख्यानं विधाय नित्यत्वं साधितम्। शब्दस्य अनित्यत्वे षट्सूत्राणि उपन्यस्तानि। तद्यथा -१. कर्मैके तत्र दर्शनात्, २. अस्थानात्, ३. करोति शब्दात्, ४. सत्वान्तरे च यौगपद्यात्, ५. प्रकृतिविकृत्योश्च, ६. वृद्धिश्च कर्त्तृभूम्नाऽस्य[७] इति।

**नैयायिकानां मते शब्दानित्यत्वम्-**

महर्षिणा गौतमेन न्यायदर्शने शब्दस्यानित्यत्वम् अभिहिततम्। "आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च[९]" इति सूत्रादारभ्य "विभक्त्यन्तरोपपत्तेश्च[१०]" इति सूत्रपर्यन्तं सविस्तरं शब्दस्य अनित्यत्वं संसाधितम्।

शब्दस्य नित्यानित्यविषये संशयनिराकरणाय महर्षिणा गौतमेन "आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च" इति सूत्रं प्रणीतम्। अनेन शब्द: अनित्य: इति प्रकाशितम्। एतदर्थं हेतुत्रयं प्रदत्तम्। यथा- आदिमत्त्वात्, ऐन्द्रियकत्वात्, कृतकवदुपचारात् च। आदिमत् - अर्थात् कारणवत्वात्। आदि: योनि: कारणम्। आदीयते अस्मादिति व्युत्पत्या कारणवत्वादित्यर्थ:। कारणवद् अनित्यं द्रव्यम्। संयोगविभागश्च शव्द: कारणवत्वादनित्य:। उत्पत्तिधर्मत्वात् अनित्य: शब्द: इति भूत्वा विनाशधर्मक: न भवति इति संशयो जायते। किं उत्पत्तिकारणं संयोगविभागौ शब्दस्य अथवा अभिव्यक्तकारणम् इति संन्देह: उत्पद्यते। अत एव द्वितीयहेतु: दीयते ऐन्द्रियकत्वात्। इन्द्रियप्रत्यासति ग्राह्य: ऐन्द्रियक:। श्रोत्ररूपवाह्येन्द्रियेण गृहीतत्वात् शब्द: अनित्य:। संयोगात् शब्दात् शब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यते। संयोगरूपव्यञ्जकस्य निवृत्तौ अपि शब्दस्य ग्रहणं भवति। अत: प्रकाशकसंयोगेन समानो देशो अभिव्यज्यते शब्द: रूपादिवद् इति पूर्वपक्षयुक्ति: न समीचीना। यतो हि वृक्षस्य छेदनसमये दारुपरशुसंयोगनिवृत्तौ

दूरस्थेन शब्दः गृह्यते। अर्थात् वृक्षछेदनात् परमपि काष्ठपरशु इत्यनयोः संयोगनिवृत्तौ दूरदेशे विद्यमानं मनुष्यः शब्दं शृणोत्येव।

विषयेऽस्मिन् केचन विद्वांसः एवम् आमनन्ति यत् शब्दः स्थिरः नित्यश्च। अत एव सोऽयं गकारः इति प्रत्यभिज्ञा सिद्ध्यति। उक्तप्रत्यभिज्ञया शब्दः नित्यः इति पक्षस्य निरासार्थं तृतीयः हेतुः प्रदर्शितः सूत्रकारैः "कृतकवत् उपचारात्"। शब्दः उपपद्यते न तु अभिव्यज्यते । यतो हि शब्दे कार्यवत् (अनित्यवत्) व्यवहारो भवति। अनित्ये पदार्थे तीव्रमन्दादीनां व्यवहारो दृश्यते । यथा कार्यपदार्थेषु सुखदुःखादिषु तीव्रमन्दादीनां प्रचलनं तथैव शब्दस्य (ध्वनेः) तीव्रः मन्दो वा व्यवहारो दृश्यते।

अपि च शब्दार्थयोः सम्बन्धः नित्यः इति वैयाकरणैः यदुक्तं शब्दस्य अनित्यत्वात् तत्र उपपद्यते। शब्दः विनष्टः। पुनः अस्य शब्दस्य क्रियमाणस्य अर्थेन साकं नित्यः सम्बन्धः नोपपन्नः । प्रथम श्रुतेन शब्देन तस्यापि अर्थस्य उपलब्धिः न भवति। तर्हि कथं पुनः शब्दस्यानित्यत्वं इति प्रश्ने प्रयत्नात् उत्तरकालं दृश्यते इति प्रकाशितम्। यतो हि शब्दोऽयं प्रयत्नस्य उत्तरकालं प्रतीयते । अतः प्रयत्नानन्तर्यात् तेन क्रियते इति गम्यते ।

एवञ्च उच्चारणानन्तरं तस्य अस्थानात् अर्थात् स्थिरत्वाभावात् शब्दः नष्टः । अपि च शब्दं कुरु मा शब्दं कार्षीः इति व्यवहर्तारः प्रयुञ्जते । न ते नूनम् अवगच्छन्ति स एव अयं शब्दः इति । अर्थात् कृधातोः प्रयोगात् शब्दः अनित्यः नानादेशेषु युगपत् शब्दम् उपलभामहे । तद् एकस्य नित्यस्य बहुषु भिन्नभिन्नस्थानेषु यौगपद्यात् उपलब्धिः न सम्भवति । अपि च दध्यत्र इत्यादौ इकारः प्रकृतिः यकारः आदेशः (विकृतिः) इति उपदिशन्ति। तदेव क्रियते। अतः शब्दस्यानित्यत्वं प्रतिपाद्यते। यः विकृतः सः अनित्यः एव । अपि च बहुभिः उचारयद्भिः महान् शब्दः श्रूयते। स यदि अभिव्यज्यते बहुभिः अल्पैश्च उच्चार्यमाणः तावान् एव उपलभ्येत । अतः अनुमीयते नूनमस्य एकैकेन कश्चिद् अवयवः क्रियते। यत् प्रचयात् अयं महान् उपलभ्यते।

**वैशेषिकमतम्** -

शब्दः अनित्यः, उत्पत्तिवचनात्। यः नित्यः , तस्योत्पत्तिः न भवति। यथा - आकाशादीनां विभुद्रव्याणाम्। शब्दस्तु कण्ठताल्वाद्यभिघाताद् आविर्भवति। तेन शब्दस्य अनित्यत्वं सिद्ध्यति। यतो हि कण्ठताल्वाद्यभिघातरूपादभिव्यञ्जकात् प्राक् स्थितेः शब्दस्य सत्त्वे किमपि प्रमाणं नास्ति, अतः कार्य एव शब्दो न तु अकार्य इत्यवधार्य्यते । अत एव महर्षिकणादेन शब्दस्यानित्यत्वप्रतिपादकं सूत्रमुपस्थापयति वैशेषिकदर्शने - "सतो लिङ्गाऽभावात्[१०]"इति। अस्य सूत्रस्यायमर्थः प्रतिपादितः आचार्यशङ्करमिश्रेण - "यदि ह्युच्चारणात् प्रागूर्ध्वं शब्दः सन् स्यात्तदा सतोऽस्य लिङ्गप्रमाणान्तरं स्यात् । न चाऽश्रवणदशायां शब्दसत्त्वे प्रमाणमस्ति, तस्मात् कार्य एवाऽयं न व्यङ्ग्यः इति[११]"।

किञ्च यः नोत्पद्यते नैव विनश्यति , सः नित्यः। यथा - आकाशादयोऽमूर्त्ताः। शब्दश्च उत्पत्तिध्वंसवान्। कण्ठताल्वादि अभिघाताद् उत्पन्नस्य शब्दस्य तृतीयक्षणे ध्वंसः भवति। उत्पत्तिश्च तस्यैव भवति, यः स्वोत्पत्तिकारणात्प्राङ् न भवति, पश्चात् भवति ।

यथा - कपालात् प्राग् असन् घट: पश्चादाविर्भवति तथैव कण्ठताल्वाद्यभिघातात्प्रागसन्नेव शब्द: कण्ठताल्वाद्यभिघाते प्रादुर्भूत: सन् श्रूयते, पश्चान्न श्रूयते। यत: शब्दस्योत्पत्तिर्विनाशश्च भवति । अतोऽस्य अनित्यत्वमेव। यथोक्तम् -''यद् भूत्वा न भवति, तद् विनाशधर्मकम्। नैतावुत्पत्तिविनाशौ नित्यधर्मौ स्त:, न वै नित्यमुत्पत्तिधर्मकम्, न खल्पपि विनाशधर्मकम्। शब्दस्त्वभूत्वा भवतीत्युत्पत्तिधर्मक:, भूत्वा च न भवतीति विनाशधर्मक: तस्मान्नित्यवैधर्म्यादनुपलब्धिकाले नास्ति इति[१२] ''।

शब्दस्यानित्यत्वप्रतिपादनाय द्वितीयं सूत्रं भवति ''नित्यवैधर्म्यात्[१३]'' इति। अस्य सूत्रस्य अर्थप्रतिपादनावसरे आचार्यशङ्करमिश्रेण उक्तं यत् -

''नित्येन सहाऽस्य शब्दस्य वैधर्म्यमुपलभ्यते। यत: चैत्रो वक्ति,मैत्रो वक्तीत्यत्र भित्त्यादिभिर्व्यवहितोऽपि चैत्रमैत्रादिर्वचनेन अनुमीयते, न च व्यञ्जक: प्रदीपाऽऽदिर्व्यङ्ग्येन घटादिना क्वचिदनुमीयते तस्माज्जन्य एवायं, न व्यङ्ग्य इति[१४]''। अस्यासूत्रस्यायम्भाव: यथा - चैत्र: वक्ति, मैत्र: वक्ति इति कुड्यादिना आवृतोऽपि चैत्रमैत्रयो: किमपि शब्दं श्रुत्वा कश्चिद् स्वराभिज्ञात: जन: अयं शब्द: चैत्रीय:, मैत्रीयोऽयं शब्द: इत्यनुमिनोति। एवंविध: सम्प्रत्ययोऽभिव्यङ्ग्याऽभिव्यञ्जकभावेन न भवति । यतो हि नह्यभिव्यङ्ग्येन घटादिना अभिव्यञ्जकस्य प्रदीपादे: अनुमानं भवति। अभिव्यङ्ग्यादिमतेन शब्देन तु चैत्रमैत्रादयोऽनुमीयन्ते । अत: शब्दो नाऽभिव्यङ्ग्य:, अपितु कारणेन उत्पाद्य एव। तेन शब्दस्यानित्यत्वं सिद्ध्यति ।

अनित्य:शब्द: इति प्रतिपादनाय तृतीयं सूत्रं प्रस्तौति - ''अनित्यश्चायं कारणत:[१५]''। अस्य सूत्रस्य अर्थप्रतिपादनावसरे शङ्करमिश्रेण एतदेव व्याख्यातम् - ''उपलभ्यते हि भेरीदण्डसंयोगादिभ्य: प्रादुर्भवञ्छब्द:। तथा च उत्पत्तिमत्त्वादनित्योऽयमिति शब्द:[१६]'' इति। अर्थात् यो हि कारणादुत्पद्यते, सोऽनित्यो भवति । यथा घटपटौ कपालात् तन्तोश्च कारणादुत्पद्येते। अत: इमौ घटपटौ अनित्यौ स्त:। तथा शब्दोऽपि कण्ठताल्वाद्यभिघातादुत्पद्यते, अत: अस्य उत्पत्तिवचनत्वेन अनित्यत्वं गम्यते । एतदपि स्पष्टीभवति विश्वनाथस्य कारिकायाऽपि -

> उत्पन्न: को विनष्ट: क इति बुद्धेरनित्यता ।
> सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ।
> तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
> तस्मादनित्या एवेति वर्ण सर्वे मतं हि न:[१७] ।।

उदयनाचार्येणऽपि उक्तं यत् ''शब्दोऽनित्य: उत्पत्तिधर्मकत्वात् घटवत्[१८]'' तत्र वर्णस्य अनित्यत्वे शब्दस्य अनित्यत्वं सिद्ध्यति । वर्ण: कथं अनित्य: इति जिज्ञासायां कुसुमाञ्जलौ लिखितमस्ति यत् ''न हि वर्णा एव तावन्नित्या: । तथा हि इदानीं श्रुतपूर्वो गकार: नास्ति निवृत्तकोलाहल इति प्रत्यक्षेण एव शब्दध्वंस: प्रतीयते । नहि शब्द: एव अन्यत्र गत: अमूर्तत्वात् । नाऽपि आवृत:, तत एव सम्वन्धविच्छेदानुपपत्ते:''। अत एव अनित्य: शब्द: इति ।

**उपसंहार: -**

एतस्मादनुशीलनाज्ज्ञायते यत् सांख्यबौद्धजैनसम्प्रदायेषु शब्दस्य अनित्यत्वं तत्तद्दार्शनिका: यथा प्रतिपादयन्ति तथैव नैयायिकवैशेषिकादीनां मतेऽपि शब्दस्यानित्यत्वं दार्शनिकै: सिद्धान्तितम्। तेषां मते स्वत: शब्दस्य अनित्यत्वेऽपि तस्य व्यवहारनित्यतया शब्दस्य नित्यत्वोक्ति: संगच्छते। परन्तु शब्दनित्यतावादिनां मीमांसकानां व्यक्तिस्फोटवादिनां जातिस्फोटवादिनां वैयाकरणानाञ्च मते शब्दस्य नित्यत्वं सूपपादम्।

**पादटिप्पणी-**

१.न्या.सू.१.१.३
२.न्या.सू.१.१.७
३.पा.सू .४.२.१०४वार्त्तिके (२७८०)
४.अ.को .३.१.१२
५.म.भा.१.१.४६
६.न्या.सू.बा.भा.२.२.१२
७.जै.सू१.१.६-११
८.न्या.सू.२.२.१४
९.न्या.सू.२.२.१४.
१०.वै.सू.२.२.२६
११.वै.सू.२.२.२६सूत्रोपस्कार:
१२.वै.सू.भा.२.२.२६
१३.वै.सू.२.२.२७
१४.वै.सू.२.२.२७सूत्रोपस्कार:
१५.वै.सू.२.२.२८
१६.वै.सू.२.२.२८सूत्रोपस्कार:
१७.भाषापरिच्छेद:१६७-१६८
१८.न्या.कु.पृ.१६३

**सन्दर्भग्रन्था:**

१.अमरकोष:
२.व्याकरणमहाभाष्यम्
३.वैशेषिकदर्शनम् प्रशस्तपादभाष्यम्
४.वैशेषिकसूत्रोपस्कार:
५.न्यायभाष्यम्
६.मीमांसाशाबरभाष्यम्
७.अर्थविज्ञान और व्याकरणदर्शन
८.न्यायकुसुमाञ्जलि:

**अतिथ्यध्यापक:**
**नव्यव्याकरणविभाग:,**
**श्रीसदाशिवपरिसर:,पुरी**

# शब्दस्य पृथक्प्रामाण्यम्

**योगानन्दझा**

शोधच्छात्रः

बौद्धा वैशेषिकाश्च शब्दस्य प्रमाणत्वेऽपि पृथक्प्रामाण्यमनङ्गीकुर्वाणाः अनुमानविधयैव प्रामाण्यमाचक्षते । तत्र तावत् न्यायसूत्रकारः शङ्कासमाधानपूर्वकं शब्दस्यानुमानगतार्थतां निराचख्यौ । तथा हि-शब्दो न पृथक् प्रमाणम् । सोऽनुमानविधयैवार्थप्रत्यायकः । यथा खलु प्रत्यक्षेणाज्ञायमानं साध्यं ज्ञातेन लिङ्गेन पश्चान्मीयतेऽनुमानस्थले, तथैव ज्ञातेन शब्देन पश्चादर्थो ज्ञायते प्रत्यक्षादिना अनवगम्यमान इति शब्दोऽपि लिङ्गविधयैवार्थबोधकः । अपि च यत्र द्वयोः प्रमाणयोः भेदो भवति तत्र प्रमाणयोः अर्थबोधनप्रकारे वैलक्षण्यं दृश्यते, यथा प्रत्यक्षानुमानयोः अनुमानोपमानयोश्च । प्रत्यक्षस्थले हि अज्ञायमानात् इन्द्रियात् अर्थज्ञानं भवति । अनुमानस्थले तु ज्ञायमानाल्लिङ्गात् । उपमानस्थले सादृश्यज्ञानात् अर्थप्रतिपत्तिः नैवमनुमानस्थल इति प्रमाणप्रवृत्तिभेदात् प्रमाणभेदः । शब्दानुमानयोस्तु नैव प्रवृत्तिभेदोऽस्ति । ज्ञातादेव शब्दात् अर्थप्रतीतेः, ज्ञातादेव लिङ्गादर्थप्रतीतेश्च । अतः शब्दोऽनुमानमेव । किं च अनुमानस्थले यथा सम्बद्धयोः हेतुसाध्ययोर्मध्ये हेतोः दर्शनानन्तरं सम्बन्धस्मृतौ सत्यां साध्यप्रतीतिर्भवति । तथैव शब्दस्थले सम्बद्धशब्दार्थयोर्मध्ये शब्दविषयकश्रावणप्रत्यक्षानन्तरं सम्बन्धस्मृतौ सत्यामर्थप्रतीतिर्भवति इति शब्दस्य नानुमानात् पृथक् प्रामाण्यमिति पूर्वपक्षः ।

तत्र सिद्धान्तस्तु प्रत्यक्षेणानवगम्यमानां स्वर्गः, अप्सरसः, उत्तराः, कुरवः, सप्तद्वीपा लोकसन्निवेशः इत्यादीनामर्थानां न शब्दमात्रात् प्रत्ययः । किं तर्हि ? "अयं शब्द आप्तैरुक्तः "इति शब्दगतस्य आप्तोक्तस्य ज्ञानादेव समीचीनः प्रत्ययो भवति । अनुमानस्थले तु नैवमिति प्रवृत्तिभेदसद्भावात् शब्दः अनुमानातिरिक्तं प्रमाणम् । शब्दार्थयोः सम्बन्धः कश्चिदङ्गीक्रियते । प्राप्तिरूपस्तु सम्बन्धो नाङ्गीक्रियते । प्राप्तिर्नाम संयोगः, एकार्थसंयोगः, समवायो वा । किं तु समयरूप अविनाभावरूपं सम्बन्धः । अतः प्रवृत्तिभेदसद्भावात् न शब्दः अनुमानविधया प्रमाणमिति ।

न्यायवार्तिक-तात्पर्यटीकयोः "आप्तोपदेशः शब्दः[१]" इति सूत्रभाष्यव्याख्यानावसरे शब्दस्यानुमानान्तर्भावं वदतो दिङ्नागस्य मतमेवमन्ववादि अर्थासम्बद्धस्य शब्दस्यानिर्णयहेतुत्वे सर्वस्मात् शब्दात् सर्वार्थनिश्चयप्रसङ्गात् शब्दार्थयोः सम्बन्धं स्वीकृत्य शब्दादर्थनिश्चयो वक्तव्यः । तयोर्न तादात्म्यं सम्बन्धः शब्दस्य अर्थात्मत्वाभावात् । नापि कार्यकारणभावः, शब्दस्यार्थकार्यत्वाभावात् । विनाप्यर्थं पुरुषविवक्षामात्रादेव शब्दोत्पत्तेः । तस्मात् न साक्षात् शब्दादर्थनिश्चयः, विवक्षाकार्यतया तु विवक्षां गमयेत् । विवक्षा चाभिप्रायहेतुका । अभिप्रायश्च कश्चिन्मनोमात्रहेतुकः, कश्चित् प्रमाणमूलकः । तत्र यः प्रमाणनिश्चितमर्थं विवक्षति यथाविवक्षं चोच्चारयति स आप्तः । तस्य वचनात् कार्यात् कारणभूता विवक्षा अनुमीयते, तया च तत्कारणभूतमर्थज्ञानमनुमीयते । अर्थज्ञानेन च तत्कारणभूतोऽर्थोऽनुमीयते । अर्थज्ञानेन च तत्कारणभूतोऽर्थोऽनुमीयते । अर्थज्ञानस्यार्थजन्यत्वात् इत्यनया परम्परया शब्दस्य अर्थानुमापकत्वमिति ।

किन्तु मतमिदं नहि युक्तियुक्तम् । यदि शब्द न अर्थ प्रत्याययेत, ज्ञानमात्रमनुमापयेत्, तदा नार्थविशेषः सिद्ध्येत् । न च ज्ञानविशेषादेवार्थविशेषः सिद्ध्यतीति वाच्यम् । ज्ञानेऽर्थादन्यस्य विशेषस्य अभावात् । तस्मात् वक्तृज्ञानविशेषणाय पूर्वंशब्दादेव केवलात् वाक्यार्थज्ञानमेषितव्यम् ।

तस्मात् पदानि कृतसंकेतानि स्वार्थान् स्मारयन्ति, आकांक्षायोग्यताऽऽसत्तिसहकृतानि अदृष्टपूर्व वाक्यार्थं बोधयन्ति, न संगतिग्रहणमपि प्रतीक्षन्त इति दूरेऽनुमानात् भवन्तीति । एतावता समानप्रवृत्तिकत्वात् शब्दस्यानुमानत्वमिति पक्षः, विवक्षानुमानद्वारा अर्थानुमापकत्वमिति पक्षश्च निरस्तः । शब्दस्यानुमानविधया संसर्गरूपवाक्यार्थबोधकत्वमिति विषये अर्थपक्षकं पदपक्षकं चेत्यनुमानद्वयं वैशेषिकसम्मततया तात्पर्यटीकायां प्रस्तुतं, न्यायकुसुमाञ्जलौ तत्त्वचिन्तामणौ च विस्तरेणानूद्य दूषितम् । कणादेन महर्षिणा ''अस्येदं कारणं कार्यं सम्बन्धि एकार्थसमवायि विरोधि चेति लैङ्गिकमित्यनुमानलक्षणमभिधाय'' एतेनैव शाब्दं व्याख्यातम् इति वदता शब्दोऽनुमानमिति स्वमतमाविष्कृतम् ।

प्रशस्तपादाचार्येण शब्दानीनामप्यनुमानेऽन्तर्भावः, समानविधित्वात् । यथा प्रसिद्धसमयस्यासंदिग्ध लिङ्गदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्देऽपि'', इति प्रतिपादितम् । तावद्धि शब्दो नार्थं प्रतिपादयति, यावत् ''अयं शब्दः अस्यार्थस्याव्यभिचारी'' इत्येवं नावगम्यते । ज्ञाते त्वव्यभिचारे अर्थ प्रतिपादयन् शब्दः घूम इव लिङ्गं स्यादिति तदाशयः ।

जरन्नैयायिकजयन्तभट्टेन न्यायमञ्जर्यां शब्दस्यानुमानेऽन्तर्भावं वहुभिः साम्यै आशङ्य एवं समाहितम्–द्विविधः शब्दः पदं वाक्यं चेति । तत्र वाक्यमज्ञातसम्बन्धमेव वाक्यार्थमवगमयति, वाक्ये शक्त्यभावात् । अभिनवपुरुषविरचितश्लोकश्रवणे सति पदसंस्कृतमतीनां वाक्यार्थावगमदर्शनात् । अतो वाक्यस्य सम्बन्धज्ञानमूलकप्रवृत्तिमता अनुमानेन नास्ति साम्यसम्भावना । पदस्य तु सम्बन्धज्ञानसापेक्ष-प्रवृत्तिकत्वेऽपि विषयभेदात्-सामग्रीभेदाच्च अनुमानात् भिन्नत्वम् । विषयस्तावत् विसदृश एव पदलिङ्गयो । जातिविशिष्टव्यक्तिमात्रं पदस्यार्थः । अनुमानं तु वाक्यार्थविषयकत्वम् । अत्राग्निः अग्निमान् पर्वतः इति वा ततः प्रतीतेः । किं च पर्वतादिरूपं यद्विशेष्यं तज्ज्ञानपूर्वकं अग्न्यादिविशेषणज्ञानं लिङ्गादुदेति । पदात्तु विशेषणावगतिपूर्विका विशेष्यावगतिरिति विषयभेदः ।

सामग्रीभेदाच्च न शब्दोऽनुमानम् । पक्षसत्वसपक्षसत्वादिरूपसापेक्षमनुमानम् । शब्दे तु न तानि रूपाणि सन्ति, न वा अपेक्षितानि । किं च शब्दस्य अर्थसम्बन्धज्ञानसापेक्षप्रवृत्तिकत्वेऽपि नानुमानविशेषः । लिङ्गलिङ्गिनोर्हि अविनाभावो नाम सम्बन्धः, शब्दार्थयोस्तु समयापरनामा वाच्यवाचकसम्बन्धः प्रत्ययाङ्गम् । एवं च विषयभेदात् सामग्रीभेदाच्च प्रत्यक्षवत् अनुमानादन्यः शब्दः इति ।

अत्र न्यायकौस्तुभकारादयः नव्यनैयायिकाः- व्याप्त्यादिज्ञानविरहदशायामपि शाब्दबोधस्या-नुभवसिद्धतया तदानीमनुमितिसामग्र्यभावेन अनुमित्यसंभवात् शब्दः प्रमाणान्तरमित्याहुः । अपि च ''चैत्रवाक्यात् अयमर्थः श्रुतः'' इत्यादिव्यवहारविषयतया श्रुतार्थस्य शाब्दाख्यस्य विलक्षणानुभवस्य स्वीकार आवश्यक इति तत्करणतया शब्दस्य प्रमाणान्तरत्वमावश्यकम् ।

न च श्रुधातोरनुमित्यर्थकतया'' श्रुत इति व्यवहारमात्रेण न विलक्षणानुभवसिद्धिः, कुतस्तत्करणतया शब्दस्य प्रमाणान्तरत्वमिति वाच्यम् । तथा सति ''पर्वतो वह्निमान् इत्यनुमित्यनन्तरं'' पर्वत वह्निः श्रुतः इत्यादिव्यवहारापत्तेः । अपि च शब्दजन्यज्ञानानन्तरं ''शाब्दयामि'' इत्येवानुव्यवसायो भवति न तु ''अनुमिनोमि'' इति । अतोऽपि शाब्दमतिः अनुमितितो विलक्षणा । किं च शब्दात् अर्थज्ञानानन्तरं ''नानुमिनोमि'' इत्यनुव्यवसायानुरोधेन शाब्दज्ञानस्यानुमित्तिरूपत्वं न संभवति । अपि च सिद्धिसत्वे शब्दश्रवणानन्तरं इच्छां विनापि शाब्दबोधो जायते । अनुमितिस्तु सिद्धिसत्वे अनुमितीच्छां विना न जायते इति वैलक्ष्यण्यात् अनुमितिविलक्षणा शाब्दप्रमितिः । अतः शाब्दबोधात्मककार्यस्य कारणात्मककरणमपि

पृथक् सिद्धम्, तच्च पदज्ञानमुतो वा विषयतया पदमपि सम्भवति, तस्य पदस्य लक्षणं किमिति आह- अन्नंभट्टः - ''शक्तं पदम्'' इति । वाक्यरूपस्य शब्दस्य लक्षणञ्च ''आप्तोपदेशः शब्दः'' इति सूत्रकारः प्रोवाच । आप्तश्च हिताहितप्राप्तिपरिहारप्रयोज-नकपदार्थतत्वनिश्चयवन्तः तेषामुपदेशः, तैः उच्चरितं आकांक्षायोग्यतासत्तियुक्तपदसमूहात्मकं वाक्यं शब्द इति निष्कृष्टलक्षणम् ।

अर्थप्रतीतिकरणभूतं श्रोत्रग्राह्यं वस्तु शब्दप्रमाणमिति न्यायमञ्जरीकाराः । इदं तु पदवाक्योभयसाधारणं लक्षणम् । समयवलेन सम्यक्परोक्षानुभवसाधनमागमः[२] इति न्यायसारे भासर्वज्ञः । इदं पदलक्षणं भवितुमर्हति, न वाक्यलक्षणम् । वाक्ये समयाभावात् । मणिकारास्तु शब्दखण्डारम्भे ''अथ शब्दो निरूप्यते'' प्रयोगहेतुभूतार्थतात्वज्ञानजन्यशब्दः प्रमाणम् इति शब्दप्रमाणस्य निरूपणीयतया प्रतिज्ञातस्य लक्षणमाहुः ।

अत्रेदमवधेयम्-प्रमाणान्तरज्ञातार्थकानां पदार्थानामर्थस्मारकत्वमेव । न तु अनुभवात्मकप्रमा-जनकत्वमिति न प्रमाणता । वाक्यार्थस्य तु अपूर्वतया तद्विषयकप्रमाजनकत्वरूपं प्रमाणत्वं वाक्यस्य भवितुमर्हति । अत एव सूत्रोक्तं शब्दप्रमाणलक्षणं वाक्ये संगमयन्ति टीकाकारादयः । अपूर्वार्थबोधकानां स्वर्गादिपदानां तु प्रमितिजनकत्वमस्तीति पदानां प्रमाणतामाहुः केचनेति । अत एव तर्कसंग्रहे-''आप्तवाक्यं शब्दः[३]'' इत्युक्तम् । आप्तत्वञ्च प्रयोगहेतुभूतयथार्थज्ञानवत्वम् । तथा च प्रयोगहेतुभूतार्थज्ञानजन्यश-ब्दत्वमिति पर्यवसन्नार्थः[४] ''इति न्यायबोधिनी । नीलकण्ठप्रकाशिकायामपि ''प्रकृतवाक्यार्थगोचर-यथार्थज्ञानजन्यवाक्यं प्रमाणशब्द[५] इति तु निष्कर्षः । वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वाल्लक्षणसंगतिः । आप्तोक्तवाक्येऽतिव्याप्तिवारणाय जन्यान्तम् । नृसिंहप्रकाशिकायां तु आप्तवाक्यमिति । आप्तोच्चरितवाक्यमित्यर्थः, शब्द इति । शब्दप्रमाणमित्यर्थः, इदं च ज्ञायमानशब्दस्य प्रमाणत्ववाद्या-चार्यमतानुसारेण । सिद्धान्ते तु वाक्यज्ञानं शब्दप्रमाणम् । एतेन वाक्याभावेऽपि मौनिकर्तृकलिप्या-दिज्ञानजन्यवाक्यज्ञानात् शाब्दबोधोत्पत्या व्यतिरेकव्यभिचारेण वाक्यस्य शब्दप्रमाणत्वं न संगच्छत इति दूषणमपास्तम् - इत्यभाणि । तात्पर्यटीकायामपि वाक्यज्ञानं शब्दप्रमाणमिति-पक्षः-प्रास्तावि । तर्कसंग्रहयथाश्रुतमूलात् प्रकृतवाक्यार्थविषयकयथार्थज्ञानपूर्वकवाक्योच्चारयितृकर्तृकवाक्यं शब्द इति लक्ष्यते । तत्र तादृशप्रमातृकर्तृकवाक्यत्वापेक्षया प्रकृतवाक्यार्थविषयकप्रमाजन्यवाक्यत्वस्य लघुतया तस्यैव शब्दप्रमाणलक्षणत्वमुचितम् । दीपिकाव्याख्याने रामरूद्रीयेऽपि आप्तवाक्यमिति । वाक्यज्ञातमित्यर्थः । तेन मौनिश्लोकादौ वाक्यविरहेऽपि शाब्दबोधोत्पत्या वाक्यस्य शाब्दबोधकारणत्वासम्भवेऽपि न क्षतिः । तत्रापि वाक्यानुमानेन वाक्यज्ञानसत्वात् । अनाप्तोच्चरितत्वप्रकारकवाक्याविशेष्यकज्ञानेऽतिव्याप्तिरणाय आप्तपदम् । तथा च ''इदमाप्तोच्चरितम्'' इत्याकारकमाप्तोच्चरितत्वप्रकारकवाक्यविशेष्यकज्ञानं शब्दप्रमाणमित्यर्थः । शब्दशक्तिप्रकाशिकायामपि -

**अनुभवहेतुः सकले सद्यः समुपासिता मनुजे ।**
**साकाङ्क्षासन्ना च स्वार्थे योग्या सरस्वती देवी[६] ।।**

इति मङ्गलश्लोकेन अनुभवजनकसाकाङ्क्षासन्नयोग्यपदसमूहात्मकं ज्ञायमानं वाक्यं शब्दप्रमाणमिति लक्षणं सूचितम् । मीमांसाभाष्यकारेण शवरस्वामिना ''शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्[७]'' इत्युक्तम् । शास्त्रपदं प्रमाणशब्दसामान्योपलक्षणम् । यः शब्दः स्वविषयकज्ञानेन मानान्तरप्राप्ताबाधि-तार्थज्ञानं जनयति स प्रमाणं इत्युक्तं भवति । तेन मानान्तराप्राप्ताबाधितार्थविषयकज्ञानजनकज्ञानविषयत्वे सति शब्दत्वं शब्दप्रमाणलक्षणमिति फलितम् ।

वेदान्तपरिभाषायां 'यस्य वाक्यस्य तात्पर्यविषयीभूतः संसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम् इत्युक्तम् । मानान्तराबाधिततात्पर्यविषयीभूतपदार्थसंसर्गबोधकवाक्यत्वं शब्दप्रमाणलक्षणमिति फलितम् । प्रमाणपद्धतौ शब्दखण्डारम्भे ''निर्दोषशब्दत्वं निर्दोषवाक्यत्वं वा आगमलक्षणमित्युक्तम् । न्यायपरिशुद्धौ शब्दखण्डारम्भे वेदान्तदेशिकैः ''आप्तानुक्तवाक्यं शब्द''[८] इत्युक्तम् । इदं च पौरुषेयापौरुषेयप्रमाणशब्दानां सामान्यलक्षणम् । ''आप्तवाक्यम्'' इत्युक्तावपौरुषेये वेदेऽव्याप्तिः स्यादित्यालोच्य अनाप्तानुक्त- वाक्यमित्युक्तम् ।अपौरुषये वेदे आप्तोक्तत्वमिव अनाप्तोक्तमपि नास्तीति अनाप्तानुक्तवाक्यत्वसत्वा- ल्लक्षणसमन्वयः । आप्तोक्ते पौरुषेयवाक्येऽपि अनाप्तानुक्तत्वसत्वात् समन्वयः ।इत्थमनाप्तोक्ते शब्दाभासे च अनाप्तोक्तत्वविरहान्नातिव्याप्तिरिति ।

साङ्ख्यकारिकायाम् ''आप्तश्रुतिराप्तवचनं तु''[९] इति आप्तवचनस्य लक्षणमुक्तम् । आप्ता प्राप्ता युक्तेति यावत् ।आप्ता चासौ श्रुतिश्चेत्याप्तश्रुतिः ।श्रुतिः वाक्यजनितवाक्यार्थज्ञानम्'' इति तद्व्याख्यायां कौमुद्यामुक्तम् । आप्तशब्द समीचीना दोषहीनेति वा अर्थः । बुद्धिवृत्तिरेव साङ्ख्यमते प्रमाणत्वेन व्यवह्रियमाणत्वाद् वाक्यजनितं वाक्यार्थज्ञानमित्युक्तम् ।तथा च निर्दोषवाक्यजन्यं वाक्यार्थज्ञानं आगमप्रमाणं इत्युक्तं भवति ।शब्दस्य प्रमाणत्वे तु निर्दोषवाक्यं शब्द इति फलति ।

नागेशेन लघुमञ्जूषायां आप्तोपदेशः शब्द प्रमाणम्[१०] ।आप्तो नाम अनुभवेन वस्तुतत्वस्य कार्त्स्नेन विद्वान् रागादिवशादपि नान्यथावादी । आप्तोपदेश इत्यस्य आप्तश्चासौ उपदेशः, आप्तस्योपदेशः इति द्वेधा विग्रहात् आप्तत्वाप्तोक्तत्वान्यतरवान् उपदेश इत्यर्थ इति अपौरुषेयस्य वेदस्य स्वत एवाप्तत्वम् । पौरुषेयवाक्यस्य तु आप्तोक्तत्वमित्युभयानुयायीदं लक्षणमित्युक्तम् । एतावता प्रपञ्चेन शब्दस्य पृथक् प्रामाण्यं निर्विवादतया सिद्धमिति शम् ।।

**सन्दर्भसूची –**


१. न्यायसूत्रम् –१–१–७
२. न्यायसारः - पृ.३७९
३. तर्कसंग्रहः - पृ.६५
४. तर्कसंग्रहन्यायबोधिनी - पृ.६५
५. नीलकण्ठप्रकाशिका - पृ.३१३
६. शब्दशक्तिप्रकाशिका पृ.-१
७. शावरभाष्यम् - १.१.९५
८. न्यायपरिशुद्धिः
९. सांख्यकारिका–५
१०. लघुमञ्जूषा -११



नव्यन्यायविभागः
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# धर्मशास्त्रे आत्मोपासना

डॉ. शान्तिलता अधिकारी

हृदयप्रदेशादभिनि:सृता: हिताहितनाम्ना द्वासप्ततिसहस्राणि नाडीनां मध्ये मण्डलं चन्द्रप्रभं तस्मिन्नात्मा निर्वातस्य दीप शतश प्रकाशमान आस्ते । यतस्तत्साक्षात्करणादिह संसारे न पुन: संसरति अमृतत्वं प्राप्नोति । आत्मव्यतिरिक्तविषयेभ्यो मनोबुद्धिस्मृतीन्द्रियाणि प्रत्याहृत्य आत्मैकविषयाणि कृत्वा आत्मा ध्येय: । योऽसौ प्रभुर्निर्वातस्यप्रदीपवद्दीप्यमानो निष्प्रकम्पो हृदि तिष्ठति । स्वाध्यायावगतमार्गानतिक्रमेण सामगानम् कर्त्तव्यम् । साम्नो गानात्मकत्वेऽपि गायमिति विशेषणं प्रगीतमन्त्रव्युदासार्थम् । याज्ञवल्क्येनाऽपि उक्तम् यत् – ''शब्दब्रह्मणि निष्णात: परं ब्रह्माधिगच्छति' इति । अपरान्तक:, उल्लोप्य, मद्रक, प्रकरी, ओवेणक, रोविन्द उत्तरगीति, ऋग्गाथा, पाणिका, दक्षविहिता, ब्रह्मगीतिका च एते लौकिकगीतिकाया: चित्तैकाग्रतथासाकं अभ्यासपूर्वकं गायने मोक्षप्राप्ति: भवति । भरतादिमुनिप्रतिपादितवीणावादनतत्त्ववेदी सप्तस्वरेषु विद्यमान द्वाविंशतिविधा श्रुति: षड्जादय: अष्टादशविधाजातिज्ञानप्रवीण तालज्ञाननिपुणव्यक्ति तदनुविद्धब्रह्मोपासनया चित्तवृत्तेरात्मैकाग्रताया: सुकरत्वादल्पायासेनैव मुक्तिपथं प्राप्नोति । गीतज्ञो यदि कथञ्चिद्योगेन परमं पदं न प्राप्नोति तर्हि रुद्रस्य सचिवो भूत्वा तेनैव सह मोदते क्रीडति ।

इह जगति यदिदं स्थूलकलेवरादावनात्मन्यात्माभिमानरूप मोहजालं तदपास्य तद्व्यतिरिक्तो य: पुरुषोऽनेककरचरणलोचन: सूर्यवर्चा: अनन्तरश्मि: सहस्रक: बहुशिरा दृश्यते । एतच्च तत्तद्गोचरशक्त्या-धारतयोच्यते; तस्य साक्षात्कारादिसम्बन्धाभावात् । स एवात्मा यज्ञ: प्रजापतिश्च । यतोऽसौ विश्वरूप: सर्वात्मक: वैश्वरूप्यमेव कथमिति चेत् इति मुनय: याज्ञवल्क्यं प्रश्नं कुर्वन्ति । यस्मादसौ विराज: पुरोडाशाद्यन्नरूपेण यज्ञत्वमुपगच्छति । यज्ञाच्च वृष्ट्यादिद्वारेण प्रजासृष्टिरित्येवं विश्वरूपम् । तस्य वदनभुजसक्थिचरणजाता यथाक्रममग्रजन्मादयश्चत्वारो वर्णा: । तथा तस्य पादाद्भूमि:, मस्तकात्सुरसद्म, घ्राणात्प्राणा: कर्णात्ककुभ:, स्पर्शात्पवन:, तदनाद्धुतवह:, मनस: शशाङ्क:, नेत्राद्भानु:, जघनाद्गगनं, जङ्गमाजङ्गमात्मकं जगच्च ।

कुम्भकार: यादृशं दण्ड - चक्र - मृत्तिका - संयोगेन घट - निर्माणं करोति । गृहकारक: यादृशं तृणमृत्काष्ठैर्गृहं निर्मीयते । हेमकार: यादृशं हेमद्वारेणैव नानालङ्कारं निर्मीयते । स्वलालसाहायेन कोशकारक: यादृशं कोशं निर्मीयते तादृशप्रकारेण आत्माऽपि पृथिव्यादि साधन कर्णादि इन्द्रिय द्वारेणैव स्वयं इदं संसारे भिन्न भिन्न योनिषु शरीरितया सृजति । पृथिव्यादि पञ्चमहाभूत सत्य आत्माऽपि सत्य: ।

मलिनो हि यथादर्शो रूपालोकस्य न क्षम: ।
तथाऽविपक्वकरण आत्मज्ञानस्य न क्षम: ।।

यथा मलिन: दर्पणं रूपं दर्शयितुम् असमर्थ: भवेत् तद्वत् आत्मा रागादिदोषयुक्त: भूत्वा जन्मान्तर ज्ञानं प्राप्तुं असमर्थ: भवेत् ।

> कर्कट्यांवारौ यथाऽपक्वे मधुर: सन् रसोऽपि न
> प्राप्यते ह्यात्मनि तथा नापक्वकरणे ज्ञता ।।

कर्कटिफलमध्ये मधुरो रसो अपक्वावस्थायां यथा नोपलभ्यते तथात्मन्यपक्वकरणे ज्ञातृता प्राग्भवीयवस्तुगोचरा न प्राप्यते ।

ये च दानादिस्मार्तकर्मपरा: सम्यग्दम्भरहिता: तथाऽष्टाभिरात्मगुणै: दयाक्षान्तिरनसूयाशौचमनायासो मङ्गलमकार्पण्यमस्पृहा इति गौतमादि प्रतिपादितैर्युक्ता: । तथा ये च सत्यवचननिरतास्तेऽपि तेनैव पितृयानेनैव सुरसदनमाप्नुवन्ति । वेदानुवचन - यज्ञ - ब्रह्मचर्य - तप: दम - श्रद्धा - उपवासविषयाशक्त्यादिदोषविनाशपूर्वक- ध्यानधारणासत्त्वशुद्ध्यापादनद्वारेण्यात्मज्ञानस्य हेतव इत्युपपन्नं भवति ।

बद्धपद्मासने उपविश्य वामकरमध्यभागे दक्षिणकरं संस्थाप्य मुखं उर्द्धं कृत्वा चिबुकं वक्षस्थले स्तम्भयित्वा निमीलिताक्ष:, कामक्रोधादिरहित: दन्तैर्दन्तानसंस्पर्शयन् पिहितानन:, सुनिश्चलो निष्प्रकम्प:, तथा क्षेपो न भवति । तथोपविष्ट: सन्, द्विगुणं त्रिगुणं वा प्राणायामाभ्यासमुपक्रमेत् । ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपवदप्रकम्प: प्रभु: ध्यातव्य: । तत्र च हृदि आत्मानं मनो गोचरतया धारयेत् ।

अन्तर्धानम् स्मृतिरतीन्द्रियेष्वर्थेषु मन्वादेरिव स्मरणम्, कमनीयता, दृष्टिरतीता जागतेष्वप्यर्थेषु, तथा श्रोत्रज्ञ वा, निजशरीरत्यागेन परशरीरप्रवेशनम्, स्वच्छया पदार्थानां सृष्टि:, इत्येतद्योगस्य सिद्धेर्लक्षणम् । योगसिद्धि प्राप्तादनन्तरं शरीर परित्यागं कृत्वा ब्रह्मत्वप्राप्तये प्रभवति । सर्वकाम्यनिषिद्धकर्मण: परित्यज्य एकवदभ्यासेन वने स्थित्वा अयाचित व्रतधारणपूर्वकं मिताशनापादितसत्त्वशुद्धिरात्मोपासनेन मुक्तिर्प्राप्नोति । न्यायेनोपार्जितधन: अतिथिपूजातत्पर:, नित्यनैमित्तिकश्राद्धानुष्ठाननिरत: सत्यवदनशील: सन्नात्मतत्त्वध्याननिरतो गृहस्थोऽपि हि यस्मान्मुक्तिमवाप्नोति ।

सहायकाचार्य्या, धर्मशास्त्रविभाग:
श्रीजगन्नाथसंस्कृतविश्वविद्यालय:, श्रीविहार:, पुरी

# योगपद्धतिमीमांसा

**नरसिंहपण्डा**

शोधच्छात्रः

आचार्यपतञ्जलिकृतः 'पातञ्जलयोगदर्शनम्' इति ग्रन्थः सुप्रसिद्धो वर्तते । योगस्य सम्पूर्णाङ्गस्य वर्णनमत्र विद्यते । ग्रन्थेऽस्मिन् चतुर्षु पादेषु ग्रन्थस्य विभाजनं दृश्यते । तद्यथा – समाधिपादः, साधनपादः, विभूतिपादः, कैवल्यपादश्च । तत्र ग्रन्थारम्भे 'अथ योगानुशासनम्' इति सूत्ररूपेण ग्रन्थारम्भस्य प्रतिज्ञा विद्यते । प्रसङ्गेऽस्मिन् माधवाचार्येणोक्तम् – ''तत्र 'अथ योगानुशासनम्' इति प्रथमसूत्रेण प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजनसम्बन्धाधि- कारिरूपमनुबन्धचतुष्टयं प्रतिपाद्यते । अत्राथशब्दोऽधिकारार्थः स्वीक्रियते । तस्मात्पारिशेष्यादधिकारप-दवेदनीय प्रारम्भार्थोऽथशब्द इति विशेषो भाष्यते । यथा 'अथैष ज्योतिरथैव विश्वज्योतिः'' इत्यत्राथशब्द क्रतुविशेषप्रारम्भार्थः परिगृहीतः, यथा च 'अथ शब्दानुशासनम्' (पात.भा.१/१) इत्यत्राथशब्दो व्याकरणशास्त्राधिकारार्थस्तद्वत् ।

तदभाषि व्यासभाष्ये योगसूत्रविवरणपरे अथेत्ययमधिकारार्थः प्रयुज्यते इति । तद्व्याचख्यौ वाचस्पतिः । तदित्थम् - अमुष्याथशब्दस्याधिकारार्थत्वपक्षे शास्त्रेण प्रस्तूयमानस्य योगस्योपवर्तनात्समस्तशास्त्रतात्पर्यार्थ-व्याख्यानेन शिष्यस्य सुखावबोधप्रवृत्तिर्भवतीत्यथशब्दस्या - धिकारार्थत्वमुपपन्नम् ।'' इति ।

योगस्य नाम योगशास्त्रस्यानुबन्धचतुष्टयविषये इत्थमभाणि – ''तत्र शास्त्रे व्युत्पाद्यमानतया योगः ससाधनः सफलो विषय तद्व्युत्पादनमवान्तरफलम् । व्युत्पादितस्य योगस्य कैवल्यं परमप्रयोजनम् । शास्त्रयोगयोः प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः । योगस्य कैवल्यस्य च साध्यसाधनभावलक्षणः सम्बन्धः । स च श्रुत्यादिप्रसिद्धः । मोक्षमपेक्षमाणा एवाधिकारिण इत्यर्थसिद्धम् ।

न च 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू. १/१/१) इत्यादावधिकारिणोऽर्थतः सिद्धिराशङ्कनीया । तत्राथशब्देनानन्तर्याभिधानप्रणाडिकयाऽधिकारिसमर्पणसिद्धौ आर्थिकत्वशङ्कानुदयात् । अत एवोक्तं श्रुतिप्राप्ते प्रकरणादीनामनवकाश इति । अस्यार्थः – यत्र हि श्रुत्यार्थो न लभ्यते तत्रैव प्रकरणादयोऽर्थं समर्पयन्ति नेतरत्र । यत्र तु शब्दादेवार्थस्योपलम्भस्तत्र नेतरस्य सम्भवः ।

शीघ्रबोधिन्या श्रुत्या विनियोगस्य बोधनेन निराकाङ्क्षतयेतरेषामनवकाशात् । किं च श्रुत्या बोधितेऽर्थे तद्विरुद्धार्थं प्रकरणादि समर्पयति, अविरुद्धं वा ? न प्रथमः । विरुद्धार्थबोधकस्य तस्य बाधितत्वात् न चरमः । वैयर्थ्यात् । तदाह – 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै.सू. ३/३/१४) इति । बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।

मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ।। इति च । तस्माद्विषयादिमत्त्वात् ब्रह्मविचारकशास्त्रवद्योगानुशासनमारम्भणीयमिति स्थितम् ।'' इति । एवं प्रकारेण व्याख्यानं विहितं माधवाचार्येण 'अथ योगानुशासनस्य' सूत्रस्य ।

'योगश्चित्तवृत्तिनिरोधः' १/१/२ इति समाधिपादस्य द्वितीयं सूत्रं योगस्य परिभाषात्मकमस्ति । अर्थात् चित्तवृत्तिनिरोधो भवति योगः । चित्तवृत्तीनां निरोधः चित्तवृत्तिनिरोध इति । चिती सञ्ज्ञाने इति धातोः क्तप्रत्यये नपुंसकलिङ्गे चित्तमिति शब्दो निष्पद्यते । चित्तशब्दस्य प्रयोगः मनोबुद्ध्यहङ्काररूपे भवति । अर्थात् मनोबुद्ध्यहङ्काराणां समष्टिरूपं जायते चित्तम् । मुख्यत्वेन मनसोऽर्थे चित्तस्य प्रयोगो दृश्यते लोके । सारांशत्वेन 'अनुसन्धानात्मकवृत्तिमदन्तःकरणम्' चित्तमिति । तस्य वृत्तिः नाम क्रिया चिन्तवृत्तिः । वृत्तिशब्दस्य विभिन्नसन्दर्भे प्रयोगो दृश्यते । तद्यथा – लोके जीविकार्थे वृत्तिशब्दः प्रयुज्यते । तथाहि मनुस्मृतौ – ''एषोदिता गृहस्थस्य वृत्ति विप्रस्य शाश्वती'' । (४.१८) इति । आचरणार्थेऽपि वृत्तिशब्दः प्रयुक्तः । यथा अभिज्ञानशाकुन्तले – ''कुरुप्रियसखी वृत्तिं सपत्नीजने'' । इति । शास्त्रप्रवृत्त्यर्थेऽपि वृत्तिशब्दः व्यवहृतः । यथा महाभाष्ये पस्पशाह्निके वृत्तिसमवायार्थः वर्णानामुपदेशः । वृत्तिः शास्त्रप्रवृत्तिः । अर्थप्रतिपादनायापि वृत्तिशब्दः उपस्थापितः । यथा – ''सूत्रस्य का वृत्तिः ? अर्थात् सूत्रस्य कोऽर्थः ? इति । उच्चारणविषयेऽपि द्रुतादिभेदेन वृत्तिशब्दः आचार्यैः सम्पादितः यथा – 'अभ्यासार्थे द्रुतावृत्तिर्मध्या वै चिन्तने स्मृता । इति । शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता ।। (प.ल.म.स्फोटप्रकरणम्) व्याकरणशास्त्रे ''परार्थाभिधानं वृत्तिः इति वृत्तेः स्वतन्त्रलक्षणमुक्तं महाभाष्ये प्रथमाह्निके । वाक्यपदीये यत्र विशेष्यविशेषणभावस्य प्रतिसंहारः जायते तत्रापि वृत्तिः इति व्यह्रियते । ''विशेषणाद् विशेष्येऽर्थे तद्भावाभ्युच्चये सति पुनश्च प्रतिसंहारे वृत्तिमेके प्रचक्षते ।'' (वा.प.-३)

वृत्तित्वन्तु शाब्दबोधजनकपदपदार्थसम्बन्धत्वमिति । (सि.ल.म.शब्दप्रकरणम्) पदपदार्थोभयनिरूपितस- म्बन्धत्वं वृत्तित्वमिति सिद्धान्तलघुमञ्जूषायाः रत्नप्रभाटीकायामुक्तं सभापतिशर्म्मणा । वस्तुतः शाब्दबोधानुकूलपदार्थज्ञानजनकज्ञानविषयः पदपदार्थयोः सम्बन्धविशेषरूपाऽभिमता शाब्दिकानाम् । योगशास्त्रे चित्तस्यावस्थाविशेषार्थे वृत्तिशब्दो निरूपितो 'योगश्चित्तवृत्तिनिरोध इतिरीत्या । यदा चित्तवृत्तीनां निरोधो भवति तदैव योगलाभः ततश्च स्वरूपेऽवस्थानम् । निर्मलचित्तेन स्वरूपज्ञानं भवति द्रष्टरि । यथा पतञ्जलिनोक्तम् – 'तदा द्रष्टुः स्वरूपेऽवस्थानम् ।। १/३' इति । एवं रीत्या कैवल्यावस्थां प्राप्नोति । यथा – 'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति ।। ४/३४'' इति । यावन्न चित्तवृत्तिनिरोधः तावन्न स्वरूपज्ञानम् । यदा योगसाधनैः चित्तवृत्तीनां न निरोधो तावन्न वास्तविकस्वरूपज्ञानमुदेति आत्मनि । चित्तवृत्तेरनुगुणमेव भ्रमवशात् स्वरूपत्वेनाप्नोति । अत एव चित्तवृत्तीनां निरोधः अवश्यमेव कर्त्तव्योऽन्यथा न भविष्यति योगसम्प्राप्तिः । तदेवोक्तम् – 'वृत्तिसारूप्यमितरत्र १/४' इति सूत्रमुखेणाचार्यैः । एषा वृत्तिः पञ्चधा विभज्यते प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदात् । यथा – 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ।। १/६' किञ्च 'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ।।१/५' इति । अर्थात् क्लिष्टभेदात् अक्लिष्टभेदाच्च पञ्चतय्यः = पञ्चधा वृत्तयो विद्यन्ते । वृत्तेः पञ्चभेदेषु प्रथमा वृत्तिः प्रमाणत्वेनोपतिष्ठते ।

प्रमाणम् – प्रमायाः करणं प्रमाणमथवा प्रमाकरणं प्रमाणम् । प्रमा केति जिज्ञासायामुच्यते यथार्थानुभवः प्रमा, तथैवायथार्थानुभवोऽप्रमा । किञ्च तद्वति तत्प्रकारकोऽनुभवो यथार्थः । यथा रजतत्ववति

रजते 'इदं रजतम्' इति रजतत्वप्रकारकोऽनुभव: यथार्थ: । एवञ्च तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थ: । यथा रजतत्वाभाववति शुक्तौ इदं रजतम् इति रजतत्वप्रकारकोऽनुभवोऽयथार्थ: । इत्थं प्रमाया: असाधारणरूपं यत्करणं तदेव प्रमाणं भवति । योगशास्त्रमतेन प्रमाणं त्रिविधं प्रत्यक्षानुमानागमभेदात् । तथाहि – 'प्रत्यक्षानुमानागमा: प्रमाणानि ।। १/७ इति । तत्रादौ प्रथमं प्रमाणं प्रत्यक्षम् । अक्षमक्षं प्रति इति, प्रतिगतमक्षम् इति वा, अक्षिणी प्रति इति वा विग्रहे समासनिष्पन्नस्य प्रत्यक्षशब्दस्य प्रयोग: प्रमाणे, विषये, ज्ञाने च भवति । तथाहि – घटादौ प्रत्यक्षं प्रमाणं, प्रत्यक्ष: घटादि:, प्रत्यक्षं घटादिज्ञानमित्यादि । तत्र प्रमाणे चक्षुरादौ प्रतिगतमक्षमिति व्युत्पत्त्या प्रत्यक्षशब्द: प्रवर्तते । (प्रतिगतं – विषयं प्रतिगतम्, विषयसन्निकृष्टमितियावत्) प्रतिगतमक्षं यं स प्रत्यक्ष इति व्युत्पत्त्या प्रत्यक्षशब्दो विषये प्रवर्त्तते । तथा च प्रत्यक्षं नाम प्रमाणमपि, तज्जन्यञ्च ज्ञानमपि प्रत्यक्षमेव । श्रीमता गंगेशोपाध्यायेन 'साक्षात्कारित्वम्' इति प्रत्यक्षलक्षणमकारि तत्त्वचिन्तामणौ प्रत्यक्षप्रमाणनिरूपणप्रकरणे । साक्षात्कारित्वं हि इन्द्रियार्थसन्निकर्षोत्पन्नमेव सम्भवति ।

इन्द्रियाणि खलु घ्राणरसनचक्षुस्त्वक्श्रोत्रात्मकानि पञ्च, मनश्चैकमन्तरिन्द्रियमिति आहत्य षड् विद्यन्ते । एषां ग्राह्या अर्था अपि नियता भवन्ति । नहि सर्वोऽप्यर्थ: एकेन्द्रियविषय: सर्वेन्द्रियविषयो वा भवति । अपितु नियतमेवार्थं प्रत्येकमिन्द्रियं गृह्णाति । तथा च चक्षुषा रूपं, रसनया रस:, घ्राणेन गन्ध:, त्वचा स्पर्श:, श्रोत्रेण शब्द:, मनसा च यथायथं सुखदु:खादिकं गृह्यन्ते । यो हि विषय: येनेन्द्रियेण गृह्यते तदुभयोस्सम्बन्धविशेष: सन्निकर्षतां भजते, येनोत्पद्यमानं ज्ञानं प्रत्यक्षात्मकं भवति । सन्निकर्षश्च साक्षात् परम्परासाधारणसम्बन्ध: । यतो हि येनेन्द्रियेण यद्द्रव्यं गृह्यते, तेनैवेन्द्रियेण तद्गताजाति: तदभावश्च गृह्यते इति तार्किकाणामभिप्राय: । गुणकर्मजातिभिरिन्द्रियग्राह्याभिरिन्द्रियस्य साक्षात्संयोगसम्बन्धो भवितुं नार्हति । अत एव सूत्रकृता सम्बन्धपदमनुक्त्वा सन्निकर्षपदमुक्तम् । यद्वस्तु इन्द्रियग्रहणयोग्यं तेनैव सहेन्द्रियस्य साक्षात्परम्परासाधारण: सम्बन्ध: सन्निकर्षतां भजमान: प्रत्यक्षज्ञानमुत्पादयति एतद् ज्ञापनार्थमेव सूत्रेऽर्थपदस्य प्रवेश: । तस्मात् गगनादिनातीन्द्रियेण द्रव्येण सह चक्षुरिन्द्रियस्य सत्यपि सन्निकर्षे गगनादे: प्रत्यक्षत्वं न भवति । अत: सूत्रकृता आचार्यगौतमेन इन्द्रियसन्निकर्षं विहाय इन्द्रियार्थसन्निकर्षपदं प्रयुक्तम् ।

सन्निकर्षोऽयं लौकिकालौकिकभेदेन द्विविध: । पुन: लौकिकसन्निकर्ष: षड्विध: – संयोग:, संयुक्तसमवाय:, संयुक्तसमवेतसमवाय:, समवाय:, समवेतसमवाय:, विशेषणविशेष्यभावश्चेति । एवञ्च कस्यापि प्रत्यक्षयोग्यद्रव्यस्य चक्षुषा त्वचा मनसा वा इन्द्रियेण प्रत्यक्षे विषयेन्द्रियसंयोगात्मक: सन्निकर्षोऽपेक्ष्यते । एवमेव द्रव्यगतस्य गुणस्य कर्मण: सामान्यस्य साक्षात्कारे संयुक्तसमवाय:, घटरूपेऽवस्थितस्य रूपत्वस्य साक्षात्कारे संयुक्तसमवेतस-मवाय:, शब्दसाक्षात्कारे समवाय:, शब्दत्वसाक्षात्कारे समवेतसमवाय:, अभावसाक्षात्कारे च विशेषणविशेष्यभाव: सन्निकर्षोऽपेक्ष्यते । उक्तेषु षड्विधसन्निकर्षेषु संयोगसमवायविशेषणविशेष्यभावा एते त्रय: साक्षात्सम्बन्धा:सन्ति । अवशिष्टाश्चान्ये त्रय: परम्परासम्बन्धा: सन्ति ।

मनोबुद्धीन्द्रियै: ज्ञातव्या: येऽपि पदार्था: सन्ति, तेषामन्त:करणैरिन्द्रियैश्च सह विना व्यवधानेन

भ्रमसंशयरहितं यज्ज्ञानं जायते तत्प्रत्यक्षानुभवेन जायमाना वृत्तिर्निगद्यते । एषा वृत्तिः प्रमाणवृत्तिरिति निगद्यते । यैः प्रत्यक्षदर्शनैः सांसारिकपदार्थानां नश्वरता निश्चीयते किं वा सर्वतोभावेन तेषु पदार्थेषु दुःखप्रतीत्या मनुष्येषु वैराग्यमुत्पद्यते, या चित्तवृत्तिनिरोधने सहायिका, यया योगसाधनायां श्रद्धा वर्धते, उत्साहो जायते एतादृशी या वृत्तिः सा प्रमाणवृत्ति-रक्लिष्टा, तथा च यैः प्रत्यक्षदर्शनैः सांसारिकपदार्थेषु नित्यत्वं सुखरूपत्वञ्चानुभूयते, भोगेषु आसक्तिरुत्पद्यते, वैराग्यविरोधिभावाः वर्धन्ते एतादृशी या वृत्तिः सा प्रमाणवृत्तिः क्लिष्टास्ति ।

- अनुमानप्रमाणम् – लिङ्गपरामर्शजन्यं ज्ञानमनुमानम्, अनुमितिकरणमनुमानम् । 'व्याप्तिविशिष्टपक्षधर्म-ताज्ञानजन्यं ज्ञानमनुमितिः । तत्करणमनुमानम्' इति श्रीमता गंगेशेन प्रतिपादितम् (त.चि.५/३७) । पक्षे धर्मः पक्षधर्मः, व्याप्तिविशिष्टश्चासौ पक्षधर्मः–व्याप्तिविशिष्टपक्षधर्मः तस्य भावः व्याप्तिविशिष्टपक्षधर्मता, तस्याः ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं तेन जन्यं ज्ञानं, तदेवानुमितिरिति ।

सन्दिग्धसाध्यवति पक्षे धर्मतया भासमानः साध्यानुमापको हेतुर्भवति । स च व्यापकसाध्यनिरूपितसाह-चर्यात्मकव्याप्तिविशिष्टो व्याप्यो भवति । तादृशव्याप्तिविशिष्टहेतोर्यदा पक्षधर्मता प्रतीयते तदा तज्ज्ञानेना- दृष्टव्यापकसाध्यविषयकं ज्ञानं जायते । सैवानुमितिः प्रमा इति बोध्यम् । तत्करणञ्च व्याप्तिज्ञानमेवानुमानम् ।

आचार्यकेशवमिश्रमतेन – येनानुमितिरुत्पद्यते तदेवानुमानम् । लिङ्गपरामर्शादनुमितिरुत्पद्यते अतो लिङ्गपरामर्शोऽनुमानम् । यथा पर्वतादौ धूमादिज्ञानमेव लिङ्गपरामर्शः, तदेवानुमितिं प्रति करणं भवति ।

व्याप्तिबलेनार्थबोधजनकं लिङ्गं भवति । यथा धूमो वह्नेर्लिङ्गम् । यत्र-यत्र धूमः तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः । व्याप्तिनिश्चयानन्तरमेव धूमो वह्निबोधको भवितुमर्हति । अतः व्याप्तिबलेन धूमः वहनेरनुमापकत्वेन लिङ्गं भवति । लिङ्गपरामर्शः त्रिविधः । महानसे वह्निधूमयोः भूयो दर्शनेन व्याप्तिज्ञानं, तेन च महानसे वर्तमानकालिकधूमस्य ज्ञानजनकः प्रथमलिङ्गपरामर्शो भवति । पर्वतादौ यद् धूमज्ञानं तद्द्वितीयम् । तत्रैव च व्याप्तिस्मरणानन्तरं यद् वह्निव्याप्यो धूम इति ज्ञानं तदेव तृतीयम् । अत एवानुमानप्रक्रियायां लिङ्गस्य ज्ञानं वारत्रयं जायते । इत्थं हेतुसाध्ययोर्मध्ये स्वाभाविकः सम्बन्धः परमावश्यकः न त्वौपाधिकः ।

कारिकावलीकारेणानुमितौ व्याप्तिज्ञानस्यैव करणत्वं प्रतिपादितम् । व्याप्तिज्ञानाभावे हेतोः पक्षधर्मत्वप्रतीतावपि न साध्यस्यानुमितिरिति तस्यैव साधकतमत्वात् करणता ज्ञातव्या । उक्तञ्च –

व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥<br>
अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि ।<br>
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ (कारिकावली का: ६६/६७)

तथा चानुमितौ ज्ञायमानस्य लिङ्गस्य करणत्वं नैयायिकैः नाभ्युपेयते यदि ज्ञायमानस्य लिङ्गस्य करणत्वमभ्युपेयेत तदा अनागतादिलिङ्गेनागतादिलिङ्गिविषयकानुमितिर्नोपपद्येत । अतो व्याप्तिज्ञानमेव करणतया स्वीकार्यम् ।

अनुमानं त्रिविधं भवति पूर्ववत् शेषवत् सामान्यतोदृष्टञ्च ।

- तत्र प्रथममनुमानं 'पूर्ववदनुमानम्' – यत्र कारणेन कार्यमनुमीयते । यथा मेघावच्छिन्नं गगनं दृष्ट्वा वर्षा भविष्यतीत्यनुमानम् ।

- शेषवदनुमानम् – यत्र कार्येण कारणमनुमीयते । यथा नद्यां वेगं प्रवाहञ्च दृष्ट्वा इदमनुमीयते यत् वृष्टिरभूत् । शेषपदेनात्र कार्यस्यैव ग्रहणं क्रियते । वेगप्रवाहादिकार्यं दृष्ट्वा चात्र कारणीभूतस्य पूर्ववृष्टेरनुमानं भवति ।

- सामान्यतोदृष्टमनुमानम् – व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति । अयं भावः– यत्र कार्यकारणभावमन्तरापि वस्तुद्वयस्य नियतसहचारो दृश्यते तत्रैकेन द्वितीयस्य यदनुमानं तत्सामान्यतोदृष्टमनुमान- मुच्यते । यथा गमनमन्तरा एकस्थानादपरस्थानपर्यन्तं गन्तुं न शक्यते, भानोश्चैकस्थानादपरस्थाने स्थितिं दृष्ट्वा सामान्यतोदृष्टानुमानेनानुमीयते यद्भानौ गतिरस्तीति ।

- आगमप्रमाणम् – स्वबोधज्ञानार्थं तत्त्वज्ञानीपुरुषः आप्तोच्चारितशब्दमाध्यमेन य उपदिश्यते स आगम इति व्यासभाष्ये निगदितम् ।

- आप्तश्रुतिराप्तवचनमिति ईश्वरकृष्णो वदति सांख्यशास्त्रे । अस्य आगमप्रमाणसंयुक्ता श्रुतिः आप्तवचनं वेत्यर्थः । यः पुरुषः वस्तुनः साक्षात् ग्रहणं विधाय तस्य यथार्थज्ञानं करोति सः तद्विषये आप्तः । एतादृशपुरुषस्योपदेश एव शब्दप्रमाणम् आगमप्रमाणं वा ।

- अवयवत्वावच्छिन्नविधेयताश्रयः । समयवलेन सम्यक्परोक्षानुभवसाधनम् इति सर्वलक्षणसङ्ग्रहे जगाद ।

- आप्तोपदेशः शब्दः (न्या.सू. १.१.७) इति न्यायसूत्रकारगौतममतम् । आप्तो यथार्थोपदेशो ज्ञानं यस्मादिति व्युत्पत्त्यनुसारेण यथार्थशाब्दबोधकरणत्वं शब्दप्रमाणत्वमित्युपपन्नं भवति । स द्विविधो दृष्टादृष्टार्थत्वात् (न्या.सू.१/१/८) इति सूत्रेण दृष्टार्थकत्वाऽदृष्टार्थकत्वभेदात् शब्दप्रमाणस्य द्वैविध्यमुपदिष्टम् । तत्र शब्दमुपजीविप्रमाणा-तिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः, यथा घट-पटादिः । एवं शब्दतदुपजीवि-प्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः, यथा स्वर्गाऽपवर्गादिः ।

आचार्यवात्स्यायनेनाप्युक्तम् – 'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । वस्तूनां साक्षात्करणमर्थस्याप्तिः, तया प्रवर्त्तत इत्याप्तः (न्या.सू.भा.१.१.७) वस्तूनां साक्षात्कारं विधाय तेषां यथार्थरूपेण अन्यज्ञानकर्तृक आप्तपुरुषोपदेशः शब्द इति । आप्ततायाः सम्बन्धः कुलस्य श्रेष्ठत्वेन नास्ति । अर्यः, अनार्यः, म्लेच्छोऽपि नाम कोऽपि तद्धर्मावच्छिन्नः आप्तो भवितुमर्हति । तदुक्तम् – 'ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति (न्या.सू.भा.१.१.७) ।

वस्तुतो योगशास्त्रे यदागमप्रमाणं तद् वेदानुगुणमेव । वेदसम्मतं यन्मतं तत्स्वीकरोति योगशास्त्रकारः आगमप्रमाणत्वेन । यदि वैदिकमतं विखण्ड्य अन्यं मतं स्थापयति कोऽपि तदस्वीकार्यम् । नो चेत् जैनादीनामपि वचनं ग्राह्यं स्यात् जैनधर्मोपदेशात् वेदशास्त्राप्तपुरुषाणां वचनमागमपदवाच्यं भवति । येन

माध्यमेन इन्द्रियाप्रत्यक्षं ज्ञानं जायते अर्थात् यत्र अनुमानमपि न गन्तुं शक्नोति तत्रागमप्रमाणस्यावश्यकता भवति । येनागमप्रमाणेन भोगात् वैराग्यं भवति सा आगमप्रमाणवृत्तिरक्लिष्टा अन्या आसक्तिजन्या क्लिष्टास्ति ।श्रीमद्भगवद्गीतायामुच्यते–

'ये हि संस्पर्शजा भोगा दु:खयोनय एव ते ।
आद्यवन्त: कौन्तेय न तेषु रमते बुध: ।।'' ५/२२ इति ।

- विपर्यय: – वृत्तिषु द्वितीया वृत्ति: विपर्ययवृत्तिर्विद्यते । विपर्ययस्य लक्षणमुच्यते – 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ।।' १/८ पा.यो.सू. अर्थात् तदभाववति तत्प्रकारकं ज्ञानं विपर्यय: । यथा शुक्तौ रजतज्ञानम् । रजतत्वाभाववति रजतत्वप्रकारकं ज्ञानं विपर्ययज्ञानं भवति ।
- विकल्प: – अस्य लक्षणं करोति 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प: ।। १/९ पा.यो.सू.इति । मात्रशब्दाधारेण विहिता पदार्थकल्पना, यस्य पदार्थस्य वास्तविकी सत्ता नास्ति तस्य कल्पना विकल्प: उच्यते । आगमप्रमाणजनितवृत्तिभि: जायमाना: या: सङ्कल्पना: ता: अतिरिच्य प्रमाणरहितवाक्याधारेण या: कल्पना: क्रियन्ते ता: सर्वा: विकल्पवृत्तिभूता: सन्ति । यथा –

एष वन्ध्यासुतो याति खपुष्पकृतशेखर: ।
कुर्मक्षीरचये स्नात: शशश्रृङ्गधनुर्धर: ।। इति ।

या कापि वन्ध्या सा सुतवती न भवितुमर्हति पुन: अन्या का कथा खपुष्पकृतशेखरस्य । परन्तु एषा परिकल्पना कृता ।वन्ध्यासुत: असम्भव:, खपुष्पमसम्भवम्, कुर्मक्षीरस्य चयोऽपि तथैव शशश्रृङ्गमसम्भवम्, तस्य धनु: कुत: तथापि श्लोकोऽयं विद्यते असम्भवसम्मेलनस्य ।

आचार्यतुलसीदाशमहोदयेनाप्युच्यते – 'वारि मथय घृत होहि बरु सिकता ते बरु तेल' इति । अत्रायमभिप्राय:-वारिमथनात् घृतं कदाचित् उत्पद्येत सिकताभि: = धूलिकणै: कदाचित् तैलमागच्छेत् परन्तु हरिभजनं विना भवमोचनं न भवितुमर्हति इति । एवं प्रकारेण विकल्पस्योदाहरणं बहुधा प्राप्यते ।

अत्रेदं तथ्यं यदि कोऽपि विकल्पवृत्त्यापि ईश्वरस्य ध्यानं करोति तर्हि तस्य मुक्ति: भविष्यत्येव । यथा कश्चिज्जन: वेदं न जानाति अथवा ज्ञात्वा कामपि नूतनां कल्पनां जनयति यस्या: प्रमाणं नास्ति तथापि यदि परमात्मानं चिन्तयति तर्हि तस्य योगमार्गेऽवश्यं प्रवृत्ति: भविष्यति ।

केचन विपर्ययविकल्पयो: समानत्वमिच्छन्ति तन्न युक्तियुक्तं प्रतिभाति ।यतोहि उपस्थितपदार्थात् भिन्नज्ञानं विपर्यय:, शब्दज्ञानाधारेणाविद्यमानपदार्थस्यासम्भवकल्पना विकल्पो विद्यते । अत: उभयो: पार्थक्य प्रतिभाति ।

- निद्रा – 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा १/१० पा.यो.सू. ।अभावज्ञानग्राहिका या वृत्ति: सा निद्रा भवति। यस्मिन् समये मनुष्येषु किमपि विषयज्ञानं न भवति मात्रज्ञानाभावस्य प्रतीतिर्भवति एतादृशज्ञानाभावज्ञानं यच्चित्तवृत्त्याश्रितं सा चित्तवृत्ति: निद्रावृत्तिर्नाम्ना निगद्यते । निद्रापि चित्तस्य वृत्तिविशेषरूपा विद्यतेऽत एव कश्चिन्मनुष्य: गभीरनिद्रां परित्यज्य वदति अद्य एतादृशी निद्रा आगता यस्यां बाह्यसंज्ञानमपि नासीत् । अनेन ज्ञायते यत् निद्रापि एका वृत्तिर्विद्यतेऽन्यथा जागरिते सति तस्या:

स्मरणं न स्यात् । इत्थं स्मृतिवृत्त्या निद्रावृत्तिः सिद्धा ।

- स्मृतिः–'अनुभूतविषयासम्प्रमोषः स्मृतिः ।। १/११ इति ।अर्थात् अनुभूतविषयस्य असम्प्रमोषः = अतिरोभवनम् अस्ति स्मृतिः । प्रमाणविपर्ययविकल्पनिद्राभिःवृत्तिभिरनुभूतविषयाणां चित्तस्थो यः संस्कारः, तस्य कमपि निमित्तं प्राप्य स्फुरणमेव स्मृतिः । स्मृतिवृत्त्या पुनः यः संस्कारः उदेति चित्ते ततः पुनः स्मृतिवृत्तिरुत्पद्यते । यया स्मृतिवृत्त्या भोगेषु वितृष्णा भवति मनुष्याणां सा स्मृतिवृत्तिरक्लिष्टा, अन्या रागद्वेषवर्धिका क्लिष्टा विद्यते ।

केचन स्वप्नं स्मृतिवृत्तिं स्वीकुर्वन्ति, परन्तु स्वप्ने जाग्रतः इव सर्वाः वृत्तयो दृश्यन्ते; अतः स्वप्नस्य कस्याञ्चिदप्येकवृत्तौ अन्तर्भावाङ्गीकारोऽसमीचीनः प्रतिभाति । एवं प्रकारेण चित्तवृत्तीनां वर्णनमुपस्थापितम् । इदानीं वृत्तीनां निरोधविषये विचार्यते –

वृत्तीनां निरोधो नाम बन्धनं न सामान्यकार्यम् । कदाचित् मनोनिग्रहापेक्षया वायुनिरोधनं सरलमस्ति । सन्दर्भेऽस्मिन् अर्जुनो वदति श्रीकृष्णं प्रति –

'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।।' ६/३४

श्रीकृष्णो जगाद–'असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।।' ६/३५
'असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ।।' ६/३६

तथैवाचार्यपतञ्जलिरप्याह –'अभ्यासवैराग्याभ्यां तन्निरोधः ।। १/१२

तन्निरोधः = चित्तवृत्तीनां निरोधः अभ्यासवैराग्याभ्यां जायते । चित्तवृत्तीनां सर्वथा निरोधाय अभ्यासवैराग्येऽपेक्षते उपायरूपे । चित्तवृत्तीनां प्रवाहः परम्परागतसंस्कारबलेन सांसारिकभोगान् प्रत्यागच्छति । तत्प्रवाहरोधनस्योपायः वैराग्यं कल्याणमार्गे प्रवृत्त्युपायः अभ्यासश्च विद्यते । चित्तस्य स्थैर्याय यः प्रयत्नः क्रियते सः अभ्यासनाम्ना जेगीयते । तद्यथा – 'तत्र स्थितौ यत्नोऽभ्यासः ।। १/१३, मनसः एकस्मिन् ध्येयपदार्थे स्थिरतायै यो यत्नः सोऽभ्यासो निगद्यते । अभ्यासस्य विभिन्नरूपाणि सन्ति; तद्यथा –

- एकतत्त्वाभ्यासः– चित्तस्य स्थैर्ये एकतत्त्वाभ्यासस्य विधानं कृतमादौ योगसूत्रकारेण 'तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः' १/३२ इति रीत्या । तत्प्रतिषेधार्थम् = चित्तविक्षेपसमनार्थम् एकतत्त्वाभ्यासः कर्त्तव्यः । एकस्मिन् पदार्थे चित्तस्य स्थैर्याय कृतयत्नेन एकग्रतोत्पद्यते । तयैकाग्रतया विघ्नानां नाशः । सुखिमनुष्येषु मित्रतायाः भावनया, दुःखिमनुष्येषु दयाभावनया, पुण्यात्मसु प्रसन्नतायाः भावनया, पापिजनेषूपेक्षाभावनया च चित्तस्य रागद्वेषघृणेर्ष्याक्रोधादिविकाराः विनाशं प्राप्य चित्तं निर्मलं भवति । अतः साधकोऽभ्यासं कुर्यात् । तद्यथा– 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ।।' १/३३ इति ।

- प्राणायामः–'प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ।।' १/३४ इति सूत्रेण चित्तशुद्धये प्राणायामस्य

विधानं करोति । प्रच्छर्दनम् = छर्दिः निस्सारणं विधारणम् = प्राणवायोरवरोधनमुदरे प्राणस्य कर्त्तव्यः । एताभ्यामप्यु-पायाभ्यां चित्तं निर्मलं भवति । पुनः पुनः अभ्यासेन साधको दिव्यविषयान् साक्षात्करोति । तद्दिव्यविषयाणाम-नुभवकर्त्री या वृत्तिः सा विषयवती वृत्तिर्निगद्यते । अनया वृत्त्या साधकस्य विश्वासः उत्साहश्च योगमार्गे एधतेऽतः आत्मचिन्तनाभ्यासेऽपि मनसः स्थैर्ये हेतुर्भवत्येषा विषयवती वृत्तिः । तद्यथा – 'विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी' १/३५ इति । विशोका ज्योतिष्मती वा प्रवृत्तिः मनसः स्थैर्ये साधिका सञ्जायते । अभ्यासेन यदा साधकः शोकरहितप्रकाशयमयप्रवृत्तिमनुभवति तदा सा वृत्ति विशोका ज्योतिष्मती वा कथ्यते । एषापि साधिका भवति । विरक्तभावस्य चिन्तकं चित्तमपि स्थिरं भवति । रागद्वेषादिरहितो यः पुरुषः तं पुरुषं ध्येयरूपेण यः साधकः स्वीकरोति अर्थात् तस्य विरागभावं चिन्तयति तस्यापि चित्तं स्थिरं भवति । तद्यथा – 'वीतरागविषयं वा चित्तम् ।। १/३७ इति । स्वप्ननिद्राज्ञानालम्बनमपि चित्तं स्थिरं भवति । स्वप्ने स्वेष्टदेवादिदर्शनेन तस्य स्वरूपस्य संस्कारः चित्ते उदेति तदनुभवेन पुनः पुनः स्मरणेन चिन्तनेन मनः स्थिरं भवति । यथा घोरनिद्रायां चित्तवृत्तीनामभावज्ञानमेव तिष्ठति, न कस्यापि पदार्थस्य प्रतीतिःजायते तथैव समस्तवृत्तीः प्रबाध्य वृत्त्यभावज्ञानमवलम्ब्याभ्यासेन अनायासेन चित्तं स्थिरं स्यात् । यदा तमोगुणस्य प्रभावाधिक्यन्तदा अभ्यासो न कर्त्तव्यः । यदा चित्ते इन्द्रियेषु च सत्त्वगुणाधिक्यन्तदा साधनमिदं लाभप्रदं भवति ।

मनुष्याणां रुचिवैभिन्न्यात् सर्वसाधारणजनेभ्यो निरूपयति 'यथाभिमतध्यानाद्वा' ।। १/३९ इति ।

अर्थात् यस्य यत्किमप्यभिमतं तेन ध्यानेन चित्तं स्थिरं कुर्यात् । येन केनाप्यवलम्बनेन चित्तं स्थिरं कुर्यात् साधकः इत्याशयः । चित्तस्य स्थिरीकरणाय भृशं प्रतिपादितं योगसूत्रकारेण । योगपद्धतौ आदौ चित्तप्रसादनमपेक्षितमस्ति तन्निमित्तं द्रढीयान् अभ्यासो भवेत् । क्षणिकाभ्यासेन योगलाभो न भवितुमर्हति । श्रद्धया, सावधानेन, विना व्यवधानेन, धैर्येण, विश्वासेन च दीर्घकालपर्यन्तमभ्यासः कर्त्तव्यः । एतेनाभ्यासो दृढो भवति । तद्यथा – स तु दीर्घकालनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिः ।। १/१४ अर्थात् दीर्घकालनैरन्तर्यसत्काराऽऽसे-वितोऽभ्यासो दृढभूमिः = दृढावस्थावान् भवति ।

इत्थमभ्यासेन चित्तवृत्तीनां निरोधनं क्रियते । चित्तनिरोधनाय वैराग्यमपि साधनं विद्यते । तद्विषये उच्यते– 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ।। १/१५

दृष्टश्रुतविषयेषु सर्वथा तृष्णारहितचित्तस्य या वशीकारसंज्ञा = अवस्थाविशेषः स वैराग्यमुच्यते । अन्तःकरणै-रिन्द्रियैश्चानुभूतसमस्तसांसारिकभोगानां समाहारः 'दृष्ट' इति शब्दे वर्तते । एवञ्च प्रत्यक्षरूपेण ये पदार्थाः अनुपलब्धाः येषां पदार्थानां प्रशंसा वेदशास्त्रैः भोगानुभवकर्तृभिः पुरुषैश्च कृता, अन्यैः श्रुता एतादृशभोगविषयानां समाहारः 'आनुश्रविक'-शब्दे विद्यते । एतद्वयप्रकारकभोगात् यदा चित्तं तृष्णारहितं भवति, भोगप्राप्तीच्छायाः सर्वथा नाशो भवति तदा कामनारहितचित्तस्य या वशीकारनामिका अवस्था सा 'अपरवैराग्यम्' उच्यते । प्रकृतवैराग्यं सामान्यवैराग्यं विद्यते । अस्मिन् वैराग्ये दार्ढ्यं नितरामावश्यकं भवति । अस्मिन् वैराग्ये चित्तस्य दार्ढ्येन 'परवैराग्यम्' उद्भावितं भवति चित्ते । परवैराग्यस्य लक्षणमित्थमस्ति–तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ।। १/१६ इति । यदा समाधौ परिपक्वता आगच्छति तदा

प्रकृतिपुरुषविषयकज्ञानमुद्भवति, तेन ज्ञानेन सत्त्वरजनतमोगुणेषु तत्कार्येषु च न कापि तृष्णा तिष्ठति साधकेषु । अवस्थायामस्यां साधकः सर्वथा आप्तकामो निष्कामो भवति, एतादृशी या दशा रागरहिता सा 'परवैराग्यम्' उच्यते । तथाहि भगवद्गीतायामुच्यते–

'यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ।।६/४

अनेन प्रकारेण साधकः परवैराग्यपर्यन्तं ज्ञानमवाप्य समाधिलाभं प्राप्नोति । सर्वसाधारणजनेभ्यः योगस्याष्टाङ्गमार्गोपदेशो विद्यते । यतो हि येषां साधकानां शीघ्रं चित्तं स्थिरं भवति तेभ्यः क्रमेणाष्टाङ्गसाधनमत्यावश्यकं नास्ति । यमनियमादीनां मुख्यं लक्ष्यं चित्तस्य स्थैर्यं विद्यते । येषां जन्मजातयोगिनां चित्तं स्थिरमस्ति ते ततोऽग्रे यत्नं कुर्वन्ति । नाना विक्षेपाः विघ्नाः वा चित्तमुद्वेजयन्ति विक्षिपन्ति च । तद्यथा –

'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ।।' १/३० इति ।

व्याधिः, स्त्यानम्, संशयः, प्रमादः आलस्यम्, अविरतिः भ्रान्तिदर्शनम्, अलब्धभूमिकत्वम्, अनवस्थितत्वम् इति नव चित्तविक्षेपाः अन्तरायाः = विघ्नाः सन्ति । योगसाधनसंलग्नानां साधकानां चित्ते विक्षेपमुत्पाद्य तान् साधनात् विचलितं कर्त्तारः नव योगमार्गविघ्नाः सन्ति ।

- शरीरेन्द्रियसमुदायचित्तेषु कस्यापि रोगस्योत्पत्तिर्व्याधिरुच्यते ।
- अकर्मण्यताभावोऽर्थात् साधनेषु प्रवृत्त्यभावः 'स्त्यानं' विद्यते ।
- स्वशक्तौ योगफले सन्देहो वा 'संशयः' अस्ति ।
- योगसाधनानुष्ठानोपेक्षा 'प्रमादः' भवति ।
- तमोगुणाधिक्येन चित्ते शरीरे च गुरुत्वं तस्मात् साधने प्रवृत्त्यभावः 'आलस्यम्' उच्यते ।
- विषयैः सहेन्द्रियसंयोगात् आसक्तेः कारणात् चित्ते यो वैराग्याभावः सः 'अविरतिः' इति नाम्ना कथ्यते ।
- केनापि कारणेन योगसाधनेषु विपरीतज्ञानमर्थात् साधनमिदं न समीचीनमिति मिथ्याज्ञानं 'भ्रान्तिदर्शनं' विद्यते ।
- साधने कृतेऽपि योगस्य भूमिकानां स्थितिप्राप्त्यभावः अर्थात् साधनस्थित्यलाभः 'अलब्धभूमिकत्वम्' अस्ति । अनेन साधकस्योत्साहभङ्गो भवति ।
- योगसाधनेन कस्याञ्चिदपि योगभूमौ स्थिते चित्तेऽपि तस्य गमनं चाञ्चल्यं वा 'अनवस्थितत्वं' विद्यते ।

एते नव चित्तविक्षेपाः एव अन्तरायाः, विघ्नाः, योगस्य प्रतिपक्षिणः इत्यादिनामभिः स्मर्यन्ते । दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासाः अपि योगमार्गे विघ्नाः सन्ति । तद्यथा –

'दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ।।' १/३१ इति । चित्तविक्षेपैः सह एतेऽपि

पञ्च विघ्नाः सन्ति —

- दुःखम् – प्रधानतया त्रिविधं दुःखं भवति आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकम् इति । सर्वेषां प्रतिकूलतया वेदनीयं दुःखं भवति । कामक्रोधादिकारणात् रोगादिकारणात् इन्द्रियेषु वैकल्याद्वा इन्द्रियशरीरेषु या पीडा भवति सा 'आध्यात्मिकदुःखम्' इति नाम्नोच्यते । मनुष्यपशुपक्षिमशकयूकलिक्षादिभ्योऽन्यान्यजीवेभ्य या पीडा जायते सा 'आधिभौतिकम्' अस्ति । प्राकृतिकप्रकोपेभ्यः शैत्यौष्णवृष्टि भूकम्पतडितादिभ्यो जायमाना वेदना 'आधिदैविकं' दुःखं भवति ।
- दौर्मनस्यम् – इच्छापूर्त्यभावात् यो मानसिकक्षोभः प्रभवति सः दौर्मनस्यं कथ्यते ।
- अङ्गमेजयत्वम् – शरीराङ्गेषु कम्पनम् 'अङ्गमेजयत्वं' विद्यते ।
- श्वासः – इच्छां विना बाह्यवायोः शरीरे प्रवेशः अर्थात् बाह्यकुम्भके विघ्नः 'श्वासः' भवति ।
- प्रश्वासः – इच्छां विना आन्तरिकवायोः बहिर्गमनमर्थात् आन्तरिककुम्भके विघ्नः 'प्रश्वासः' भवति । एते पञ्च विघ्नाः विक्षिप्तचित्ते एव भवन्ति न तु समाहितचित्तेऽतः एते 'विक्षेपसहभुवः' भवन्ति ।

विभिन्नाभ्यासात् विनाशं प्राप्नुवन्ति चित्तविघ्नाः । यस्मिन् साधके चित्तविघ्नाः न्यूनाः भवन्ति तस्मिन् अभ्यासः वैराग्यञ्च शीघ्रं वर्धते तेन योगसिद्धिरपि तीव्रवेगेन भवति । तद्यथोच्यते – 'तीव्रसंवेगानामासन्नः' ।। १/२१ इति । तीव्रसंवेगानाम् = येषां योगसाधनगतिः तीव्रा तेषां निर्बीजसमाधिः आसन्नः = शीघ्रं भवति । एवञ्च साधनस्य मात्रानुगुणं तीव्रसंवेगवत्स्वपि कालभेदः सम्पद्यते । तद्यथा – 'मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ।।' १/२२ अत्रायमाशयः– मृदुमध्याधिमात्रत्वात् = साधनस्य मात्रायां भेदात् तीव्रवेगवत्स्वपि साधकेषु योगसंसिद्धौ भेदो जायते । कस्य साधकस्य साधनं कथमस्ति तत्रापि योगसिद्धिशीघ्रताविभागः आश्रितो भवति । कारणं क्रियात्मकाभ्यासवैराग्ययोः तीव्रत्वेऽपि विवेकभावयोः न्यूनाधिक्यात् समाधेः सिद्धिसमये भेदः स्वाभाविक एव । यस्मिन् साधके श्रद्धाविवेकभावाः उन्नताः तस्य साधनं मध्ये तिष्ठति । यस्मिन् साधके श्रद्धाविवेकभावाः अत्युन्नताः तस्य साधनमुत्तमं विद्यते । साधने नाम योगसाधने क्रियायाः अपेक्षया भावस्य महत्त्वमधिकमस्ति । श्रद्धावान् शीघ्रतया ज्ञानं प्राप्नोति । यथोच्यते गीतायाम् –

> श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
>
> ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।। ४/३९ इति ।

योगसाधने उभयपक्षस्यावश्यकता भवति । क्रियात्मकबाह्यस्वरूपम् आभ्यन्तरस्वरूपञ्च पक्षद्वयं दृश्यते । अभ्यास-वैराग्ययोः यत् क्रियात्मकबाह्यस्वरूपं तत् वेगनाम्ना कथ्यते 'तीव्रसंवेगानामासन्नः' ।। १/२१ इति योगसूत्रे । एवञ्चाभ्यासवैराग्ययो यद्भावात्मकाभ्यन्तरस्वरूपं तत् वेगस्य मात्रा वर्तते । लोकेऽपि अनुभूयते यत् यो जनः यस्मिन् कर्मणि श्रद्धा विश्वासं परिश्रमपूर्वकयुक्तिञ्च प्रकटयति, धैर्येण सोत्साहेनाधिकज्ञानपूर्वकं योजयति ध्यानं सः अन्यस्यापेक्षया सफलतमो भवति । समाधिसिद्धावपि तथैव कार्यं परिलक्ष्यते । एतेन ज्ञायते साधको निर्दुष्टसाधनेन योगाभ्यासं कुर्यात् साधने शैथिल्यं न भावयेत् । अभ्यासवैराग्याभ्यामतिरिच्य समाधेः सरलोपायं निगदति सूत्रकारः 'ईश्वरप्रणिधानाद्वा' ।। १/

२३ इति ।अत्रायम्भाव:– ईश्वरप्रणिधानात् ईश्वरशरणापन्नात् ईश्वरकृपया झटित्येव समाधिलाभो जायते । ईश्वरशरणागते: सञ्ज्ञा 'ईश्वरप्रणिधानम्' उच्यते । ईश्वर: सर्वसमर्थो विद्यते स: कर्त्तुमकर्त्तुमन्यथाकर्त्तुं विपरीतकर्त्तुं सर्वकर्त्तुं शक्नोति । ईश्वरो यदा प्रसन्नो भवति सर्वं दातुमर्हति भक्ताय ।श्रीमद्भगवद्गीतायां निगद्यते –

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।

स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ।। १४/२६ इति ।अर्थात् परमात्मानं य: अव्यभिचारेण भक्तियोगेन सेवते स सर्वगुणान् परित्यज्य (अतिक्रम्य) व्रह्मनिष्ठो भवति । येन भावेन ईश्वरं भजति भक्त: ईश्वरोऽपि तथैव तं भंजति ।पुन: पुन: स्मरणेन मनुष्योऽपि प्रसीदति ईश्वरस्तु सर्वज्ञो विद्यते भक्तस्य भावं जानाति ।उक्तञ्च–

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्या: पार्थ सर्वश: ।। ४/११
यो यो यां यां तनुं भक्त: श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।। ७/२१
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय: ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।। ९/२९
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्य: सम्यग्व्यवसितो हि स: ।।९/३०
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्त: प्रणश्यति ।। ९/३१
मां हि पार्थ व्यपाश्रित्य येऽपि स्यु: पापयोनय: ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।। ९/३२
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण: ।। ९/३४ इति ।

अत्रेदं महत्तत्त्वं यत् भक्तियोगे सर्वेषामधिकारो विद्यते । कलुषितभावान् परित्यज्य निर्मलभावेन कोऽपि किमपि ईश्वरं याचते तर्हि स तस्मै भक्ताय तत्पदार्थं प्रयच्छति योगो भवतु भोगो वा ।श्रीदुर्गासप्तशत्यामुच्यते – 'स्वर्गापवर्गदे देवि नारायणि नमोऽस्तुते ।' इति । भगवती पराम्बा स्वर्गदा = 'स्वर्गं ददाति इति' अपवर्गदा = 'अपवर्गं (मोक्षं कैवल्यं वा) ददाति इति' चेति विद्यते ।अत एव ईश्वरप्रणिधानेन समाधिलाभ: सुगमतया भवितुमर्हति । योगशास्त्रस्येश्वर: क्लेश–कर्म– विपाकाशयसम्बन्धरहितो विराजते । अविद्यास्मिताश- गद्वेषाभिनिवेशा: पञ्च क्लेशा: सन्ति ।पुण्य–पाप–पुण्यपापमिश्रित–पुण्यपापरहितभेदात् कर्म चतुर्विधं विद्यते । कर्मफलस्य सञ्ज्ञा विपाकोऽस्ति । कर्मसंस्कारसमुदायसञ्ज्ञा आशयोऽस्ति । समस्तजीवानां सम्बन्धोऽनादिरूपेण क्लेशकर्मविपाकाशयै: सह वर्तते ।एष: सम्बन्ध: ईश्वरे न भवत्यत:

ईश्वरो मुक्तपुरुषादपि श्रेष्ठो वर्तते । यतो हि मुक्तजीवानामपि मुक्तावस्थायाः पूर्वमेतैः क्लेशकर्मविपाकाशयैः सह सम्बन्धः भवत्येव; परन्तु ईश्वरस्य = पुरुषविशेषस्य न कदापि सम्बन्धो विद्यते । अत एवोक्तम् –

'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' ।। १/२४

अस्येश्वरस्य स्मरणेन योगसंसिद्धौ चित्तं स्थिरं भवति । योगसूत्रकारः निर्मलविवेकज्ञानप्राप्त्युपायसन्दर्भे लिलेख येनानुष्ठानेन क्रमबद्धरीत्या साधकः समाधिपर्यन्तं गच्छति । तद्यथा–

'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ।।' २/२८ इति ।

योगाङ्गानुष्ठानात् अशुद्धिक्षये ज्ञानदीप्तिः आविवेकख्यातेः = विवेकख्यातिपर्यन्तं (भवति) । अष्टाङ्गयोगसाधनेनानुष्ठानेन वा चित्तस्य मलं विनाशं प्राप्नोति । स्वच्छे चित्ते साधके = योगिनि विवेकोदयो भवति । ज्ञानप्रकाशेन तदा योगी आत्मस्वरूपं जानाति । योगाङ्गानां विषये इत्थं निरूपयति सूत्रकारः –

'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ।। २/२९ इति । तत्र अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः सन्ति । मनोवाक्कायैः जीवानामपीडनं सर्वथा परदोषदर्शनपरित्यागः अहिंसा विद्यते । इन्द्रियेण मनसा च प्रत्यक्षीकृत्य, श्रुत्वा, अनुमत्वा यथानुभवः कृतः सम्यक्तया तथैव भावप्रकटनाय प्रियं हितकरमनुद्वेगकरं यद्वचनं तत् 'सत्यं' भवति । कपटरहितः छलरहितश्च व्यवहारः सत्यव्यवहारनाम्नोच्यते । अन्यस्य स्वत्वापहरणम्, छलेन अन्यकपटोपायेन च स्वस्वत्वस्थापनं 'स्तेयः' (चौरकार्यं) विद्यते । उत्कोचादिग्रहणं सर्वकारीयकरनिगूहनञ्चापि सर्वं स्तेयभूतमेव विद्यते । एतेषां सर्वेषां सर्वथा अभावः 'अस्तेयः' अस्ति । मनोवाक्कायैः जायमानानां सर्वमैथुनानां सर्वावस्थासु परित्यागं कृत्वा सर्वप्रकारेण वीर्यरक्षणं ब्रह्मचर्यमस्ति । गरुडपुराणे जगाद –

'कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
सर्वत्र मैथुनत्यागी ब्रह्मचर्यं प्रचक्षते ।। इति । (पूर्व.आचार.२३८/६)

मनसा वाचा कर्मणा सर्वथा मैथुनत्यागी ब्रह्मचारी भवति । साधकः कामदीपनकारकपदार्थान् न सेवेत, न तथा दृश्यं पश्येत्, न कामोद्दीपकवार्तां श्रुणुयात्, न तादृशग्रन्थान् पठेत्, न तथा विचारं भावयेत्, स्त्रीसंगं विवर्जयेत्, नार्यासक्तपुरुषमपि परित्यजेत् । यतो हि एते सर्वे ब्रह्मचर्यबाधकपदार्थाः सन्ति । स्वरक्षणाय स्वार्थपूर्तये च ममत्वपूर्वकधनसञ्चयः, चलाचलसम्पत्तीनां सञ्चयः, भोगसामग्रीणां सञ्चयः 'परिग्रहः' उच्यते, एतस्याभावः 'अपरिग्रहो' भवति । यमसंयमस्य सर्वोन्नतावस्था 'महाव्रतम्' इति कथ्यते । तद्यथा – 'जातिदेशकाल- समयानवच्छिन्नाः सार्वभौमा महाव्रतम्' २/३१ इति । यमाः यदा जातिदेशकालसमयानवच्छिन्नाः भवन्ति तदा सार्वभौमत्वात् महाव्रतं भवति ।

नियमाः – 'शौचसंतोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः ।। २/३२ इति । शौचः, संतोषः तपः, स्वाध्यायः, ईश्वरशरणागतिश्चेति पञ्च नियमाः सन्ति । क्रियायोगेस्वपि 'तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगेऽप्यागच्छन्ति 'तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः २/१ इति निर्देशात् । यमनियमानां पालनेन नैकानि फलानि लभन्ते योगिनः । तद्यथा –

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ।। २/३५

- सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ।। २/३६
- अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ।। २/३७
- ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ।। २/३८
- अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः ।। २/३९
- शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ।। २/४०
- सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च २/४१ इति । आन्तरिकशौचात् अन्तःकरणशुद्धिः, मानसिकप्रसन्नता, चित्तस्य एकाग्रता, इन्द्रियाणां वशीकरणम्, आत्मसाक्षात्कारस्य योग्यता चेति साधके भवन्ति ।
- संतोषादनुत्तमसुखलाभः २/४२ ।। इति ।
- कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ।। २/४३ इति ।

  अर्थात् तपःप्रभावात् अशुद्धिक्षयात् शरीरेन्द्रियाणां सिद्धिर्जायते ।
- स्वाध्यायादिष्टदेवतासम्प्रयोगः ।। २/४४

  स्वाध्यायात् (शास्त्राभ्यासमन्त्रजपादिभ्यः) इष्टदेवसाक्षात्कारो भवति ।
- ईश्वरप्रणिधानात् समाधिसिद्धिर्भवति । तद्यथा –

  'समाधिसिद्धिरीश्वरप्रणिधानात् ।। २/४५ इति ।
- आसनम् – स्थिरसुखमासनम् ।। २/४६ इति ।

निश्चलभावेन सुखपूर्वकमुपवेशनमासनमुच्यते । आसनस्य प्रकारविषये पातञ्जलयोगसूत्रे किमपि नोक्तम् । साधकस्य योग्यतानुगुणमासनचयनं भवेत् । हठयोगग्रन्थेषु आसनानां प्रकाराः अधिकतया वर्णिताः सन्ति । वर्तमानकाले रोगनिवारणाय तेषामुपयोगः सम्यक्तया परिलक्ष्यते । हठयोगस्य मुख्यं लक्ष्यं भौतिकं प्रतिभाति; यतोहि सर्वदा शक्तिसञ्चयनाय हठयोगी प्रयतते । पातञ्जलयोगशास्त्रे मानसिकव्यापारस्य बाहुल्यं दृश्यते । पातञ्जलयोगः राजयोगनाम्ना जेगीयते । अस्य प्रभावः स्थिरो भवति । कोऽपि योगो भवतु सर्वत्र सावधानं भूत्वैव कार्यं कर्त्तव्यमन्यथा योगस्थाने रोगलाभो भवति । केचन हठयोगिनः स्वयमपि रोगग्रस्ताः भवन्ति । किञ्च द्रव्यार्जनाय चमत्कारं प्रदर्शयन्ति नेदं कार्यं योगशास्त्रसम्मतम् । अपरिग्रह इति शब्दस्य दुर्दशा दृश्यते । इदानीं योगिनः अधिकतया धनसम्पन्नाः सन्ति । लोलुपत्वमपि नृत्यत्येव । यथा अन्धजनस्य पथप्रदर्शकः अन्धो न भवितुमर्हति; तथैव स्वयं ये छद्मवेशिनो योगिनः ते कथं जनकल्याणं कुर्युः । अतः नूतनजिज्ञासुभिः विचिन्त्य योगिगुरूणां चयनं कर्त्तव्यम् । श्रीमद्भगवद्गीतायामासनविषये निगद्यते –

'योगी युञ्जीत सततमात्मानं रहसि स्थितः ।  
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ।। ६/१०  
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।  
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ।। ६/११

तत्रैकाग्रं मन: कृत्वा यतचित्तेन्द्रियक्रिय: ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ।। ६/१२
समं कायशिरोग्रीवं धारयन्नचलं स्थिर: ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।। ६/१३

इत्थमासने उपविश्य योगी योगसाधनां कुर्यात् । आसनस्य स्थिरत्वात् परमात्मनि चित्तस्थैर्याच्च सिद्धिमाप्नोति योगी । तदेवोच्यते – 'प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ।। २/४७ इति ।

आसने योगानुसारमुपविश्य सर्वविधचेष्टापरित्याग: प्रयत्नशैथिल्यं भवति । आसनसिद्धौ सत्यां द्वन्द्वानभिघातो जायते । प्राणायाम: – 'तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेद: प्राणायाम: ।। २/४९ इति । आसनसिद्धौ श्वासप्रश्वासयोश्चरोधनं प्राणायाम: कथ्यते । प्राणायाम: त्रिविध: बाह्याभ्यन्तरस्तम्भभेदात् ।

- बाह्यवृत्तिप्राणायाम: रेचको वा – प्राणवायु शरीरात् बहि: निस्सार्य सुखेनावरोधनं क्रियतेऽत्र । दीर्घकालपर्यन्तमभ्यासेन अनायासेन प्राणायामोऽयं साध्यते ।
- आभ्यन्तरवृत्तिप्राणायाम: पूरको वा – प्राणवायुं शरीरे निरोधनं सुखेन यस्मिन् प्राणायामे क्रियते स आभ्यन्तरवृत्तिप्राणायाम: उच्यते । यत: शरीरे प्राणवायु: पूर्यतेऽत: पूरकोऽयं प्राणायाम: ।
- स्तम्भवृत्तिप्राणायाम: कुम्भको वा – श्वासप्रश्वासयोर्या स्वाभाविकीगति: तस्या: गमनागमनाय प्रयत्नमकृत्वा यत्र प्राणवायु: स्वभावेन अगच्छत् तत्रैव तस्य स्तम्भनं 'स्तम्भवृत्तिप्राणायामो' विद्यते । अस्य प्राणायामस्य सञ्ज्ञा कुम्भकोऽपि वर्त्तते । सर्वविधप्राणायामे मन्त्र: अवश्यमेव स्यात् । अभ्यासबलेन सर्वेषां प्राणायामानां दीर्घसूक्ष्मौ भेदौ विद्येते । सूत्रमुखेन इत्थं भण्यते –

'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभि: परिदृष्टो दीर्घसूक्ष्म: ।। २/५० इति ।

- एक: इतोऽपि प्राणायामोऽस्ति बाह्याभ्यन्तरविषयाक्षेपी । बाह्याभ्यन्तरविषयचिन्तनत्यागात् स्वाभाविकतया या प्राणस्य गति: प्रचलति तथा तस्मिन् समये योगी इष्टचिन्तनं करोति स भवति चतुर्थ: प्राणायाम: । प्राण: बहिर्गच्छति, आभ्यन्तरे आगच्छति, चलति, न चलति वेत्यादीनां ज्ञानानां परित्यागं कृत्वा इष्टचिन्तनात् देशकालसंख्याज्ञानं विनैव प्राणस्य गति: यस्मिन् कस्मिन् देशे तिष्ठति स भवति चतुर्थ: प्राणायाम: । रेचक–पूरक–कुम्भकेभ्यो भिन्न: चतुर्थोऽयं प्राणायाम: । अनायासेन जायमानोऽयं राजयोगस्य प्राणायामोऽस्ति । अस्मिन् प्राणायामे मनस: चाञ्चल्याभावात् विना यत्नेन प्राणस्य गति: रुणद्धि । अन्यस्मिन् प्राणायामे तथा स्थितिर्नास्ति । प्राणायामस्य नामस्मरणक्रमे चतुर्थस्य नाम बाह्याभ्यन्तरविषयाक्षेपी परिलक्ष्यते । तद्यथा –

'बाह्याभ्यन्तरविषयाक्षेपी चतुर्थ: ।। २/५१ इति ।

प्राणायामस्य सिद्धात् प्रकाशावरणं = ज्ञानावरणं क्षीयते । यथा – 'तत: क्षीयते प्रकाशावरणम् ।। २/५२ इति । प्राणायामबलेन योगी कस्मिंश्चिदपि विषये मन: स्थिरं कर्त्तुं शक्नोति ।

प्रत्याहार: – 'स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहार: ।। २/५४ इति ।
अर्थात् प्राणायामाभ्यासात् मन: इन्द्रियाणाञ्च शुद्धीकरणं भवति । तत: योगी सर्वथा इन्द्रियाणां बाह्यवृत्ती:

आकुञ्च्य मनसि नियोजयति ।एषः अभ्यासः प्रत्याहारः उच्यते ।प्रत्याहारस्याभ्यासेन शनैः शनैः इन्द्रियजयत्वं प्राप्नोति योगी । यमादारभ्य प्रत्याहारपर्यन्तं योगस्य बहिरङ्गसाधनानि सन्ति । धारणा - ध्यान - सामाधयश्चान्तरङ्गसाधनानि सन्ति । तद्यथा –

- धारणा – 'देशबन्धश्चित्तस्य धारणा ।। ३/१' अर्थात् नाभिचक्रे, हृदये नासिकाग्रे शरीरस्याभ्यन्तरे कुत्रापि अथवा देवप्रतिमासु बाह्यपदार्थेषु वा चित्तवृत्तिनियोजनं 'धारणा' विद्यते ।
- ध्यानस्वरूपमित्थमस्ति – 'तत्र प्रत्ययैकतानता ध्यानम् ।। ३/२' यस्मिन् ध्येयवस्तुनि चित्तं योज्येत, तस्मिन्नेव चित्तैकाग्रयम् अर्थात् ध्येयमात्रस्यैव वृत्तिप्रवाहः तन्मध्येऽन्यवृत्त्यप्रवाहो 'ध्यानं' विद्यते ।
- समाधिः– 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।। ३.३ इति । यदा ध्येयमात्रस्यैव प्रतीतिर्भवति तथा च चित्तस्य निजस्वरूपं शून्यमिव भवति तदा तदेव ध्यानं समाधित्वेनोच्यते । आदौ समाधेः भेदद्वयं सम्प्रज्ञातः, असम्प्रज्ञातश्च । सम्प्रज्ञातः चतुर्विधः वितर्कविचारानन्दास्मिताभेदात् । तद्यथा – 'वितर्कविचारानन्दास्मिता- नुगमात्सम्प्रज्ञातः' ।।१/१७ इति ।असम्प्रज्ञातः - 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ।। १/१८ इति । सर्ववृत्तीनां निरोधात् असम्प्रज्ञातसमाधिर्भवति । सम्प्रज्ञातसमाधिविषये सूत्रकारस्य मतमित्थमस्ति – क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः । १/४१ इति । तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः । १/४२, स्मृतिपरिशुद्धौ स्वरूपशून्यमेवार्थमात्रनिर्भासा निर्वर्तका ।। १/४३, एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ।। १/४४, ता एव सबीजः समाधिः ।। १/४६, असम्प्रज्ञातसमाधिविषये निगदति एवं प्रकारेण – 'तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ।। १/५१'

अत्रायमाशयः - ऋतम्भराप्रज्ञया अन्यवृत्तीनां संस्काराणां वाभावो जायते, ततः ऋतम्भराप्रज्ञयोत्पन्नसंस्कारेष्वपि अनासक्तित्वात् तत्संस्कारनिरोधः । एतेन सर्वेषां संस्काराणां स्वयमेव निरोधो भवति । अतः संस्कारबीजस्य सर्वथाभावात् कैवल्यस्वरूपा निर्बीजसमाधिर्भवति । कैवल्यं सर्ववैराग्याज्जायते । तद्यथा –

'तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ।।' ३/५० इति ।

अर्थात् अष्टसिद्ध्यादिभ्योऽपि वैराग्यात् दोषबीजक्षयात् कैवल्यावस्थां प्राप्नोति योगी । कैवल्यात् पूर्वं सर्वे वैभवाः विघ्नस्वरूपाः आगच्छन्ति पुरतः । योगी सर्वान् अतिक्रम्य परमपदं कैवल्यं निर्बीजसमाधिं वा लभते । अत एवोच्यते –

'सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ।।'' ३/५५ इति । अर्थात् बुद्धिपुरुषयोः समानभावेन शुद्धौ सत्यां कैवल्यप्राप्तिर्भवतीति सिद्धान्तः ।

इदमत्रावधेयम्—

वयमिदानीं यान्त्रिकयुगे निवसामः । सर्वाणि कार्याणि प्रायः यन्त्रमाध्यमेन सम्पाद्यन्ते । यन्त्राण्यस्माकं पार्श्वे सम्बन्धिवद्विराजन्ते । सर्वत्र सर्वस्मिन् सम्बन्धे परिवर्तनं परिलक्ष्यते । जनाः सर्वदा नूतनत्वं वाञ्छन्ति । भौतिकवातावरणस्य प्रभावः सर्वस्मिन् क्षेत्रे प्रतीयते । सम्पूर्णसंसारस्य देशाः भौतिकोन्नतये यतमाना

विराजन्ते । जनाः स्वभौतिकोन्नतये किमपि कर्तुमिच्छन्ति । ते चिन्तयन्ति यत् सांसारिकसुखभोगादय एवास्मभ्यमुत्तमाः । भवतु नाम । परन्त्वत्रापरपक्षं दृष्ट्वा सहृदयाः क्रन्दमानाः सन्ति, चेखिद्यन्ते च तेषां मनांसि । इदानीं विकासेन सह विनाशं प्रति वयमुन्मुखाः स्मः । जनानां सामाजिकसम्बन्धः शैथिल्यमगात् । सोदरभ्रातृष्वपि युद्धं प्रचलति । सर्वत्र सर्वदा चौरकार्यं, तस्करी, उत्कोचकर्षणं, ताडनं, मारणं, भावाकर्षणं कृत्वाऽपकार्यसम्पादनम्, जनानां स्वेच्छाचारिता, धूम्रपानं, मदिरापानं, दुष्टसिद्धान्तस्य प्रचारः, प्रसारः, शारीरिकदौर्बल्यं, मानसिकदौर्बल्यम्, आर्थिकसमस्या, प्राकृतिकापत्, अग्निकाण्डं, युवकानां युवतीनाञ्चात्महननं, जनेषु नैराश्यं, पापाचरणं, प्रतिभाक्षरणं, शिक्षां प्रत्यरुचिप्रकटनम्, असंवैधानिककार्यसम्पादनं, महिलाभिस्सह दुर्व्यवहारः, परेषामवमाननं, भ्रामकसिद्धान्तपालनं, तस्य परिपोषणं, पतिपत्न्योः सम्बन्धोच्छेदः, पितृघातः, गुरुशिष्यसम्बन्धोच्छेदः, चारित्रिकपतनं, नैतिकभ्रष्टता, विवेकाभावः, स्वार्थस्य प्राबल्यं, कुत्सितमानसिकता, वर्गसंघर्षः, पारिस्थितिकासंतुलनं, प्रदूषणम्, अशिक्षा, आहारभ्रष्टता, स्वास्थ्यहानिः, भौतिकविज्ञानस्य दुरुपयोग इत्याद्यः समस्याः मुखं व्यादाय समुपस्थितः सन्त्यस्माकं पुरतः । सर्वासां समस्यानां मुख्यं कारणं विद्यते 'विवेकज्ञानाभावः' । चित्तविक्षेपात् जनाः उद्विग्नाः भवन्ति तस्मात् कारणात् अपकार्यं कुर्वन्ति । निर्मले स्वच्छे वा चित्ते सर्वं समीचीनं भविष्यति । सर्वाः वृत्तयः अर्थात् क्रियाः चित्तात् उद्भाविताः भवन्ति पुनः तत्रैव विलयं यान्ति । चित्तस्य स्वच्छीकरणाय योगः परमावश्यकः । योगात् यथा चित्तस्य शुद्धीकरणं भवति तथा अन्यं साधनं न दृश्यते । योगस्य प्रतिज्ञा एव वर्त्तते 'चित्तवृत्तिनिरोध' इति । सामान्यव्यवहारादारभ्य कैवल्यपर्यन्तं योगस्यावश्यकताऽनुभूयते । योगस्याष्टौ अङ्गानि सन्ति यत्र प्रथमः यमः वर्त्तते । यदि यमस्यैव संयमः क्रियेत तर्हि विभिन्नसमस्यानां समाधानं भवेत् । यथा – अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः पञ्च यमाः सन्ति । तत्रादौ अहिंसा विद्यते । मनोवाक्कायैः यथान्ये न दुःखं प्राप्नुयुः तथाचरणं कर्त्तव्यम् । यदि इत्थं कोऽपि चिन्तयेत् अहं न कदापि हिंसां करिष्यामि तर्हि तस्य चित्ते शनैः शनैः अन्येषां प्रति या वैरभावना सा अपगमिष्यति । एवं प्रकारेण यदि सर्वे चिन्तयेयुस्तर्हि स्वत एव सर्वेषां जीवनयापनं सुखेन भवेत् । तथैव सत्यादीनां परिपालनेन ज्ञातव्यम् । अत्राभ्यासस्यावश्यकता वरीवर्त्ति । केवलं वाक्येन योगाभ्यासो न भवत्यपितु साधना तस्यानिवार्या विद्यते । यथा रोगी औषधालयेऽपि उपविश्यौषधिग्रहणं विना न नैरुज्यं प्राप्नुयात् तथैव योगस्य ज्ञानेनैव रोगस्य समाधानं नापितु योगाभ्यासेन भविष्यति । आधुनिककाले विभिन्नयोगासनानां परिष्कारं कृत्वा रोगेषु लाभं प्राप्नुवन्ति जनाः । तथैव प्राणायामस्यापि परिष्कृतरूपं दृश्यते इदानीम् । विशेषतया यमनियमानां कांश्चन अंशान् आसनस्य प्रभेदान् प्राणायामस्य प्रभेदान् ध्यानञ्च संगृह्य योगस्य स्वरूपं विद्यते सम्प्रति । परन्तु क्रमबद्धरीत्यैव योगाङ्गानां पालनेन सम्पूर्णलाभो भवेत् आंशिकप्रयासेनांशिकलाभ एव । योगस्य क्षेत्रं विस्तृतं जातम् । इदानीं मुख्यरूपेण चिकित्साविज्ञानस्य सहायको विद्यते योगः । योगेन न केवलं रोगनिवारणमपितु विभिन्नाभ्यासेन शरीरे रोगप्रतिरोधकक्षमता वर्धते । अस्माकं शरीरं स्वचालितयन्त्रवत् कार्यं करोति । यथा यन्त्रस्य शुद्धिर्भवति तथैव शरीरस्यापि शुद्धिरावश्यकी भवति । योगस्य बहिरङ्गसाधनेन बहिरङ्गशुद्धिः अन्तरङ्गसाधनेनाभ्यन्तरशुद्धिः भवति ।

योगेन यदि भौतिकोन्नतिं कोऽपि वाञ्छति सोऽपि सिद्धयति । योगशास्त्रेऽपि अष्टसिद्धिविषये उक्तमेव । तद्यथा – 'ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ।। ३/४५ इति । यदा योगी भूतविजयी भवति तदा अणिमा-लघिमा-महिमा-गरिमा-प्राप्ति-प्राकाम्य-वशित्वेशित्वनामिकाः सिद्धयः आत्मानं प्रकटयन्ति ।

- शारीरिकसम्पत् प्राप्नोति योगी । यथा – 'रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ।। ३/४६ इति । अर्थात् अत्यन्तसुन्दराकृतिः, समस्ताङ्गेषु दीप्तिः, बलस्य बाहुल्यं तथा समस्तशरीरस्य वज्रस्य इव कठोरत्वमिति कायसम्पदो विद्यते । एवं प्रकारेण विभिन्नसंयमस्यापि विभिन्नलाभाः सन्ति । तद्यथा तत्रादौ संयमस्य लक्षणमित्थं ज्ञायते – 'त्रयमेकत्र संयमः' ।। ३/४ इति । अर्थात् एकस्मिन् ध्येयविषये धारणा-ध्यान-समाधीनां समाहारः 'संयमः' कथ्यते ।

'परिणामत्रयसंयमादतीतानागतज्ञानम्' ।। ३/१६ इति । अर्थात् धर्म-लक्षणावस्थारूपपरिणामेषु संयमात् अतीतानागतज्ञानं भवति योगिनि । 'शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ।।' ३/१७ इति ।

'प्रत्ययस्य परचित्तज्ञानम्' ।। ३/१९ इति । कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्धानम् ।। ३/२१ इति । ''मैत्र्यादिषु बलानि' ।। ३/२३, 'बलेषु हस्तिबलादीनि' ।। ३/२४, 'प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्' ।। ३/२५ इति । 'भुवनज्ञानं सूर्ये संयमात्' ।। ३/२६ इति । अर्थात् सूर्ये संयमात् चतुर्दशभुवनानां ज्ञानं भवति । योगी एतस्मात् संयमात् एकत्रैवोपविश्य सम्पूर्णभुवनज्ञानं प्राप्तुं शक्नोति । 'चन्द्रे ताराव्यूहज्ञानम्' ।। ३/२७, 'ध्रुवे तद्गतिज्ञानम्' ।। ३/२८ इति । 'मूर्धज्योतिषि सिद्धदर्शनम्' ।। ३/३२ इति । अर्थात् मूर्धज्योतिषि संयमात् सिद्धदर्शनं भवति योगिनः । 'हृदये चित्तसंवित्' ।। ३/३४ इति । हृदये संयमात् चित्तस्वरूपस्य ज्ञानं भवति । 'ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते' । ३/३६ इति । तत्संयमात् प्रतिभश्रावणवेदनादर्शास्वादवार्तास्वरूपाः सिद्धयः भवन्ति ।

सारांशत्वेन वक्तुं शक्यते यत् सामान्यजनाः यत्र पर्यन्तं कल्पयितुमपि न शक्नुवन्ति तत्र पर्यन्तं योगिनः ज्ञातुं शक्नुवन्ति । भौतिकसुखादारभ्य कैवल्यपर्यन्तं योगिनो लभन्ते ।

आचार्यपतञ्जलिः 'अथ योगानुशासनम्' इति सूत्रेण ग्रन्थप्रतिज्ञां विधाय 'पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति ।।' ४/३४ इति सूत्रेण ग्रन्थं समापयति । सर्वे विषयाः अष्टाङ्गयोगस्य पार्श्वे भ्रमन्ति । चित्तवृत्तिनिरोधादेवाग्रे प्रवृत्तिः योगे दृश्यते । मुख्यं प्रयोजनं कैवल्यलाभ एव प्रतिभाति योगस्य । अन्यानि प्रयोजनानि ततो गौणान्येव सन्ति । कारणं कैवल्यलाभादेव संसारात् निर्मुक्तिः योगशास्त्रमतेन । सर्वदर्शनसंग्रहकारेणाप्यभाणि –''तत्र शास्त्रे व्युत्पाद्यमानतया योगः ससाधनः सफलो विषयः । तद्व्युत्पादनमवान्तरफलम् । व्युत्पादितस्य योगस्य कैवल्यं परमप्रयोजनम् । शास्त्रयोगयोः प्रतिपाद्यप्रतिपाद-कभावलक्षणः सम्बन्धः । योगस्य कैवल्यस्य च साध्यसाधनभावलक्षणः सम्बन्धः'' इति । कैवल्यमतिरिच्या-धुनिकयुगे एतान्यपि योगस्य प्रयोजनानि

विद्यन्ते –

रोगनिवारणाय योगः । यथा रोगो न शरीरे प्रविशेत् तथा शारीरिकरोगप्रतिरोधकक्षमता वर्धनं योगमाध्यमेन ।

मानसिकविक्षेपानां दूरीकरणं कृत्वा चित्तप्रसादनम् । युक्ताहारविहारस्य शिक्षाप्रदानम् ।

स्वस्थशरीरे स्वस्थमस्तिष्कस्य निर्माणम् । उत्तमाचरणे बलप्रदानम् ।

सर्वविधप्रकारेण अर्थात् शारीरिक-मानसिक-भौतिकार्थिकाध्यात्मिकराजनैतिकरूपेण बलिष्ठनागरिकनिर्माणम् । विवेकोद्भावनम् । एवम्प्रकारेण योगस्य नैकानि प्रयोजनानि आगच्छन्ति पुरतः । सम्यक्तया योगाभ्यासेन जीवनं नूनं सफलं भविष्यतीति दिक् ।।

**अनुशीलिताः ग्रन्थाः —**


१. पातञ्जलयोगदर्शनम्

२. पातञ्जलभाष्यम्

३. ब्रह्मसूत्रम्

४. जैमिनिसूत्रम्

५. मनुस्मृतिः

६. अभिज्ञानशाकुन्तलम्

७. वाक्यपदीयम्

८. सिद्धान्तलघुमञ्जूषा

९. न्यायसूत्रम् (सम्पादकः डॉ.महेशझा)

१०. तत्त्वचिन्तामणिः

११. तर्कभाषा

१२. तर्कसंग्रहः

१३. कारिकावली

१४. सांख्यकारिका

१५. श्रीमद्भगवद्गीता

१६. श्रीरामचरितमानस

१७. श्रीदुर्गासप्तशती



सर्वदर्शनविभागः

राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालयः)

श्रीसदाशिवपरिसरः, पुरी

# न्यायनये आत्मा

**अनिता मिश्र:**
शोधच्छात्रा

द्वादशविधेषु प्रमेयेषु प्रथम: प्रमेय: आत्मा भवति । तच्च आत्मत्वजातिमत्त्वम् । तच्चात्मत्वं समवायसम्बन्धावच्छिन्नसुखत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकतया सिद्धयति । तच्चात्मत्वं जीवात्मनि परमात्मनि च विद्यते । अत: जीवात्मपरमात्मनो: भवति आत्मत्वाभिधेयत्वम् ।

अत्रेयमाशङ्का जायते यत् आत्मत्वजातिस्तु सुखादिसमवायिकारणतावच्छेदकतया सिद्धा, सा च सुखदु:खाश्रये जीवात्मन्येव तिष्ठति न तु परमात्मनि ईश्वरे सुखादेरभावात्, कथं परमात्मन: महेश्वरस्य आत्मपदवाच्यत्वम् एवञ्च परमात्मन: आत्मानन्तर्गततया दशमद्रव्यत्वापत्ति: ।

अथेत्थं विचिन्त्यते - नहि 'आत्मत्वजातिमत्वम्' आत्मनो लक्षणम, अपितु 'समवायसम्बन्धेन ज्ञानाश्रयत्वम्' आत्मन: लक्षणम् । एवञ्च जीवात्मनि जन्यज्ञानस्य परमात्मनि च नित्यज्ञानस्य विद्यमानतया भवति परमात्मनोऽपि आत्मपदवाच्यत्वमात्मान्तर्गतत्वञ्च । अत: नहि परमेश्वरस्य दशमद्रव्यत्वापत्ति: ।

एवमपि 'समवायेन ज्ञानाश्रयत्वम्' आत्मत्वमितिलक्षणे कृते मुक्तात्मनि अस्य लक्षणस्याव्याप्ति: । मुक्ते आत्मनि समस्तज्ञानानां ध्वंसस्य सत्वात् तर्हि स: ज्ञानाधिकरणम् । अथ च मुक्तात्मन: ज्ञानरहितत्वाज्जडापत्तिश्च स्यात् । अत्रेदं वदाम: – नहि 'ज्ञानाधिकरणत्वम्' आत्मनो लक्षणम्, अपितु ज्ञानात्यन्ताभावानधिकरणत्वमेव आत्मनो लक्षणम् । इत्थं प्रकारेण लक्षणे कृते सति जीवात्मनि संस्कारकालावच्छेदेन अर्थात् बद्धावस्थायां ज्ञानस्य विद्यमानतया तत्र त्रैकालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य ज्ञानात्यन्ताभावस्य विरहात् नहि मुक्तावस्थायामपि ज्ञानत्वसत्वेऽपि तत्र ज्ञानात्यन्ताभावसम्भव: । किञ्च, अत्यन्ताभावस्य प्रतियोगिना, प्रतियोगिप्रागभावेन, प्रतियोगिध्वंसेन च विरोधात् मुक्तावस्थायां जीवात्मनि ज्ञानात्मकप्रतियोगिध्वंसस्यैव विद्यमानतया तहि तत्र ज्ञानात्यन्ताभाव: आत्मनि विद्यते, किन्तु ज्ञानात्यन्ताभाव: आत्मातिरिक्तपदार्थेषु विद्यते । तदनधिकरणताया: समस्ते आत्मनि परमात्मनि च सत्वात् न काप्यनुपपत्ति: ।

श्रीमद्भगवद्गीतायामपि भगवता श्रीकृष्णेन

**विविक्तसेवी लघ्वाशी यतवाक्कायमानस: ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रित:[१] ।।**

विविक्तपदेन समाधिस्थानमुपदिष्टम् जगदुरुश्रीमच्छङ्कराचार्यैरपि 'विविक्तसेवी' इति शब्दस्य अरण्यनदीपुलिनगिरिगुहादीन् विविक्तान देशान् सेवितुं शीलमस्येति व्याख्यानादिदं स्पष्टतां याति ।

न च योगाभ्यासस्यायमेव देशनियम इति भाव्यम्, योगाभ्यासस्य दिक्कालदेशनियमाभावात् न स्थाननियमश्चित्तप्रसादात्[२]'' इति महर्षिकपिलसूत्रप्रामाण्याच्च । किन्तु यत्मालदेशेषु चित्रैकाग्रता तत्रैव

योगाभ्यास: कर्त्तव्य इत्यभिप्राय: ''यत्रैकग्रता तत्राविशेषात्[३] इति ।

पूर्वजन्मकृतयोगाभ्यासजनितो धर्मो जन्मान्तरेऽपि अनुवर्त्तते । प्रचयकाष्ठागते तत्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्वज्ञानमुत्पद्यत इति[४] न्यायभाष्यकारवचनात् तत्वज्ञानोपन्तिरवश्यम्भाविनीति । तत्वसाक्षात्मारजन्यसंस्काररूपतत्त्वज्ञान विवृद्धया अनादिकालीनमिथ्याज्ञानजन्यसंस्कारो नाशमधिगच्छति ।

**अर्थविशेषप्राबल्यादनिच्छदबुद्धिदर्शनात् ।**

**एतादृशप्रसङ्गोऽपि[५] विमुक्तस्य कथं नहि ।।**

जीवानां ज्ञानोत्पत्तौ शरीरस्य कर्मवशात्समुत्पन्नस्यावश्यकतया निमित्तत्वेन तद्ग्रहणात् तस्मिन् ज्ञानोत्पत्तिश्चश्यम्भाविनी । शरीरादिनिमित्तसत्वे वाह्यविषयप्राबल्यादनिच्छतोऽपि ज्ञानोत्पाद: सम्भवति शरीरावच्छेदेन आत्मनो ज्ञानोत्पत्ते: ।

असौ आत्मा मनोरुपेन्द्रियेण मनस्संयोगरूपसन्निकर्षद्वारा प्रत्यक्षविषय: । यद्यपि अहं जाने, अहं सुखी इत्यादिप्रतीतिबलात् आत्मा सर्वेषामपि जनानां मानसप्रत्यक्षविषय:, तथापि ये चार्वाकादय: आत्मन: शरीरातिरिक्तत्वं नाभ्युपगच्छन्ति तेषां मते अहं जाने, अहं सुखी, अहं दु:खी इति प्रतीतिविषयता शरीरे एव विद्यते न तु शरीरतिरिक्ते आत्मनि, तेषां कृते एतादृशप्रतीत्याश्रयत्वेन आत्मन: शरीरादिभिन्नत्वं प्रतिपादयितुं न शक्यते, इत्याकारकजिज्ञासायाम् ? आत्मन: सिद्धि: अनुमानेनेपि कर्तुं शक्यते । तथाहि इन्द्रियाणि सकर्तृकाणि करणत्वात् वात्स्यादिवत्, यथा जडीभूतावास्यादि कर्तारमन्तरेण छेदनादिक्रियां कर्तुमक्षम: तथैव इन्द्रियाण्यपि अचेतनाति कारणानि, तान्यपि कर्तारमन्तरेण किमपि सुखदु:खादिकमनुभवितुमक्षमा: भवन्ति । अत: यत् प्रेरितानि इन्द्रियाणि स्वस्वकार्य सम्पादयन्ति स इन्द्रियाणां शरीरस्य च प्रवर्तक: कश्चन 'आत्मा' अभ्युपेय:, एवञ्च इच्छाद्वेषप्रयत्लनसुखदु:ख-ज्ञानादिरूपलिङ्गेन आत्मा गृह्यते । यतोहि लिङ्गभूता इच्छा शरीरेषु नोत्पद्यते । यदि शरीरे इच्छाया उत्पति अभ्युपेयेत तदा मृतशरीरेऽपि इच्छाद्युत्पत्ति: स्यात् । परन्तु मृतशरीरे नेच्छा उपलभ्यते । अत: शरीरातिरिक्त: आत्मा इच्छाद्याश्रयत्वेन स्वीकरणीय: ।

**सन्दर्भग्रन्था:–**

१. श्रीमद्भगवद्गीता, ६/४

२. सां.सू. ६/३२

३. वे.सू, ४/२/२७

४. या. सू. भा, ४/२/४२

५. न्या.सू, ४/२/४३

नव्यन्यायविभाग:

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# नैयायिकाभिमतचतुर्विधं प्रमाणम्

पूर्णचन्द्रदाशः
शोधच्छात्रः

"प्रमाकरणं प्रमाणम्" – इति प्रमाणलक्षणानुसारं प्रमायाः–यथार्थानुभवस्य साधकतमं करणात्मकं वस्तु प्रमाणपदवाच्यम् । करणमेव क्रियोत्पादनद्वारा फलोत्पादकमितिकरणज्ञानार्जनमावश्यकम् । करणस्य च क्रियाभेदभिन्नमूर्त्तिकतया क्रियाऽववोधेऽधिगत एव करणज्ञानं भावितुमर्हति । अत एव महर्षिभिः पूर्वं प्रमायाः स्वरूपनिर्धारणं कृतमनन्तरञ्च तत्करणस्य प्रमाणस्य निरूपणं विहितम् ।

पदार्थज्ञानस्य परमप्रयोजनं मोक्ष इत्यामनन्ति नैयायिकाः । अत एवाह महर्षिः गौतमः न्यायसूत्रे "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम" इति[१] । अस्यायमर्थः प्रमाणादिषोडशपदार्थानां यथार्थज्ञानेन मोक्षावाप्तिः इति, तच्च तत्त्वज्ञानं प्रमाणमन्तरा न सम्भवति । यतो हि सर्वेषां व्यवस्थितिः प्रमाणाधीना अत एवोच्यते "मानाधीना मेयसिद्धिर्मेयसिद्धिश्च लक्षणादिति । तच्च प्रमाणं कतिविधमिति जिज्ञासायामाह परमकारुणिको गौतमः- "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति[२] एभिः प्रमाणैः जायमानं तत्वज्ञानं प्रत्यक्षानुमित्युपमिति-शाब्दबोधभेदात् चतुर्विधं सैव तन्त्रेषु प्रमेत्युज्यते । सा च प्रमा तद्वति तत्प्रकारकत्वरूपा । एवं च पदार्थानां प्रत्यक्षानुमित्युपमितिशाब्दबोधात्मकयथार्थज्ञानेन एकोनविशतिदुख-ध्वंसात्मकमोक्षो जायते । तत्र सर्वेषु प्रमाणेषु ज्येष्ठत्वात् प्रत्यक्षप्रमाणस्य लक्षणमाह महर्षिगौतमः - "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति"[३] । अर्थाद् इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति तस्य प्रमाणस्य लक्षणम् । अत्र यद्यपि मनोरूपेन्द्रियसन्निकर्षजन्यं सर्वमेव ज्ञानं, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम्, तेन अनुमित्यादौ नातिव्याप्तिः ।

यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययोऽर्थसम्प्रत्ययच्च व्यवहारः तत्रेन्द्रियार्थसन्निकर्षादुत्पन्न-मर्थज्ञानं रूपमिति वा रस इत्येवं वा भवति, रूपमिति जानीते रस इति जानीते, नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्येत अत आह अव्यपदेश्यमिति ।

ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टा स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते तत्रेन्द्रियसन्निकर्षा-दुदकमिति ज्ञानं जायते तत्रातिव्याप्तिनिरसनाय अव्यभिचारीति, दूराच्चक्षुषा ह्यमर्थ पश्यन् नावधारयति धूम इति वा रेणु इति इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षं प्रसज्येत-इत्यत आह- व्यवसायात्मकमिति । अथवा ईश्वरप्रत्यक्षेऽव्याप्तिवारणाय ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षप्रमाणस्य लक्षणं सिद्धम् । तर्करसिकानां प्रियतमं द्वितीयमनुमानप्रमाणम्, तस्यापि लक्षणं ब्रवीति अक्षपादः- "तत्पूर्वकमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टञ्च" इति । अर्थात् प्रत्यक्षपूर्वकं हि अनुमानम् एतस्य लक्षणम् । अनुमितिकरणत्वमनुमानत्वं, तत्र अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शः व्यापारः, फलमनुमितिरिति बोधयन्नाह मुक्तावलीकारः अनुमानखण्डे –

**व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्।**
**अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि[४] ।। इति ।**

तच्चानुमानं त्रिविधं पूर्ववत् शेषवत् - सामान्यतोदृष्टभेदेन । तत्र प्रथमस्य दृष्टान्तः यत्र कारणेन कार्यमनुमीयते तत् यथा - मेघोन्नत्या भविष्यति वृष्टिरिति । द्वितीयस्योदाहरणं प्रतिपादयति भाष्यकारो यत्र कार्येण कारणमनुमीयते तच्छेषवदनुमानम् - यथा पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति । तृतीयं सामान्यतोदृष्टानुमानम्, अन्यत्र दृष्टस्य अन्यत्र दर्शनम् । यथा भगवत आदित्यस्य दर्शनं प्रातः प्राचि, सायङ्काले च प्रतीच्यां दृष्ट्वाऽनुमीयते - सूर्यस्य व्रज्या अप्रत्यक्षत्वेऽपि अस्ति अप्रत्यक्षादित्यस्य व्रज्येति । अथवा पूर्ववदिति यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्या-प्रत्यक्षस्यानुभानम्, यथा-'धूमेनाग्निरिति' । शेषवन्नाम परिशेषः । स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः । समवायेभ्यो विभक्तस्य शब्दस्य, तस्मिन्-द्रव्य-गुण-कर्म-संशये, न द्रव्यमेकद्रव्यत्वात्, न कर्म शब्दान्तरहेतुत्वात् – यस्तु शिष्यते सोऽयमिति गुणत्वप्रतिपत्तिः । सामान्यतो दृष्टं नाम – यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते । यथेच्छादिभिरात्मा । इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मेति ।[५] अनेन प्रकारेण द्विविधरीत्या सूत्रकारोपदर्शितानुमानानां स्वरूपनिर्धारणं कृतम् । नव्यन्यायसरण्यात्तु त्रिविधत्वमनुमानस्य प्रपञ्चयद्भिराचार्यैरन्यरूपेणान्याभिधानेनैवेषामनुमानानां स्वरूपं निर्धारितम् । तद्यथा –

''त्रैविध्यमनुमानस्य केवलान्वयिभेदतः''

अनुमानं हि त्रिविधम् – केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षः - केवलान्वयी - यथा - ''घटोऽभिधेयः प्रमेयत्वादित्यादौ, तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् । असत्सपक्षः- केवलव्यतिरेकी - यथा - ''पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादि''त्यादौ, तत्र हि - जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभावात् । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा – वह्निमान् धूमादित्यादौ, तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ।[६] एतत्पन्थानं महामनीषी म.म. गङ्गेशः प्रदर्शयामास । तत्त्वाचिन्तामणिमाधारीकृत्यैवोत्तरवर्तिभिराचार्यैरनेनप्रकारेण अनुमानभेदनिर्वचनं विहितम् । गङ्गेशेन चिन्तामणावुक्तम्–

''तच्चानुमानं त्रिविधम् – केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षं केवलान्वयीत्यादि ।''[७] दीधितिकारेण असद्विपक्षेत्यादिमूलं व्याकुर्वता यदुक्तन्तदिदम् –

''असद्विपक्षम्'' – अत्यन्ताभावाप्रतियोगिसाध्यकं केवलान्वयि । एवमगृहीतान्वय - व्यतिरेकिसाध्यकं - केवलव्यतिरेकि । गृहीतान्वयव्यतिरेकिसाध्यकमन्वयव्यतिरेकि ।'' इति[८]
तर्कसंग्रहकारेण तु अन्यरीत्यैवानुमानभेदो व्याकृतः । तद्यथा –

''अनुमानं द्विविधं-स्वार्थं परार्थञ्च । स्वार्थं स्वानुमितिहेतुः । तथाहि - स्वयमेव भूयोदर्शनेन यत्र यत्र धूमस्तत्रतत्राग्निरिति महानसादौ व्याप्तिं ग्रहीत्वा पर्वतसमीपं गतस्तद्गतेचाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति । तदनन्तरं ''वह्निव्याप्यधूमवानयं पर्वत'' इति ज्ञानमुत्पद्यते ।

अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात्पर्वतो वह्निमानिति ज्ञानमुत्पद्यते । तदेत्स्वार्थनुमानम् । यतु स्वयं धूमादग्निमनुमाय परं प्रतिबोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम् । यथा - पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो - धूमवान् स स वह्निमान्, यथा महानसम्, तथा चायम्, तस्मात्तथेति । अनेन प्रतिपादितात्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ।''[९]

अत्रान्नम्भट्टेन स्वार्थपरार्थभेदेनानुमानस्य यत्स्वरूपं प्रतिपादितं तत्पूर्वनिर्दिष्टभेदेषु सर्वेषां भवति । पूर्वनिदिष्टक्रमानुसारं तेन लिङ्गस्य त्रैविध्यं व्युत्पादितम् । तन्मते लिङ्गपरामर्शस्यैवानुमितिकरणत्वादनुमानत्वमस्ति । तद्यथा –

''स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्मालिङ्गपरामर्शोऽनुमानम् । लिङ्गं त्रिविधम्-अन्वयव्यतिरेकि - केवलान्वयि - केवलव्यतिरेकि चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि, यथा – वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद इति व्यतिरेकव्याप्तिः । अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा घटोऽभिधेयः प्रमेत्वात्पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च । व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि, यथा पृथिवीतरेभ्यो भिधते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद्गन्धवत्, यथा जलम्, न चेयं तथा, तस्मान्न तथेति । अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ।''[१०]

इत्येवं रूपेण अन्वय-व्यतिरेकव्याप्तिभेदेन लिङ्गपरामर्शात्मकस्यानुमानस्य त्रैविध्यं व्युत्पादितं तर्कसंग्रहकारेण । उदयनाचार्यास्तावदन्वयव्याप्तिमात्राभ्युपगमवादिनः सहचारभेदेन अनुमानस्य भेदमङ्गीकुर्वन्ति । तन्मतानुसारं अन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वम् । व्यतिरेकसहचारमात्रगृहीतव्याप्तिकत्वं - केवलव्यतिरेकित्वम् । अन्वयव्यतिरेकोभयसहचारगृहीतव्याप्तिकत्वमन्वयव्यतिरेकित्वमिति । केवलान्वयिप्रकरणे आचार्यमतं दीधितिकारेणोपस्थापितम् । चिन्तामणिकारमतानुसारन्तु द्विविधोऽपि व्याप्तिग्रहोऽनुभवसिद्ध इति व्याप्तिग्रहभेदेनैवानुमानभेदो तैः समुपस्थापितः । व्यतिरेकव्याप्तिस्वरूपन्तावत् – ''साध्याभावव्यापकीभूताभावप्रतियोगित्वम्'' - इति । विश्वनाथेनाप्युक्तम्–

**''अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ।**
**साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत्''** ।। इति ।

अनुमान प्रमाणस्यैवा दृष्टवस्तुसत्तासाधकत्वादस्य विशद्विवेचनं नव्यन्यायवाङ्मये समुपलभ्यते । ''प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका'' इति वाचस्पतिमिश्रवचनेनेदं स्फुटी भवति यदनुमानस्यैव सर्वतोऽधिकं ग्राह्यत्वं विद्यते तर्कशास्त्रे ।

तृतीयमुपमानप्रमाणम् — उपमानप्रमाणेन उपमितिः जन्यते, तस्य लक्षणमुपमितिकरणत्वं उपमानत्वमिति । तत्र कार्यकरणव्यापारान् प्रदर्शयन्ति विश्वनाथतर्कपञ्चाननभट्टाचार्याः भाषापरिच्छेदे उपमानखण्डे –

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।**

**सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ।**

**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।**

**गवयादिपदानां तु शक्तिधीरुपमाफलम्**[११] ।। इति

अत्रोपमितौ-आरण्यकाद् श्रुतगोसदृशो गवय इति वाक्याद् जायमानं गवयदर्शनानन्तरं गोसादृश्यस्य यत्दर्शनं जातं तदुपमितिकरणम् । अतिदेशवाक्यार्थस्मरणं व्यापारः, गवयो गवयपदवाच्य इति ज्ञानमुपमितिरिति ।

चतुर्थं प्रमाणं शब्दः — इह खलु संसारे सर्वे प्राणिनः स्वकीयमनोभावं ध्वनिशब्दप्रयोगाभ्यां परं प्रतिबोधयितुं व्यवहरन्ति । तत्रापि मानवाः शब्दप्रयोगमन्तरा व्यवहर्तु न पारयन्ति, अतः सर्वेऽपि परीक्षकाः बुभुत्सितं श्रोतृपुरुषानवगतार्थं बोधयितुमिच्छन्तो वाक्यमुच्चारयन्ति । प्रतिपत्तुमिष्टं च प्रमेयं पृच्छन्ति बोद्धारः । एवं लोकयात्रां निर्वहति शब्दः । अत एव सर्वार्थप्रकाशकं शब्दज्योतिः इत्याह दण्डी-तद्यथा–

**इदमन्धं तमः कृत्स्नं जायते भुवनत्रयम् ।**

**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते**[१२] ।।'' इति ।

भर्तृहरिणापि वाक्यपदीये उक्तम् –

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**[१३] इति ।

बोद्धारश्च भूयोभूयः समधिगतं पदार्थमात्रं न बुभुत्सन्ते, न वा प्रतिपादयन्ति प्रेक्षावन्तः । तथा सति अबुभुत्सितावबोधने अनवधेयवचनतयात्ते न लौकिकाः, नापि परीक्षका इति उन्मत्तवत् उपेक्षणीया भवेयुः । अतोऽनधिगतं पदार्थं वाक्यार्थमेव च बुभुत्सन्ते बोद्धारः, बोधयितुमुच्चारयन्ति पदानि वाक्यानि च बोधयितार इति सर्वसम्प्रतिपन्नम् । तत्र वाक्यात्मकशब्दजन्यो बोधः शाब्दबोध, वाक्यार्थबोध, अन्वयबोधः, परस्परसंसर्गावगाहिबोध इति च आख्यायते । एतस्य शाब्दबोधस्य कारणं किमिति विषये आह मुक्तावलीकारः –

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।**

**शाब्दबोधो फलं तत्र शक्तिधीः सहकारिणी**[१४] ।। इति ।

अर्थात् शाब्दबोधात्मककार्ये पदज्ञानं करणं, पदज्ञानजन्यपदार्थोपस्थितिः व्यापारः, शक्तिधीश्च सहकारिणी भवतीति । शब्दप्रमाणस्य पृथक्प्रामाण्यं बौद्ध-वैशेषिकौन स्वीकुर्वतः, तन्मतानुसारन्तस्या-न्तर्भावोऽनुमान एवास्ति । तद्यथा –

**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ।**

**अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।।**

**''तन्न सम्यग्विना व्याप्तिज्ञानं शाब्दादिबोधतः''** ।[१५]

शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वादित्यादिना गौतमेनापि वैशेषिकमतमुपस्थापितम् । शब्दस्य अनुमानत्वन्तु – ''घटादिपदं तत्तदर्थे शक्तं, शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यतत्तदर्थविषयकबोधजनकत्वात्,

यथा तादृशान्यपदम् । व्याप्तिग्रहस्तु पदपदान्तरैर्ज्ञेयमिति तत्सिद्धान्तः । सो न युक्तिसङ्गतः । तादृशव्याप्तिप्रतिसन्धानं विनाऽपि शाब्दबोधस्यानुभवसिद्धत्वात् शब्दो प्रमाणान्तरमेव । आचार्यजगदीश तर्कालङ्कारेणशाब्दीप्रमाया पृथगस्तित्वं विज्ञापयता ''शब्द शक्तिप्रकाशिकायामुक्तम् –

**''साकांक्षशब्दैर्यो बोधः तदर्थान्वयगोचरः ।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा ।।''**[१६]

शब्दप्रमाणस्य स्वरूपन्तु यथा विश्वनाथपञ्चाननेन प्रपञ्चितम् –

**''पदज्ञानन्तु करणं द्वारन्तत्र पदार्थधीः ।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ।।''**[१७]

इत्थं शब्दमपिप्रमाणान्तरमेव । तत्र लौकिकः शब्दः आप्तोक्तत्वेन प्रामाण्यं भजते । यथोक्तमन्नम्भट्टेन– ''आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता'' । संकेतो लक्षणा चार्थे पदवृ[१८]त्तिः तत्र संकेतः शक्तिः । सा चेश्वरेच्छा रूपा इच्छारूपा वा । वैदिको शब्दस्तावदीश्वरोक्तत्वात्सर्वमेव प्रमाणम् । ''मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्''-[१९]इति ।

मानमेयोदयपद्यानुबद्धं प्रमाणपदार्थसंख्याविषयकं वैमत्यं यथा –

**''चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ ।**
**भासर्वज्ञश्च सांख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति ।**
**प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञा ।**
**षट्कं पौराणिकास्त्वष्टकमभिदधिरे संभवैतिह्य योगात् ।।**[२०]

उपर्युक्तनिरूपणानुसारं ज्ञायते यत् – एकत्वसंख्यातोऽष्टसंख्यां यावत्प्रमाणसंख्या तत्तद्दार्शनिक-सिद्धान्ताभिमतम् । एतेषां स्पष्टतयाऽवधारणं इत्थं करणीयम् –

''चार्वाकदर्शने'' – ''प्रत्यक्षप्रमाणमात्रम्'' – ''एकम्''; ''बौद्ध-वैशेषिकदर्शनयोः'' – ''प्रत्यक्षानुमाने'' – ''द्वे''; ''सांख्य-योगदर्शनयोः'' – ''प्रत्यक्षानुमानशब्दाः– ''त्रीणि'', ''न्यायदर्शने'' – ''प्रत्यक्षानुमानोपमानशब्दाः– ''चत्वारि'', ''मीमांसादर्शने''– ''प्रभाकरमते''– प्रत्यक्षानुमानोपमान-शब्दार्थापत्तिरित्येतानि – ''पञ्च'', ''कुमारिलमते''– ''अनुपलब्धिसहितानिपूर्वोक्तानि ''षट्'', ''वेदान्तदर्शने'' – कुमारिलमताभिमतानि – ''षडेव'', ''पुराणदर्शने'' – ऐतिह्य-सम्भवसहितानि पूर्वोक्तानि – अष्टसंख्याकानीति ।

इत्थं प्रमाणसंख्याविषये प्राच्यदर्शनेषु मतैक्यन्नास्ति । प्रमाण-दर्शनमिति संज्ञया प्रसिद्धे न्यायदर्शने तावच्चत्वार्येव प्रमाणान्यङ्गीकृतानि । न्यायदर्शनकारेण महर्षिगौतमेन प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रेण स्वसिद्धान्तः संस्थापितः । तथाचात्र चतुर्णामेव प्रामाण्यं नान्येषामिति न्यूनाधिकसंख्या-व्यवच्छेदोऽवधारणीयः । यतो हि आचार्यैरुपमानप्रमाणस्य प्रमाणान्तरत्वं व्यवस्थाप्य न्यूनता परिहृता, अर्थापत्यनुपलब्धिसम्भवैतिह्यानां प्रामाण्यं विखण्ड्य चतुष्वेव तेषामन्तर्भावः प्रदर्शितः इति शम् ।।

सन्दर्भग्रन्था:–


१. न्यायसूत्रम् १.१.१

२. न्यायसूत्रम् १.१.३

३. न्यायसूत्रम् १.१.४

४. न्यायसिद्धान्तमुक्तावली-कारिका ६६

५. न्यायभाष्यम् पृ.७५-७६

६. न्यायसिद्धान्तमुक्तावली-पृ.१७७;

७. केवलान्वयिप्रकरणम् - पृ.१

८. केवलान्वयिप्रकरणम् - पृ.५.१३;

९. तर्कसंग्रह: –

१०. तर्कसंग्रह:–

११. कारिकावली - १४३;

१२. न्यायसिद्धान्तमुक्तावली-कारिका ७९/८०

१३. काव्यादर्श: १.४

१४. वाक्यपदीयम् १.१.३

१५. न्यायसिद्धान्तमुक्तावली-कारिका ८०

१६. कारिकावली-का.-१४०-४१;

१७. शब्दशक्तिप्रकाशिका–का.-३;

१८. कारिकावली–का.९१;

१९. शक्तिवाद:–पृ.१

२०. न्यायदर्शनसूत्रम्–१/१/६९

२१. मानमेयोदय: – पृ.१०;



नव्यन्यायविभाग:

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# वेदे आत्मतत्त्वविमर्श:

**दीप्तिप्रभा साहु**
शोधच्छात्रा

''सर्वज्ञानमयो हि स:'' अर्थात् प्रमाणनिरूपणाय सर्वातिशय: सारसंभूतो ग्रन्थो वेद: एव य: खलु सांप्रतिविज्ञानजगति रहस्योन्मोचनाय दिग्दर्शनं प्रदत्तवान् । अतो मन्ये वेद एव आत्मन: संस्कारस्य मूल: इति । यथा –

**अवतां त्वा धावापृथिवी अव त्वं द्यावा पृथिवी ।।**[१]

मन्त्रेऽस्मिन् ईश्वर: प्रार्थ्यते, पृथिवीं त्वं रक्ष । पृथिवी अस्मान् रक्षतु । आत्मसंस्कारित: सज्जन: एव एतादृशीं भावनां कर्तुं समर्थ: ।

**असूर्या नाम ते लोका अन्धेन तमसावृता: ।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना: ।।**[२]

अस्यार्थ: ते अननुशासितजना: शरीरेन्द्रियलालसया असूर्या इति नामान्विता: भवन्ति । ते पुन: गूढतमसया आवृता: तिष्ठन्ति । आत्मचेतनाया: निर्देशं घ्नन्तो जना: शरीरनाशात् परं प्रेतरूपं धृत्वा अन्धकारमयं लोकं प्रविशन्तीत्यर्थ: ।

**यस्तु सर्वाणि भूतन्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ।।**[३]

यदा मानव: सर्वं जडचेतनातत्त्वम् आत्मनि अनुभवति तथा सर्वेषु भूतेषु आत्मतत्त्वं समाहितमिति स्वीकरोति । तदा स: कदापि भ्रमग्रस्तो न जायत इति ।

**यस्मिन्त्सर्वाणि भूतान्यात्मत्मैवाभूद्विजानत: ।**
**तत्र को मोह: क: शोक एकत्वमनुपश्यत: ।।**[४]

मनुष्यो यस्यां परिस्थितौ एकस्य मर्म जानाति यत् आत्मतत्त्वमेव सर्वभूतरूपेण प्रकटनम् अस्ति, तदानीं कथं शोकं स्यात् ? अर्थात् अस्यां परिस्थितौ स मोहात् शोकाच्च दूरं गच्छति । पुन: कथ्यते –

**विद्यां च अविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्यं तीर्त्वा विद्ययामृतमश्नुते ।।**[५]

अत्र विद्या अर्थात् आत्मज्ञानं अविद्या नाम पदार्थज्ञानं उभे तत्त्वे ज्ञातव्ये । कारणं अविद्यया (पदार्थविज्ञानेन अस्तित्वं संरक्ष्य) मृत्युम् अतिक्रम्य विद्यया (आत्मज्ञानेन) एव आत्मतत्त्वस्य लाभ जांयते इति तस्याशय: ।

आयुर्यज्ञेन कल्पन्तां प्राणो यज्ञेन कल्पन्तां चक्षुर्यज्ञेन कल्पन्तां श्रोत्रं यज्ञेन कल्पन्ताम् ।
वाग्यज्ञेन कल्पन्तां मनो यज्ञेन कल्पन्तामात्मा यज्ञेन कल्पन्तां पृष्ठं यज्ञेन कल्पन्ताम् ।
ब्रह्म यज्ञेन कल्पन्तां यज्ञो यज्ञेन कल्पन्तां ज्योतिर्यज्ञेन कल्पन्तां स्वर्यज्ञेन कल्पन्ताम् ।।[६]

अर्थात् यज्ञफलेनास्माकम् आयुषो विवृद्धिर्भवतु, प्राण: तेजयुक्त: स्यात्, आत्मा तु परमान्दपूर्णो भवतु इत्यादिभावेन बहवो विषया: आत्मसंस्काराय एव अस्मिन् मन्त्रे प्रतिपादिता: । स्वयम् आत्मा स्वं न जानाति यद्यप्यनन्वितं प्रतीयते तथाप्यज्ञानवशादेतत्संभवति ।सति ज्ञाने च तदपगच्छतीति तदभिप्रायकोऽयं मन्त्र: –

**न विजानामि यदि वेदमस्मि नित्य: सन्नद्धो मनसा चरामि ।**

**यदा भागान् प्रथमजा ऋतस्यादिद्वाचौ अश्नुये भागमस्या: ।।**[७]

यद्यप्यहं कृश्नप्रपंचरूपस्तथापि प्रपञ्चस्यापारमार्थिकं नामरुपांशं परित्यज्य सर्वत्रानुस्यूतोऽस्मीति स्वयं सचिदानन्दस्वरूप: स्वमात्मनं विविक्तरूपेण जानाति । पुनश्च उपनिषदि दृश्यते –

**द्वे ब्रह्मणि वेदितव्ये शब्दब्रह्म परं च यत् ।**

**शब्दब्रह्मणि निष्णात: परं ब्रह्माधिगच्छति ।।**

अर्थात् एष निष्कर्षो यत् आगमद्वारा शब्दशास्त्रद्वारैव च आत्मसंस्कारो भवितुमर्हतीति नास्ति काचित् विप्रतिप्रति: । एवं प्रकारेण वेदेषु आत्मसंस्कारविषये मनीषिभि: बहुधा प्रतिपादिता मे मति: इति शम् ।

**पादटिप्पणी –**

१. यजुर्वेदसंहिता, २/९

२. यजुर्वेदसंहिता ४०/३

३. तत्रैव ४०/६

४. यजुर्वेद:, ४०/७

५. ईशावास्योपनिषद, मन्त्र.११

६. यजुर्वेद: १९/४२

७. अस्यवामीप्रसूक्तमन्त्र – ३७ (ऋग्वेद:)

वेदविभाग:
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# क्षणिकविज्ञानस्य आत्मतत्त्वपूर्वपक्षखण्डनम्

**पदारविन्दपण्डा**
शोधच्छात्रः

क्षणिकविज्ञानमेव आत्मा इति क्षणिकवादिनां बौद्धानां मतं वर्त्तते । तस्य स्वतः प्रकाशरूपत्वात् चेतनत्वम् । ज्ञानसुखादिकन्तु तस्य आकारविशेषो भवति । आकारविशेषत्वञ्च वस्तुतः तत् अभिन्नत्वे सत्यपि तद् भिन्नत्वेन भासमानत्वम् । एवञ्च ज्ञानसुखादिना आत्मा अभिन्नत्वेन कार्यकारणभावप्रसक्त्या नैव दोषः । अत्र प्रश्न उदेति यत् ज्ञानसुखादिना आत्मा अभिन्नत्वे अहं सुखी इत्यादि सर्वानुभवसिद्धः सुखाद्यधिकरणत्वादि तस्य प्रत्ययोपि न स्यात् । अभेद च आधाराधेयभाव सम्भवात् । तत्र उच्यते आधाराधेयभावयोः ऐक्येऽपि आधारतावच्छेदकआधेयतावच्छेदकयोः भेदस्य आधाराधेयभावनियामकत्वात्। तादात्म्यस्य तादात्म्यत्वेन अधिकरणस्यानियामकत्वेन स्वरूपसम्बन्धत्वेपि अधिकरण नियामकत्वात् । एवं अपि ज्ञानादिना आत्मनः आकारविशेषत्वात् । बौद्धमते आत्मनो विकारत्वप्राप्य अनित्यत्वात् व्याप्तिः । तत् उच्यते तस्यापि भावत्वादेव क्षणिकत्वम् भवति । यतोहि "यत् सत् तत् क्षणिकम्" इति व्याप्तेः । यतोहि भावमात्रस्य क्षणिकत्वात् क्षणिकविज्ञानस्य च भावपदार्थत्वात् ।

क्षणिकत्वं च द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । एवं सति सुषुप्तौ आत्मा न सिद्धयति । यतोहि पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशः । बौद्धानां मते कार्यकारणयोः एकाधिकरणवृत्तित्वानियमात् । कार्यपूर्ववृत्तित्वमेव कारणत्वम् । पूर्वपूर्वविज्ञानस्य अव्यवहितोत्तरविज्ञानं प्रति कारणत्वात् । प्रवृत्तिविज्ञानस्यालयविज्ञानं प्रति कारणत्वात् । गाढसुषुप्त्या आरम्भकाले प्रवृत्तिविज्ञानेनैव आलयविज्ञानस्य उत्पन्नत्वात् अहं इत्यालयविज्ञानाभावात् निराबाधो संचरति । अतः सुषुप्त्यवस्थायामपि आत्मा अस्त्यैव ।

अत्र पुनः प्रश्न उदेति यत् विज्ञानस्य क्षणिकत्वे तदाश्रितानां संस्काराणामपि क्षणिकत्वात् कालान्तरे स्मरणानुपपत्तिः स्यात् । तत्र उच्यते मृगस्य मदः कस्तूरि तस्य वासना सुगन्धत्वेन वासितं वसनम् येन परेण सह यागं लभते । तस्मिन्नपि पटे कस्तूरिकासुगन्धो संचरति एव । तत् प्रकारकसंयुक्ते पटान्तरे पटान्तरश्च संयुक्ते अन्यपटे संचरति । तद्वत् पूर्वपूर्वविज्ञान जनित न संस्काराः उत्तरोत्तरविज्ञाने संक्रमिता भवन्ति अतः कालान्तरेऽपि स्मरणं निराबाधितमेव इति बौद्धाः वदन्ति ।

तन् मतं न समीचीनमिति नैयायिकाः वदन्ति । विज्ञानस्य जगत्विषयकं यत् किञ्चिद् विषयकम् वा। तत्र उच्यते प्रथमे यज्ज्ञानं तत् सविषयकम् इति व्याप्तिः क्षणिकविज्ञानस्य जगद्विषयकवस्तुत्वे जीवात्मानां सर्वज्ञत्वापत्तिः स्यात् । द्वितीयपक्षेपि न समीचीनम् । क्षणिकविज्ञानस्य यत् किञ्चिद् विषयकत्वे एकस्मिन्नैव ज्ञाने विशेषणविशेष्यादिनां बहुनां स्फुरणात् घटविषयकमेवेदम् विज्ञानं न तु पटविषयकम् इति एकपक्षसाधक युक्त्यात्मकविनिगमनायाः अभावात् । यत् किञ्चित् एकविषयकमेव विज्ञानम् इति अनिर्णयापत्तेः तेन सर्वदा भ्रान्तप्रसङ्गस्यात् ।

ननु यद्विषयकं यस्मिन्काले यत्रात्मनि अनुभव सिद्धम् । तत्र तद्विषयकत्वमेव ज्ञातव्यम् । तथा च नोक्त अनिर्णयापत्तिः । तत्र उच्यते दूषणान्तरम् सुषुप्ताऽपि विषयावभात् प्रसङ्गः । यतोहि ज्ञानस्य सविषयकत्वात् । यज्ज्ञानं तत् सविषयकम् भवति । विषयं विना विषयिस्वरूपापत्तेः । तथा च बौद्धानां मते सुषुप्तावस्थायां ज्ञाने विषयाभाष आपद्येत । तत्र बौद्धाः वदन्ति सुषुप्तिकाले निराकाराः विषयाकाररहिताः निर्विषय क्षणिकज्ञानाधारा जायते । अतो न विषयाभास प्रसङ्गः । तत्र नैयायिकाः वदन्ति निर्विषयकं चित् सत्ता विज्ञानत्वे अप्रामाणिकत्वात् । ज्ञानस्य विषयताव्याप्यत्वात् अन्यथा प्रमाणाभावेऽपि निर्विषयस्य ज्ञानत्वस्वीकारे घटादीनामपि निर्विषयाणां ज्ञानत्वोपपत्ति स्यात् । यथा घटज्ञानस्यः विषयः घटः ज्ञानन्तु विषयी भवति । तद्वत् घटस्य न किञ्चिद्विषयः येन घटो विषयी भवेत् । यतो घटः निर्विषयो भवति । ज्ञानेच्छाकृतिभावनाद्वेषाः पञ्चपदार्थाः सविषयाः भवन्ति । अन्यपदार्थाः निर्विषया भवन्ति ।

तत्र उच्यते बौद्धमते सर्वप्रमेयविज्ञानमपि भवति । तथा च घटादीनां प्रमेयविज्ञानमेव । अतः ज्ञानत्वोपपत्तिः इष्टैव । यतोहि विज्ञानव्यतिरिक्तवस्तु नः अभावात् । तत्र समाधत्ते नैयायिकाः विज्ञानभिन्नत्वे विषयिक्रियमाणस्य घटपटादिविषयजालस्य उपलपितुम् अशक्यत्वात् । तत्र उच्यते बौद्धाः घटादिपदार्थः क्षणिकविज्ञानस्य आधारविशेषः स्वरूपविशेष एव अस्ति । अतिरिच्यते तर्हि विज्ञानव्यतिरिक्तघटस्वीकारेण विज्ञानव्यतिक्त घट इति यत् न्यायमतम् तत्र तव मतं समायातम् । तेन सर्वज्ञानमिति बौद्धाः वदन्ति तत्र तेषां प्रतिज्ञाहानिः भवति ।

नातिरिच्यते चेत् तर्हि समूहालम्बने मिलति । नानाविशेष्यतानिरूपितनानाप्रकारताशालिज्ञानं समूहालम्बनज्ञानं भवति । यथा "इमे नील-पीते" अस्मिन् ज्ञाने विज्ञानविषयाणां भेदाभावात् नीलकारभेदमतो विज्ञानौ अभिन्ना टीकाकरेपि नीलाकारात् अभिन्न एव प्रतीयते । तेन नीलेपि पीत प्रत्ययो यथार्थम् आपाद्येत । अर्थात् इमे नील पीते इत्यर्थस्थाने इमे नीले अर्थात् इमे नील पीते इत्याकारक प्रत्याहार वर्त्तते । तत्र कारणं विज्ञानस्वरूपस्य अभिन्नत्वात् एकत्वात् इत्यर्थः । यतोहि तद्भिन्नभिन्नस्य तदभिन्नेतिनियमात् । अत्र प्रश्न उदेति नीलाकारः पीताकारात् अभिन्न एव । परन्तु नीले अतद्व्यावृत्तिरूपः नीलत्वधर्मः पीते च व्यावृत्तरूप पीतधर्मः स्वीक्रियते । भिन्नाभ्यां नीलत्वपीतत्वभिन्नमेव नीलपीतयोः भेदप्रतीति स्यात् । अतः व्यावृतिरूपः नीलादौ नीत्वादिरूपनीलत्वविज्ञानस्य धर्मः पीतनीलाभेदेन बोधयन्ति इति बौद्धाः वदन्ति ।

तत्र नैयायिकाः वदन्ति यत् एकस्मिन् विज्ञानात्मकधर्मिणि असमाधिकरणानां परस्परभावव्यक्तानां नीलत्वादिधर्माणां आवृत्तेः । एवं च नीलत्वपीतत्वाधिकरूपेऽपि विभिन्ने पदार्थे अङ्गीकार्ये न्यायमतम् सिद्धमेव । तथा च नीलत्वादिधर्मवन्त पदार्थविज्ञानभिन्नज्ञानं च सविषयम् । तत् च सुषुप्तौ न सम्भवति । अतः आत्मा विज्ञानातिरिक्तः सिद्ध्यति इति नैयायिकानां आशयः ।

ननु इमे नीलपीते इति समूहालम्बनात्मकनीलत्वं पीतत्वं अङ्गीक्रियते किन्तु चित्रत्वं तथा च

नोक्तदोषः। तत्र उच्यते यत् मृगामददृष्टान्तेन पूर्वपूर्वविज्ञानसंस्काराणां उत्तरोत्तरविज्ञाने संक्रमणयुक्तं तदपि नैव भवितुमर्हति वासनासंक्रमे आपत्तिः वर्त्तते । यत् मातृपुत्रयोरपि वासनाप्रसङ्गसंक्रमः स्यात् । अत्र अपि पदेन पूर्वोत्तरालयविज्ञानं भवति । पूर्वालयविज्ञानस्य उत्तरालयविज्ञानहेतुत्वात् पूर्वालयविज्ञाननिष्ठसंस्कारः उत्तरालयविज्ञाने यथा संक्रमते तथा मातृरूपविज्ञानस्यापि पुत्रविज्ञानहेतुत्वात् मातृनिष्ठसंस्कारस्य संक्रमापत्तिःस्यात् । तत्र उच्यते इष्टापत्तिः पुत्रस्य मात्रानुभूतपदार्थस्मरणापत्तेः । ननु उपादानेन यत् अनुभूतं उपादानेन कार्येण स्मर्यते । मातृपुत्रयोरनुपादानोपादेयःवर्त्तते । यतोहि पुत्रं प्रति माता निमित्तकारणं भवति । तथा च मातृदृष्टं पुत्रः स्मर्तुमर्हति इत्याशयः बौद्धाः शङ्कते । नचो उपादानोपादेयभावनियामकः । यतोहि बौद्धमते उपादानकारणं न समवायिकारणत्वम् । विभिन्नकालीनक्षणिकविज्ञानव्यक्तौ समवायिकारणा-सम्भवात् । परन्तु असहंकृतं कारणं उपादानम् । उत्तरव्याप्तौ पूर्वव्यक्तिमात्रस्य तर्हि बौद्धाः कारणत्वाङ्गीकारात् । माता च पुत्रं प्रति न असहकृतं कारणम् । शुक्रादेः अपि पुत्रकारणत्वात् ।

**सन्दर्भग्रन्थाः–**


१. मुक्तावली

२. दिनकरी

३. बौद्धदर्शनम्

४. रामरूद्री



नव्यन्यायविभागः

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# दीधितिकारमते हेत्वाभासस्वरूपम्

**प्रतापकुमारमिश्रः**
शोधच्छात्रः

रघुनाथशिरोमणिना दीधितिकारेण हेत्वाभासनिरूपणप्रयोजननिर्देशपूर्वकं दोषलक्षणाभिधानं हेतुप्रदर्शनपूर्वकं च प्रथमलक्षणघटकप्रतिपदव्यावृत्तिं प्रतिपाद्य प्रथमलक्षणपरित्यागकारणमभिहितम्। अवयवान्ताभिन्नग्रन्था- भिन्नव्याप्तिपक्षधर्मताविशिष्टप्रतिपत्यनुकूलव्यापारोत्तरकालीनव्याप्तिपक्ष धर्मताविशिष्टहेतुनिरूपित- प्रसङ्गसङ्गतिज्ञानजन्यजिज्ञासाधीनतत्वनिर्णयादिरूपसपरिकरहेतुप्रयोज्य एककार्यकारित्वज्ञानजन्यजिज्ञासा- धीनहेत्वाभासविषयकप्रतिपत्त्यनुकूलव्यापारविशेष्यक स्वोत्तरकालीनकृतिजन्यत्वप्रकारताशालिशाब्द- बोधानुकूलकृतिमान् मणिकारः इति शाब्दबोधो भवति इत्युक्तं दीधितिकारेण[१]।

अनन्तरं यथाश्रुतमिदं हेतुदोषाणां लक्षणं[२] दोषवत्वञ्चदुष्टम्[३]। तथा च दुष्टहेतुनिरूपणस्य प्रकृतत्वेपि दोषलक्षणकृते तद्वत्त्वरूपदुष्टहेतुलक्षणस्य स्फुटत्वात् दोषलक्षणाभिधानस्य तात्पर्ये न कोपि दोषः।

हेत्वाभासप्रथमलक्षणे अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमित्यत्र अनुमितिपद- मनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरम्[४]। यदि प्रकृतपक्षसाध्यहेतुकानुमिति- मात्रबोधकमनुमितिपदमुच्यते तदा तत्प्रतिबन्धकव्यभिचारविरोधादावव्याप्तिः। यदि तत्कारणज्ञानपरत्वे बाधसत्प्रतिपक्षादावव्याप्तिः अतः दीधितिकारेण लाक्षणिकमेव अनुमितिपदमुक्तम्। तथा च अनुमितिमादाय बाधादौ अनुमितिकारणपरामर्शमादाय व्यभिचारादौ लक्षणसङ्गतिः।

अनन्तरं साध्यव्याप्यहेतुमान्पक्षः साध्यवान् इत्याकारकारानुमितिपरं वा इत्युक्तम्[५]। प्रथमकल्पं परित्यज्य द्वितीयकल्पानुसरणे किं बीजं तत्र उच्यते यादृशस्थलविशेषे ह्रदो वह्निमान् इत्यनुमितिः घटवत् भूतलमितिज्ञानसहकारेणैव संजाता तादृशस्थलीयदोषाणां संग्रहाभावात्। तत्र समुहालम्बनज्ञाने विशेष्यताद्वयशून्यत्वाभावात् तादृशज्ञानस्य धारणासम्भवात् अतः दीधितिकारेण द्वितीयकल्पानुसरणं कृतम्।

अनुमितिपदस्य समूहालम्बनानुमितिपरत्वाभिधानेन वह्न्याद्येकस्मिन्हेतौ धूमाद्यभावाधि- करणनिरूपितवृत्तित्वाज्ञानेपि धूमव्याप्यतत् तद् वह्निमान् पर्वत इति परामर्शात् धूमसाध्यकानु-मितिजननेन व्यभिचारात्। व्याप्तिज्ञानादिरूपकारणकलापादेवानुमित्युदयसम्भवे व्यभिचार-ज्ञानाभावः अन्यथासिद्धः स्यात्। व्यभिचारविरोधादिनिश्चयाभावस्य अनुमितिं प्रति कारणत्वाभावेपि न व्यभिचारादावव्याप्तिः इत्युक्तं दीधितिकारेण।

यथार्थपदानुपादाने पर्वतो निर्वह्निः, धूमो वन्हेः अभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्यादिभ्रमात् अनुमितिप्रतिबन्धो भवति[६]। अर्थात् पर्वतो वह्निमान् इति सद्धेतुस्थले वह्न्यभाववत्पर्वते अतिव्याप्तिः। वह्न्यभाववत् वृत्तिधूमोऽयं इति भ्रमे अतिव्याप्तिः। अभिधेयत्वं प्रमेयत्वस्य व्यभिचारि इति भ्रमे च अतिव्याप्तिः। प्रथमभ्रमः अनुमितिविरोधिः अन्यौ च तज्जनकज्ञानविरोधिः। तादृशभ्रमे अतिव्याप्तिवारणार्थं यथार्थपदम्। यथार्थपददाने एतादृशज्ञानानां भ्रमत्वान्नातिव्याप्तिः।

अत्र प्रश्न उदेति यत् यथार्थपददाने भ्रमविषयसाध्याभावादावतिव्याप्तिवारणेऽपि असद्धेतुस्थले धूमवान्वह्नेरित्यादौ व्यभिचारादिविषये साध्यादेः प्रत्येकमनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वसत्त्वेन दोषत्वापत्तिः। तदर्थं यद्रूपाच्छिन्नविषयता प्रकृतानुमितिप्रतिबन्धक-ताननतिरिक्तवृत्तिः तद्रूपावच्छिन्नत्वरूपद्वितीयलक्षणानुसरणं क्रियते। तदा वह्न्यभाववत्ह्रदादि-रूपबाधादिघटकसाध्यादिविषयतायाः प्रत्येकं प्रकृतानुमितिप्रतिबन्धक- ताननतिरिक्तवृत्तित्वाभावेन प्रत्येके दोषत्वापत्तिवारणं भवति । एवं सद्धेतुस्थलेऽपि भ्रमविषयसाध्याभावादिविषयतायाः प्रकृतानुमितिप्रतिबन्धकताननतिरिक्तवृत्तित्वाभावेन साध्याभावादावपि नातिव्याप्तिः। इदं च लक्षणं यथार्थपदाघटितद्वितीयलक्षणम्।

अत्र केचित् इत्यनेन मिश्रादिमतानुसारेण यथार्थपदं सार्थकयति। मूलोक्तानि तेषु मध्ये तृतीयलक्षणस्येव प्रथमलक्षणमपि स्वीकृत्य प्रथमलक्षणार्थश्च अनुमितिकारणीभूताभावप्रतियोगिनः ये व्यभिचारादयः तत् प्रकारकयथार्थज्ञानविषयत्वं तत्वम्। प्रथमलक्षणं यदि दुष्टहेतोः तदा लक्षणभिन्नेऽतिव्याप्तिः यतोहि दुष्टहेतोः लक्षणतया दोषाणां अलक्षत्वं भवति । तथा च अलक्षेषु लक्षणगमनप्रसङ्गः स्यात्। न च ह्रदो वह्निमान् वह्न्यभाववत्ह्रदात् इत्यत्र वह्न्यभाववत्ह्रदस्य बाधितत्वेन दुष्टहेतुत्वात् तत्र दोषस्यापि दुष्टहेतुत्वेन लक्षत्वात् लक्षणगमनेपि न दोष इति वाच्यम्। ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकस्थले धूमत्वादिरूपेण ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयत्वं दुष्टलक्षणत्वम्। ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमिति-प्रतिबन्धकीभूतायाः वह्न्यभाववान् ह्रदः इत्याकारिका प्रमा तद्विषयत्वं ह्रदे सत्वेपि तत्र धूमादिना दुष्टत्वाभावेन न तस्य दुष्टहेतुलक्षणलक्षेति। तत्र लक्षणगमने भवत्यैव अतिव्याप्तिः। तद्वारणाय द्वितीयलक्षणस्येव प्रथमलक्षणमपि ज्ञायमानदोषप्रतिबन्धकत्वमङ्गीकृत्य परिष्करणीयम्। तथा च लक्षणप्रकारः अनुमितिकारणीभूताभावप्रतियोगिनां ज्ञानमिति समासमधिकृत्य अनुमितिकारणीभूताभावप्रतियोगिप्रकारकं यत् यथार्थज्ञानं तद्विषयत्वं हेत्वाभासत्वम्। अत्र स्वज्ञानविषयप्रकृताहेतुतावच्छेदकवत्वसम्बन्धेन तत्प्रकारकत्वं यथार्थज्ञाने। तथा च दोषेषु अतिव्याप्तिवारणं दुष्टहेतौ लक्षणसङ्गतिः। एवं च यथार्थपदाभावे सद्धेतावतिव्याप्तिः प्रसङ्ग स्यात्। कथमितिचेत् दोषप्रकारकभ्रममादाय। अतः यथार्थपदम्। तथा च सद्धेतौ दोषप्रकारकयथार्थज्ञाना-भावान्नातिव्याप्तिः। अतः यथार्थपदघटितं द्वितीयलक्षणं कृतम्।

यद्विषयकत्वेन लिङ्गज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्वम्। अत्र लिङ्गमविवक्षितमित्युक्तं दीधितिकारेण[७]। अर्थबोधजनकत्वप्रकारकमूलकृतइच्छाविषयताशून्यत्वमविवक्षितत्वम्। प्रथमलक्षणे यथार्थपदवैयर्थ्यरूपदोषत्वात् तल्लक्षणं परित्यज्य द्वितीयलक्षणं कृतम्। यद्विषयक-त्वेन यादृशविशिष्टविषयकत्वेन इत्यर्थः[८]। अन्यथा सर्वत्र बाधादिस्थले विशिष्टं शुद्धान्नातिरिच्यते इति नियमेन केवलह्रदत्वावच्छिन्नविषयता शुद्धह्रद इत्याकारकज्ञानेपि तत्र वह्न्यभावविशिष्ट-ह्रदत्वावच्छिन्नविषयकत्वस्यापि वर्तमानत्वात् प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तित्वस्य तादृशविषयतायामभावात्। अतः यादृशविशिष्टविषयकत्वेन इत्युक्तं दीधितिकारेण।

यादृष्टविशिष्टविषयकत्वकरणे नातिव्याप्तिः। तेनानुमितिप्रतिबन्धकपक्षविशेषकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः।

अत्र यद्विषयकत्वेनेत्यत्र अवच्छेदकत्वमनतिरिक्तवृतित्वम् [९]। तेन विशिष्टस्य असत्वेपि भ्रमप्रतिबन्धेऽपि नोक्तयुक्त्या पर्याप्त्यनिवेशे असम्भवः। तदनिवेशे पूर्वोक्तादिप्रसंगो वा। विशिष्टविषयकत्वेन प्रतिबन्धकतासम्भवेन निरूप्यनिरूपकभावापन्नविषयताशालित्वेन प्रतिबन्धकत्वेन पूर्वोक्तासम्भवः न वा बाधाद्यैकदेशे साध्याभावादौ पर्याप्त्यनिवेशे दोष इति।

मेयत्वविशिष्टव्यभिचारे अतिप्रसङ्गवारणाय द्वितीयलक्षणघटकयद्रूपे विशिष्टान्तराघाटितत्वं विशेषणं दत्तम्। अनतरिक्तवृत्तित्वरूपावच्छेदकताघटितलक्षणे पर्वतो धूमवान् वह्नेरित्यादौ मेयत्वविशिष्टो यः धूमाभाववत् वृत्तित्वविशिष्टो वह्निः तत्र मेयत्वविशिष्टव्यभिचारे अतिव्याप्तिः। मेयत्वविशिष्टधूमाभाववत् वृत्तिवह्नित्वावच्छिन्नविषयिताव्यापिका प्रकृतानुमितित्वव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकता वर्तते। तत्वं मेयत्वविशिष्टव्यभिचारे सत्वादतिव्याप्तिः। अतः दीधितिकारेण विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन इत्युक्तम्। ततः सम्पूर्णलक्षणे दोषाभिधानपूर्वकं हेत्वाभाससामान्यलक्षणम् अत्र वदन्ति इत्यादिग्रन्थेन अभिहितम्। यद्विषयक-निश्चयस्य विरोधिविषयता प्रयुक्तः तदुत्तरमनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपित-व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वस्य द्वयोर्व्यतिरेकः तत्वं हेतुदोषत्वम्।

निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ अव्याप्तिमपहरति रघुनाथशिरोमणिः अत्रवदन्ति इत्यादिना। एवं च लक्षणप्रकारकः यद्रूपावच्छिन्नविषयकानाहार्याप्रामाण्यज्ञानानास्कन्दित-निश्चयाव्यवहितोत्तरानुमितित्वव्यापकः अनाहार्यमानसज्ञानत्वव्यापको वा विरोधिविषयिताप्रयुक्तः प्रवृत्तपक्षतावच्छेदकावच्छिन्नविशेष्यता- निरूपितव्याप्तिविशिष्टप्रवृत्तहेतुत्वावच्छेदकावच्छिन्न-प्रकारताकत्वोभयाभावः तद्रूपावच्छिन्नत्वं हेत्वाभासत्वम्।

अयोगोलकं धूमवत् वह्नेरित्यत्र धूमाभाववत् वृत्तिवह्निरूपव्यभिचारे लक्षणसमन्वयः। तथाहि धूमभाववत् वृत्तिवह्निरूपव्यभिचारत्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरमयोगोलकं धूमवत् धूमव्याप्यवह्निमच्च इत्यनुमितेर्नोत्पद्यते। तां प्रति तादृशव्यभिचारनिश्चयस्य प्रतिबन्धकत्वात् उत्पद्यते च घटवत्भूतलमित्याकारानुमितिः। तादृशानुमितिसामान्ये विरोधिविषयिताप्रयुक्तः अयोगोलकत्वावच्छिन्नविशेष्यतानिरूपितधूमत्वावच्छिन्नप्रकारताकत्व अयोगोलकत्वावच्छिन्न-विशेष्यतानिरूपितधूमत्वावच्छिन्नधूमनिरूपितव्याप्तिविशिष्टवह्नित्वावच्छिन्नप्रकार- ताकत्वोभयाभाव इति तादृशधूमाभाववत्वृत्तिवह्नित्वावच्छिन्नत्वस्य तादृशव्यभिचारे सत्वात्। अन्यैव दिशा सर्वत्र दोषे लक्षणसमन्वयः कार्यः।

अत्र पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं ग्राह्यं न तु वास्तविकम् [१०]। अन्यथा काञ्चनमयपर्वतो वह्निमान् धूमादित्यत्र वास्तविकस्य पक्षतावच्छेदकीभूतकाञ्चनमयत्ववैशिष्ट्यस्य प्रवृत्तपक्षे

अभावादित्यप्रसिध्यावव्याप्तिः। किन्तु काञ्चनमयत्वादिरूपपक्षतावच्छेदकादिप्रकारेण ज्ञानविषयत्वरूपं वैज्ञानिकं ग्राह्यम्। तेन आश्रयासिद्ध्यादौ लक्षणसमन्वयः।

व्याप्तिश्च अन्वयतो व्यतिरेकतश्च ग्राह्यः इति दीधितिकाराः वदन्ति । एकमात्रदोषस्थले महानसत्ववत्-पर्वतपक्षकवह्निसाध्यकधूमहेतुकमहानसत्ववान्पर्वतः वह्निमान्धूमादित्वादौ यथा महानसत्वाभावात् पर्वतस्य आश्रयासिद्धित्वं तथैव महानसत्वाभावव्याप्यविशिष्टपर्वतस्य पर्वतवृत्तिमानसत्वाभावस्य च आश्रयासिद्धित्वम्। एतादृशाश्रयासिद्धिस्थले लाघवाद् पक्षतावच्छेदकविशिष्टपक्षज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकतानतिरिक्तवृत्ति-यद्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नत्वमेव लक्षणार्थः कार्यः।

पञ्चविध भेदोक्तिस्तु तत् सम्भवस्थलाभिप्रायेण[११]। पक्षसाध्यहेत्वादिभेदेन व्याप्तिलक्षणस्यैव हेत्वाभासलक्षणस्यापि विभिन्नतया ह्रदो वह्निमान् इत्यादिस्थले यत्र बाधविरोधासिद्धस्त्रय एव दोषः तत्रत्यहेत्वाभासलक्षणं न पञ्चविधहेत्वाभाससाधारणम्। अस्मिन्स्थले पञ्चविधत्वविरहेपि यादृशगोपदार्थपक्षक अश्वत्वसाधकघटत्वहेतुकस्थले अश्वत्वाभाववत्वं गविबाधः, अश्वत्वा-भावव्याप्यवत्वं गवि सत्प्रतिपक्षः, अश्वत्वभाववद् वृत्तिघटत्वं व्यभिचारः, अश्वत्वासमानाधिकरण्यं घटत्वे विरोधः, घटाभाववत्वं गवि स्वरूपासिद्धरिति पञ्चविधहेत्वाभासस्य एकस्थले प्रसिद्धः तत्रैव पञ्चविधत्वाभिधानं न तु सर्वत्र। अनन्तरं मिश्रादिसम्मतं हेत्वाभासलक्षणे दोषं प्रदश्र्य दशाविशेषेत्यादिग्रन्थः नवीनरीत्या व्याख्यातः ।

**टिप्पणी -**

१. हेत्वाभास. दीधिति. पृ. १
२. हेत्वाभास. दीधिति. पृ. २१
३. हेत्वाभास. दीधिति. पृ. २१
४. हेत्वाभास. दीधिति. पृ. ३१
५. हेत्वाभास. दीधिति. पृ. ४९
६. हेत्वाभास. दीधिति. पृ. ९८
७. हेत्वाभास. दीधिति. पृ. १४२
८. हेत्वाभास. दीधिति. पृ. १४७
९. हे. भा. दी., पृ. १६२
१०. हे. भा. दी. पृ. ४२१
११. हे. भा. दी. पृ. ५१६

(सर्वदर्शनविभागः)
राष्ट्रियसंस्कृतसंस्थानम्, सदाशिवपरिसरः, पुरी

# न्यायनये आत्मतत्त्वसमीक्षणम्

सुकान्ति बेहेरा

शोधच्छात्रा

अस्यम्संसारमूलस्य मिथ्याज्ञानस्य प्रथमोत्पन्नत्वेऽपि उत्तरवर्त्तिना तद्विपर्य्ययेण व्याख्यातेन तत्वज्ञानेन विनाशो दुर्बलत्वात् । तिरोहितमिथ्यावासना तत्वज्ञानविवृद्धिस्तु समाधि - विशेषाभ्यासादिति महर्षिगौतमोपदेशः । तदर्थं न्यायसूत्रे - स्वनुष्ठेया उपाया उपदिष्टाः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्युपनिषदि मननपदेनानुमानस्य ग्रहणात्तस्य च न्यायशास्त्रत्वेन सर्वानुभवसिद्धत्वादात्मतत्वसाक्षात्कारे न्यायविद्याया अपरिहार्यता स्पष्टा ।

तत्वञ्च, ''तत्त्वं सम्यक्त्वं ज्ञानधर्म एव[१]'' इति व्योमवतीकारस्य, ''यस्य वस्तुनो यो भावस्तत् तत्त्वम्[२]'' इति न्यायकन्दलीकारस्य, ''सतश्च सद्भावोऽसतश्चासद्भावः[३]'' इति न्यायभाष्यकारस्य ''तत्त्वमनारोपितं रूपम्[४]'' इति किरणवलीकृतश्च वचनात् स्पष्टम् ।

तत्वज्ञानं सम्यग्दर्शनं यथाभूतावबाधो[५] यथार्थस्वरूपज्ञानं वेति । 'अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपायस्तत्त्वज्ञानं[६]' 'तत्वज्ञानमेव निश्रेयससाधनं[७]', 'तत्त्वसाक्षात्कारस्तु विपर्ययसंस्कारं निवर्त्तयति[८]' । तत्त्वज्ञानञ्च 'प्रमातत्वज्ञानादिति[९]' सूत्रणात् । तथा च तद्वति तत्प्रकारकज्ञानरूपयथार्थानुभवः प्रमेति भावः फलितः । तस्मात्प्रमात्वं नाम यथार्थानुभवत्वमथवा समीचीनानुभवत्वम् । न च स्मृति प्रमा, यथार्थज्ञानत्वात् प्रत्यक्षादिवदित्यनुमानेन स्मृतेः प्रमात्वं सिद्ध्यतीति वाच्यम्, सिद्धे व्यवहारे निमित्तानुसरणात्, स्मृतिहेतुसंस्कारस्य प्रमाणत्वेन महर्षिभिरभिधानात्, ''प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि[१०]'' इति सूत्रेण प्रमाणचतुष्टयपरिज्ञानात् । नियतपूर्वानुभवसापेक्षस्मृतौ अनुभवत्वाभावान्न स्मृतेः प्रमात्वम्, पूर्वानुभवनिरपेक्षयथार्थज्ञानस्यैव प्रमात्वेन निर्देशात् । यथार्थानुभवो मानमनपेक्षतयेष्यते[११] इति यथार्थानुभवस्यैव प्रमात्वेनोदयनाचार्येण व्यपदिष्टवात् ।

वस्तुतः स्मृतेर्याथार्थ्यं नास्ति 'स्मृतेर्याथार्थ्यमपि कुतः' इत्याचार्योदयनवचनेनावगमात् । अनर्थजत्वदर्शनात् स्मृतेर्न प्रामाण्यम् अपित्वनर्थजन्यत्वं तदप्रामाण्यकारणम्[१२] इति जयन्तभट्टप्रतिपादनात् ।

**तत्वज्ञानोत्पत्तिः –**

अहङ्कारनिवर्त्तकत्वज्ञानं कथमुत्पद्यते इति ?

निर्वाणहेतुः किल तत्त्वबोधो निर्मूल्य मिथ्याव्यवस्यमेव ।

निगद्यते तस्य जनिः सुशास्त्रे सा वक्ष्यते शास्त्रनयानुभूत्या ।।

''अभ्यासवैराग्याभ्यां तन्निरोधः[१३]'' इति महर्षिपतञ्जलेरूपदेशे अभ्यासस्य तत्र स्थितौ यत्नत्वमित्यर्थः ''तत्र स्थितौ यत्नोऽभ्यासः[१४] इति सूत्रप्रामाण्यात् सङ्गच्छते । ध्येयाब्दहिर्गच्छतश्चित्तस्य पुनः पुनरानयनं कर्त्तव्यम् ।

यतो यतो निश्चलति मनश्चञ्चलमस्थिरम् ।

ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्[१५] ।। इति

श्रीमद्भगवतवचनात् सिद्ध्यति । तस्मात् सुदीर्घकालं सश्रद्धं निरन्तरं समाधिविशेषाभ्यासेनैव तत्त्वसाक्षात्कारोऽन्यथा नाभ्यासदृढभूमिः ।

''पूर्वकृतफलानुबन्धात्तदुत्पत्तिः[१६]'' इति सूत्रव्याख्याने जन्मान्तरसञ्चितप्रकृष्टसंस्कारजन्ययोगाभ्या-ससामर्थ्यरूपार्थः पूर्वकृतफलानुबन्धशब्दस्याभ्यधायि न्यायभाष्यकारेण तन्मतेन पूर्वकृतशब्दस्य जन्मान्तरोपचित-तत्वज्ञानहेतुधर्मप्रविवेकरूपार्थवाचित्वात् फलानुबन्धशब्दस्य योगाभ्याससामर्थ्यरूपार्थत्वस्वीकाराच्च ।

वार्त्तिककारेण पूर्वजन्माभ्यस्तसमाधिविशेषफलधर्मजन्यः पुनः समाधिविशेष इत्यर्थो व्यपदिष्टः । तात्पर्यटीकाकारेण तु पूर्वजन्मकृतसमाधिफलसंस्कारस्य स्थैर्यात् समाधिविशेषोत्पत्तिरित्यर्थो विहितः । तेन फलशब्देन संस्कारः अनुवन्धशब्देन च स्थिरता इत्यर्थः स्पष्टः ।

योगाभ्याससामर्थ्यं पूर्वसञ्चितसंस्कारविशेषाज्जायते । संस्कारविशेषस्यास्याधिकारिविशेषवैराग्यवि-लक्षणसमाध्यभ्यासासाधारणसामर्थ्यं जनयतः तत्वज्ञानसम्पादकतया स्वीकर्त्तव्यता । संस्कारस्यास्य तत्त्वज्ञानहेतोरात्मधर्मत्वं तात्पर्यटीकाकृता न्यायभाष्य – कारवचनतात्पर्यप्रकाशनात् 'प्रविच्यते विशिष्यतेऽनेनेति प्रविवेकः । धर्मश्चासौ, प्रविवेकश्चेति धर्मप्रविवेकः, प्रकृष्टसंस्कारः । स तु आत्मधर्मः'

वैराग्यञ्च दुःखहेतुत्वावगमे विषयाणां परित्यागे इच्छा[१७] 'दोषदर्शनाद्विषयत्यागेच्छा[१८]' वा पुनर्भोगानभिष्वङ्गलक्षणम्[१९] वा दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा[२०] वेति, वैरागञ्चविषयभागे अलंबुद्धिः, न तु रागाभावमात्रम्, विषयसन्निध्याभावेन रागाभावे वैराग्यापत्तेः ।

परापरभेदेन वैराग्यस्य भेदद्वये अपरस्य यतमान - व्यतिरेक - एकेन्द्रिक - वशीकारसंज्ञाभेदेन भेदचतुष्टयम् ।

तत्र चित्रवर्त्तिरागादिदोषैः स्वस्वविषयेषु प्रवृत्तानामिन्द्रियाणां चक्षुरादीनां विषयमुखीप्रवृत्तिनिषेधचिन्तया चित्तमलरागादीनां प्रक्षालनार्थं करुणादियत्न एव यतमानसंज्ञा । इयं वैराग्यस्य प्रथमावस्थेत्यभिधीयते ।

तदारम्भे सति पक्वानां मलानां वक्ष्यमाणेभ्यो व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा । इयञ्च वैराग्यस्य द्वितीयावस्था ।

करुणादिभावनया रागादिमलानां क्षीणत्वात् बहिरिन्द्रियप्रवर्त्तनासामर्थ्येन पकानामौत्सुक्यमात्रेण मनसि व्यवस्थापनमेकेन्द्रियसंज्ञा । इयं वैराग्यस्य तृतीयावस्था

यदा दृष्टानुश्रविकविषयोपस्थितावपि तत्र न बहिरिन्द्रियप्रवृत्तिः अन्तरिन्द्रियस्यौत्सुक्यमात्रस्य निवृत्तिश्च भवति । तदेयमवस्था वशीकारसंज्ञेत्युच्यते । इयं वैराग्यस्य चतुर्थावस्थेति ।

**सन्दर्भग्रन्थाः–**

१. व्योम., प्रथमभागः
२. न्या.क., पृ.१६
३. न्या. सू. भा, प्र.अ., प्र.आ.

४. किरणा. पृ.
५. न्यायसूत्रे च.अ., द्वि. आ. प्रारम्भे न्यायभाष्ये
६. न्याय.भा., ४/२/२
७. किरणा.
८. तात्पर्यटीका
९. न्याय. कु., स्तवकः - ४
१०. न्या. सू., १/१/३
११. न्या. कु., का - १, स्तवकः – ४
१२. न्या. म., आ - २
१३. श्रीमद्भगवद्गीता, ६/३६
१४. यो. सू. १/१३
१५. श्रीमद्भगवद्गीता, ६/२६
१६. न्या.सू., ४/२/४१
१७. न्या.क.,पृ.६३६
१८. प्र.पा.भा.
१९. न्या.वा.
२०. यो.सू, १५

नव्यन्यायविभागः
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# प्रत्यक्षप्रमाणविमर्श:

**प्रज्ञापारमितामहापात्र**
शोधच्छात्रा

प्रत्यक्षात्मकं ज्ञानं जीवानां स्वत:सिद्धम्। सामान्यतो जीवानां व्यवहारम्प्रत्यक्षज्ञानपुरस्सरमेव वयमनुभवाम:। प्रत्यक्षात्मकप्रमितिसहकृतमनुमानं स्वार्थान् विधोतयति। यद्यपि यथाकथाञ्चिद्रूपेण सर्वे जीवा अन्वीक्षामनुसृत्यैवप्रवृतिं प्रतिपुरस्सरा: भवन्ति। शिशुरपि प्रयोज्य-प्रयोजकबृद्धप्रवृत्तिदर्शनमूलामन्वीक्षामवधार्यैव पद-पदार्थसम्बन्धज्ञानपूर्वकं व्यवहारं विजानाति। पूर्वसंस्कारप्रयुक्तस्तान्यपानप्रवृत्तित: प्रौढप्रवृत्तियावत्सर्वत्रानुभूयतेऽन्वीक्षाया अस्तित्वं, तथापि पञ्चज्ञानेन्द्रियजन्यप्रत्यक्षात्मकानुभूत्यनन्तरमेवान्वीक्षाया: प्रवृत्तिरितिप्रत्यक्षस्य निखिलज्ञानकारणत्वमस्त्येव। अतएव भाष्यमाणामान्वीक्षिकीं समाख्यातुं गौतमेन सर्वजनबोधसाधारणप्रत्यक्षप्रमासमाख्याता। ततश्च- "तत्पूर्वकमनुमानमित्यादिनाऽन्वीक्षां समाख्यातवान्महर्षिरिति तदिङ्गितदर्शनदिशा प्रत्यक्षमाख्यायते।

प्रत्यक्षस्वरूपं प्रतिपादयन् सूत्रकारो यज्जगादि-

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमपदेश्यम-व्यभिचारिव्यवसायात्मकं प्रत्यक्षम् "[१]। इति।

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्। सन्निकर्षा: संयोग-समवायादय: वक्ष्यमाणा:। इन्द्रियाणि च चक्षुरादिनि, अर्थाश्च घट-पटादय:। तथाचेन्द्रियसन्निकर्षजन्यप्रत्यक्षानुभवात्मकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षप्रमाणम्। प्रमाणपदं भावल्युडा प्रमितिपरम्। करणल्युडा च प्रमाकरणप्रयोजकमिति। ज्ञानेन्द्रियै: तत्तद्विषयेण सार्धं तत्तत्सन्निकर्षानन्तरं आत्मसंयुक्तमन: साहाय्येन यज्ज्ञानमुत्पाद्यते तत्प्रत्यक्षात्मकं, तत्करणञ्चेन्द्रियमेव, सन्निकर्षाश्च व्यापारा:। इत्थमिन्द्रियसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणम्। सूत्रकारेण तावज्ज्ञानस्य-" अव्यपदेश्यमव्यभिचारि-व्यवसायात्मकमिति विशेषत्रयमभिहितम्। तेषां विशेषणानां प्रयोग: केन प्रयोजनेनात्र क्रियत इति भाष्यदिशाऽवज्ञेयमिति भाष्यकारव्याख्यानमत्रावलोकनीयम्। तद्यथा- "इन्द्रियार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं तत् प्रत्यक्षम्। न तर्हीदानीमिदं भवति, आत्मा मनसा संयुज्यते, मनइन्द्रियेण, इन्द्रियमर्थेनेति। नेदं कारणावधारणम्- "एतावत्प्रत्यक्षे कारणमिति", किन्तु विशिष्टकारणवचनमिति। यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते, यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्त्तते। मनसस्तर्हीन्द्रियेण संयोगो वक्तव्य:। भिधमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यते इति समानत्वान्नोक्त इति।

यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्यय:, अर्थसम्प्रत्ययाच्च व्यवहार:। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं रूपमिति, वा रस इति वा भवति। रूप-रस-शब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानं -"रूपमिति जानीते, रसं इति जानीते", नामधेयशब्देन व्यपदिश्यमानं सच्छाब्दं प्रसज्यते। अत आह अव्यपदेश्यमिति।

यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानं न तन्नामधेयशब्देन व्यपदिश्यते। गृहीतेऽपि च शब्दार्थसम्बन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति। यदात्तु सोऽर्थोगृह्यते तदा तत् पूर्वस्मादर्थज्ञानान्न विशिष्यते,

तदर्थविज्ञानं तादृगेव भवति। तस्य तु अर्थज्ञानस्यान्य: समाख्याशब्दोनास्तीति, येन प्रतीयमानं व्यवहाराय कल्पेत्। न चा प्रतीयमानेन व्यवहार। तस्माज्ज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते " रूपमिति ज्ञानं, रस इति ज्ञानमिति"। तदेवमर्थज्ञानकाले स न समाख्याशब्दोव्याप्रियते, व्यवहारकाले तु व्याप्रियते। तस्मादशाब्दज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति।

ग्रीष्मे मरीचयो: भौमेनोष्मणा संसृष्टा:स्पन्दमाना: दूरस्थस्य चक्षुषा सन्निवृष्यते। तदेन्द्रियसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते। तच्च प्रत्यक्षं प्रसज्यत इत्यत आह- " अव्यभिचारीति। यदतस्मिंस्तदिति तद्व्यभिचारि, यत्तु तस्मिंस्तदिति तदव्यभिचारि प्रत्यक्षम्।

दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा, रेणुरिति वा। तदेन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह-"व्यवसायात्मकमिति। न चै तन्मन्तव्यम्-"आत्ममन: सन्निकर्षजमेवाऽनव- धारणज्ञानमिति। चक्षुषा ह्यर्थं पश्यन्नावधारयति। यथाचेन्द्रियेणोपलब्धमर्थं मनसोपलभते, एवमिन्द्रियेणानवधारयन्मनसा नावधारयति। यच्चैतदिन्द्रियानवधारणपूर्वकं मनसाऽनवधारणं तद्विशेषापेक्षं विमर्शमात्र संशयो न पूर्वमिति सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसाय:, पश्चान्मनसाऽनुव्यवसाय:, उपहतेन्द्रियाणामनुव्यवसायाभावादिति।[२]

इत्थमिन्द्रियार्थसन्निकर्षाज्जायमानं,- अव्यपदेश्यम्- शाब्दभिन्नं, अव्यभिचारि- भ्रमभिन्नं; व्यवसायात्मकं-सावधारणं-तत्त्वेन प्रतीयमानविषयमितिभाव:। यज्ज्ञानं तत्प्रत्यक्षमिति प्रत्यक्षप्रमाया: स्वरूपम्। प्रथमविशेषणेन शाब्दातिव्याप्ति:, द्वितीयविशेषणेन भ्रमातिव्याप्ति: तृतीयविशेषणेन च तस्य सावधारणत्वं स्फुटीवृतमित्थं। भाष्यदर्शनदिशा महर्षिप्रतिपादितं प्रत्यक्षलक्षणं विज्ञेयम्। करणस्य क्रियाभेदभिन्नमूर्त्तिकतया पूर्वं प्रमा प्रदर्शिता। इन्द्रियजन्यत्वात्तस्या तां प्रति चक्षुरादीन्द्रियाणां करणत्वं लभ्यते।

नव्यन्यायग्रन्थेष्वपि प्रत्यक्षलक्षणं इन्द्रियजन्यज्ञानत्वेनैव व्याख्यातम्। तद्यथा मुक्तावल्याम्- "इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षन्तु न लक्ष्यम्, सूत्रे तथैवोक्तत्वात्।"[३]

न्यायसूत्रे तावद्भाष्यकारेणेत्थमिदं तथ्यं समुपस्थापितम्- " आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यं, अनिन्द्रियसन्निकर्षजं हि तदित्ति। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्य: पृथगुपदेशो धर्मभेदात्। भौतिकानीन्द्रियाणि नियतविषयाणि, सगुणानाञ्चेन्द्रियभाव इति। मनस्त्वभौतिकं सर्वविषयञ्च। नास्यसगुणस्येन्द्रियभावइति। सति चेन्द्रियसन्निकर्षे सन्निधिमसन्निधिञ्चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्याम:। इति मनसश्चेन्द्रियभावात्तत्र वाच्यं लक्षणान्तरमिति।"[४]

आत्मसुखादिप्रत्यक्षं मानसं तत्र नेन्द्रियाणां प्रवृत्तिरिति तत्प्रत्यक्षसाधारणं प्रत्यक्षलक्षणं वक्तव्यम्। चिन्तामणिकारेण ज्ञानाकरणकं ज्ञान प्रत्यक्षमिति लक्षणान्तरं व्यवस्थापितम्। अस्य लक्षणस्य निर्वचनं मुक्तावलीकारेण विहितम्। तद्यथा-

"अथवा "ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्"। अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य

शाब्दबोधेपदज्ञानस्य स्मृतावनुभवस्य कारणत्वात्तत्र- तत्र नातिव्याप्तिः। इदं लक्षणं ईश्वरप्रत्यक्षसाधारणम्।"[५]

इत्येवं इन्द्रियजन्यं ज्ञानं प्रत्यक्षं, ज्ञानाकरणकं ज्ञानं प्रत्यक्षं वेति प्रत्यक्षलक्षणं विज्ञेयम्। तत्करणमिन्द्रियमतस्तदेव प्रत्यक्षप्रमाणमित्यवधार्यम्। किन्तावदिन्द्रियमिति जिज्ञासोदेति। तल्लक्षणं यथा विश्वनाथेन प्रतिपादितम्-"शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनः संयोगाश्रयत्वमिन्द्रियत्वम्।"

आत्मन्यतिव्याप्तिवारणाय प्रथमदलं, कालादावतिप्रसङ्गवारणाय द्वितीयदलम्। लक्षणमिदं मनः साधारणम्। विशेषतस्त्वाकरादेव विज्ञेयम्।

**अन्यदर्शनेषु प्रत्यक्षम्-**

सांख्यमीमांसा बौद्धदार्शनिकप्रमाणनिरूपकग्रन्थेष्वपि प्रत्यक्षस्य लक्षणमभिहितमस्ति। तत्र तेषां निर्वचनं किं रूपमिति विज्ञातव्यमिति तदपि प्रस्तुयते-

**सांख्यदर्शने प्रत्यक्षम्-**

सांख्यकारिकायामीश्वरकृष्णविरचितं प्रत्यक्षलक्षणस्य स्वरूपमित्थम्-"प्रतिविषयाध्यवसायो दृष्टम्"[६]

सांख्यतत्त्वकौमुदीकारेणाचार्यवाचस्पतिमिश्रेणास्य लक्षणस्वरूपस्यान्तर्निगुढार्थो यथा समुपस्थापित तथा ज्ञानेन प्रत्यक्षस्वरूपं स्फुटीभविष्यतीति तदवलोकनीयम्। तद्यथा-

"समानासमानजातीयव्यवच्छेदो लक्षणार्थः। अवयवार्थस्तु- विसिन्वन्ति- विषयिणमनुबध्नान्ति- स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्विषयाः- पृथिव्यादयः सुखादयश्च। अस्मदादीनामविषयाश्च तन्मात्र लक्षणा योगिनामूर्ध्वस्रोतसां च विषयाः, विषयं विषयं प्रतिवर्त्तते इति प्रतिविषयमिन्द्रियम्। वृत्तिश्च सन्निकर्षः, अर्थसन्निकृष्टामिन्द्रियमित्यर्थः। तस्मिन्नध्यवसायतदाश्रित इत्यर्थः। अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्। उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिनवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति , वृत्तिरिति ज्ञानमिति चाख्यायते। इदं तावत्प्रमाणम्। अनेन यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमा बोध इति।.....।

अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति। संशयस्यानवस्थितग्रहणेनानिशितरूपत्वात्; निश्चयोऽध्यवसाय इति चानर्थान्तरम्। विषयग्रहणेन चासद्विषयं विपर्ययमपाकरोति। प्रतिग्रहणेन चैन्द्रियसन्निकर्षसूचनादनुमानस्मृत्यादयश्च पराकृता भवन्ति। तदेवं समानासमानजातीयव्यवच्छेदकत्वात् प्रतिविषयाध्यवसायं- इति दृष्टस्य सम्पूर्णं लक्षणम्।[७]

इत्येवं सांख्य-दर्शनदिशा प्रतिविषयाध्यवसायः-दृष्टम्-इति प्रत्यक्षलक्षणमभिहितम्। विषयपदव्युत्पत्यनुसारं विषयास्तावज्ज्ञानानुबन्धहेतु पृथिव्यादयो द्रव्यपदार्थाः- सुखादयो गुण-कर्मादिपदार्थाश्च। विषयं विषयं प्रतिवर्त्तते इति प्रतिविषयमिन्द्रियमर्थसन्निकृष्टमिन्द्रियं तदाश्रितोऽध्यवसायः- बुद्धिव्यापारो ज्ञानं दृष्टं प्रत्यक्षप्रमाणमिति। विपर्यय-संशयव्यवच्छेदो विषयाध्यवसायग्रहणेन विज्ञेयः। प्रतिग्रहणेन विषयोन्द्रियसन्निकर्षसूचनेन अनुमान-स्मृत्यादीनां व्यावर्त्तनमिति प्रत्यक्षप्रमाणस्येदं सम्पूर्णं लक्षणमित्याचार्येण प्रतिष्ठापितम्।

**२.मीमांसादर्शने प्रत्यक्षम्-**

मानमेयोदये प्रत्यक्षलक्षणस्वरूपनिम्नलिखितरूपेण वर्णितम्- "तत्र इन्द्रियसन्निकर्षजं प्रमाणं

प्रत्यक्षम्। कानि पुनरिन्द्रियाणि? उच्यते - चक्षू-रसन-घ्राण-स्पर्शन-श्रोत्राणि-मनश्चेति षडिन्द्रियाणि।

"चक्षुर्नाम कनीनिकान्तगतं तेजोऽथजिह्वाग्रगस्तोयांशो रसनं क्षितिरवयवो घ्राणञ्च घ्राणोदरे। सर्वाङ्गप्रसृताश्च मारुतलवास्त्वङ्नाम कर्णोदरन्योमैवश्रवणं मनस्तु विभु तद्देहे च कार्यावहम्।"[८]

उपर्युक्तपद्येन वाह्यभौतिकानीन्द्रियाणि प्रतीतिविषयतां यान्ति। अत्र मनसो विभुत्वं प्रतिपादितम्। न्यायदर्शनसिद्धान्तानुसारं मनसोऽणुत्वमेव। तस्य विभुत्वे पञ्चज्ञानेन्द्रियजन्यज्ञानानां यौगपद्यापत्तिः स्यात्।

तदित्थं कुमारिलमतानुसारं प्रत्यक्षं प्रमाणमपीन्द्रियजन्यज्ञानात्मकमेव। तच्च निर्विकल्पकं-सविकल्पकभेदेन द्विविधं। निर्विकल्पकस्य स्वरूपं यथा श्लोकवार्त्तिके प्रतिपादितम्-

"अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्।।
"न विशेषो न सामान्यं तदानीमनुभूयते।
तयोराधारभूता तु व्यक्तिरेषावधीयते। ।।"[९]इति।।

सविकल्पकस्वरूपं यथा-

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता।।"[१०]इति।।

तदेवं निर्विकल्पकः सविकल्पकभेदेन प्रत्यक्षं द्विविधम्। निर्विकल्पकसविकल्पकयोः स्वरूपमुद्घाटयतामानमेयोदयो नारायणभट्टेनोक्तम्-

"तच्चेन्द्रियसन्निकर्षजं ज्ञानं द्विविधं - निर्विकल्पकं सविकल्पकञ्चेति। तत्रेन्द्रियसन्निकर्षानन्तरमेव द्रव्यादिस्वरूपमात्रावगाहि शब्दानुगमशून्यं यत्सम्मुग्धज्ञानं जायते, तद्विशिष्टकल्पनाभावात् निर्विकल्पकमित्युच्यते।

यत्तु तदनन्तरं शब्दस्मरणसहकृतं जात्यादिविशिष्टवस्तुविषयं रक्तोऽयं, घटोऽयम्- इत्यादिव्यक्तविज्ञानं तत्सविकल्पकम्।"[११]

इत्येवं कुमारिलमतानुसारं द्विविधम्प्रत्यक्षमिष्टं,- द्वयोरपि प्रामाण्यमनाङ्गीक्रियते। न्यायदर्शनेऽपि प्रत्यक्षस्य द्वैविध्यम्प्रतिपादितमस्ति यदग्रे प्रस्तोष्यते।

**"प्रभाकरमते प्रत्यक्षम्"**

प्रभाकरमतानुसारं "साक्षात्प्रतीतिप्रत्यक्षम्" इति प्रत्यक्षप्रमाणस्य लक्षणम्। सा प्रतीतिश्च मेयमातृप्रमास्वरूपिणी भवन्ति। अयमेव तन्मते त्रिपुटीसाक्षातकारः।यथोक्तं -

शालिकनाथमिश्रेण प्रकरणपञ्चिकायाम्-

"साक्षात्प्रतीतिः प्रत्यक्षं मेयमातृप्रमासु सा ।
मेयेष्विन्द्रिययोगोत्था द्रव्यजातिगुणेषु सा ।।"[१२]

इत्येवं मीमांसकमतानुसारमिदं प्रत्यक्षस्य संक्षिप्तं स्वरूपम्। विशेषतस्तु तद्दर्शनग्रन्थस्य एव समधिगन्तव्यम्।

**३.बौद्धदर्शने प्रत्यक्षम्-**

बौद्धास्तावन्निर्विकल्पकस्यैव प्रत्यक्षत्वमङ्गीकुर्वन्ति। तेषां मते सविकल्पकस्य प्रमाण्यं नाभ्युपेयते। प्रत्यक्षस्वरूपं यथा न्यायविन्दौ प्रतिपादितं धर्मकीर्त्तिना-

"प्रत्यक्षं कल्पनापोढमभ्रान्तम्। इति।"[१३]

अग्रेऽस्य स्वरूपमुद्घाटयता तेनोक्तम्- "अभिलापसंसर्गयोग्यप्रतिभासा प्रतीति:-कल्पना, तया रहितम्।"[१४]इति । इत्थं निर्विकल्पकात्मकमेव प्रत्यक्षप्रमाणं बौद्धमतानुसारम्। सविकल्पकस्य भ्रान्तत्वेन तस्य प्रमाणता नास्ति। अर्थक्रियाकारित्वं - प्रमाणमिति तत्प्रमाणलक्षणानुसारं निर्विकल्पकस्यैवार्थक्रियाकारित्वमस्ति। स्वविकल्पकस्यार्थक्रियाकारित्वदैवादेवापाद्यते। तद्यथा-

"मणिप्रदीपप्रमयोर्मणिबुद्ध्याभिधावतो:।
मिथ्याज्ञानविशेषेऽपि विशेषोऽर्थक्रियां प्रति।"[१५]इति।

तात्पर्यमिदं यत्- मणिप्रदीपयो: प्रमां मणित्वेनावधारयतो: मनुष्ययो: प्रवृत्तिर्यद्यपि मिथ्याज्ञानप्रयुक्तैव तथापि तत्र मणिप्रमायां मणित्वावगाहिनी बुद्धिदैवादर्थाक्रियाकारिणीति न नियमेनास्यार्थक्रियाकारित्वमिति नास्य सविकल्पकस्य प्रामाण्यमिति। यथोक्तमाचार्यवसुबन्धुना-"वितथ-विकल्पाभ्यासवासनानिद्रया प्रसुप्तोलोक:।"[१६] यद्यत्येषां मते अनुमानज्ञानस्यापि जातिविकल्पविषयत्वाद्भ्रमत्वमापद्यते। तथापि व्यवहारतोऽविसंवा- दिप्रवृत्तिजनकत्वादस्य प्रामाण्यमङ्गीक्रियते। यथोक्तं कमलशीलेन-

"यत्र तु पारम्पर्येण वस्तुप्रतिबन्ध:, तत्रार्थाविसंवादो भ्रान्तत्वेऽपि।"[१७] इति।

इत्थं निर्विकल्पकमात्रस्यैवेतन्मते प्रामाण्यमिति । बौद्धानामिदं मतं मीमांसक-तार्किकादिभि: निरस्यते लोकानुभवसिद्धत्वात्सविकल्पकस्यास्ति प्रामाण्यम्। यथासौगतमतं विखण्डयन् वक्ति मानमेयोदयकार:-

"तदप्ययुक्तम्, तस्य प्रत्यक्षतया लोकसिद्धस्य निषेधे लोकविरोधात् । तदुक्तम्- चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति। स एव सविकल्पकस्य प्रत्यक्षत्वं निवारयेत् ईति।

किञ्च सविकल्पकानन्तरमेवार्थक्रियादर्शनात् तस्यार्थक्रियाकारित्वलक्षणं प्रमाणत्वं दुर्निवारम्।....। अनुमानविकल्पस्यापि अप्रमाण्यप्रसङ्गात् सामान्यादेर्वस्तुत्वस्य साधयिष्यमाणत्वाञ्च, अत: प्रमाणमेव सविकल्पकम्।"[१८]

इत्थं सविकल्पकस्यापि प्रामाण्यमस्त्येवेस्तत्र नास्ति संशय:। पारमार्थिकदृष्ट्या लोकस्य भ्रान्तत्वकथनमयुक्त लोकस्यानुभवसिद्धत्वात्; लोकज्ञानस्यापि नि:श्रेयसहेतुत्वादिति।

**सविकल्पकस्य प्रत्यक्षत्वविषयकमीमांसा -**

इन्द्रियार्थसन्निकर्षजं ज्ञानं प्रत्यक्षम्, तादृशञ्च निर्विकल्पकमेव प्रथमतो गृह्यते; निर्विकल्पकानन्तरमेव नामजात्यादिसंयुतस्य सविकल्पकस्यानुभूतिरिति प्रत्यक्षपदवाच्यत्वमस्य कथं स्येत्स्यति। यदि च परम्परयोन्द्रियजन्यत्वमिष्यते तदाऽनुमानादीनामपि प्रत्यक्षत्व प्रसङ्गस्यात्। तद्यथा- "ननु तथापि कथमस्य प्रत्यक्षशब्दवाच्यत्वं, निर्विकल्पकव्यवधानेन साक्षादक्षजत्वाभावात्। परम्परयाक्षजस्य प्रत्यक्षत्वे अनुमानादीनामपि प्रत्यक्षत्वप्रसङ्गात्, मैवम्, सविकल्पकस्यापि निर्विकल्पकवदेवसाक्षादक्षजत्वात्।

यथाहुराचार्याः-

"ताश्चेन्द्रियानुसारेण जायन्ते पञ्चकल्पना।

यदि त्वालोच्यसम्मील्य नेत्रे कश्चिद्विकल्पयेत्।।"-इति।

किञ्च परम्परया अक्षजत्वेऽपि-नानुमानादिषु प्रत्यक्षत्वप्रसङ्गः। पङ्कजादिष्विव योगरूढिस्वीकारेण अनुमानादिषु प्रत्यक्षशब्दस्याप्रवृत्तेः। तस्माद्योगरूढिशक्त्या निर्विकल्पक-सविकल्पकयोरेव प्रत्यक्षशब्दवाच्यत्वं न अक्षापेक्षाणामप्यनुमानादीनामितिसिद्धम्।"[१९]

श्लोकवार्त्तिकेऽप्युक्तं कुमारिलभट्टेन-

"निर्विकल्पकबोधोऽपि नाक्षं केवलकारणम्।

तत्पारम्पर्यजाते वा रूढिः स्यात् पङ्कजादिवत्।।"[२०] इति।

अत्र तावदवयवशक्त्या निर्विकल्पकं रूढ्या च सविकल्पकमिति। वस्तुतः निर्विकल्पकबोधेऽपि विषयेन्द्रियसन्निकर्षादीनां सर्वेषां कारणत्वेनानुभूयमानेन न केवलमिन्द्रियजन्यत्वमित्येवं सविकल्पकेऽपि निर्विकल्पकस्य कारणत्वान्न तस्य प्रत्यक्षत्वं व्याहन्यते। परम्परयेन्द्रियजन्यत्वेऽपि पङ्कजादिवद्योगरूढिमादाय प्रत्यक्षपदमत्र निर्विकल्पक-सविकल्पकयोरेव वाचकं न तु परम्परया चक्षुरादीन्द्रियजातानामनुमानादि प्रमाणानामिति।

अत्र च सविकल्पकात्मकप्रत्यक्षे पञ्चकल्पनाः समुद्भवन्ति। द्रव्यकल्पना, जातिकल्पना, गुणकल्पना, कर्मकल्पना, नामकल्पना, चेति पञ्चधा विकल्पः। तद्यथा-

"सविकल्पकेन च द्रव्यजातिगुणकर्मनामभिः पञ्चधा विकल्पो भवति। यथा- "वेणुवानयम", "गोपोऽयम्", "श्यामोऽयम्","गायत्ययम् ","गोविन्दोऽयम्"- इति।

प्रत्यभिज्ञाप्रत्यक्षमपि षष्ठो विकल्प इति केचित्। तन्न, नामकल्पनायामन्तर्भावात्। नाम्ना हि पूर्वमनुभूतरूपे स्मारिते तद्रूपविशिष्टतया अर्थस्य कल्पना नामकल्पनेत्युच्यते। तेन गोविन्दोऽयमित्यस्य अयमर्थयोऽस्मा- भिर्गोविन्दशब्दवाच्यतया पूर्वं गृहीतः स एवायमिति। यदातु शब्दवाच्यत्वमतन्त्रीकृत्य पूर्वापररूपयोरैक्यावगम एव तात्पर्यम्, तदा स एवायम् इति प्रत्यभिज्ञा स्पष्टा भवति। सा च प्रत्यभिज्ञा संस्कारं सहितेनेन्द्रियेणैकज्ञानत्वेन जायते। तथा स इति अयमिति च द्वे भाने जन्यते। तत्र स इति भानजननशक्तिः संस्कारकृता। अयमिति भानजननशक्तिरिन्द्रियकृतेति।"[२१] इत्थं प्रत्यभिज्ञाया नामविकल्पेऽन्तर्भावान्न तस्यातिरिक्तिरवसया। पञ्चधाविकल्पयुक्तस्य सविकल्पकस्य स्वरूपं विज्ञेयम्। नैयायिकास्तावन्निर्विकल्पक-सविकल्पकयोः स्वरूपमित्त्थं व्याख्यान्ति- "तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्। यथा-किञ्चिदिमिति।" "सप्रकारकं ज्ञानं सविकल्पकम्। यथा- डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयमिति।"[२२] अत्र च प्रत्यक्षज्ञानेषु विवक्षाभेदेन इन्द्रियस्य तत्सन्निकर्षस्य ज्ञानस्य वा करणत्वं भवति। यथोक्तं कुमारिलभट्टेन-

"यद्वेन्द्रियं प्रमाणं स्यात्तस्या वार्थेन सङ्गतिः ।

प्रमाणफलते बुद्ध्योर्विशेषणविशेषयोः।

हानादिबुद्धिफलता प्रमाणं चेद्विशेष्यधीः।"[२३]

इत्येवमिदमायाति यत्-यदा इन्द्रियस्य करणत्वमिष्यते तदा सन्निकर्षो व्यापार:, निर्विकल्पकधीर्फलम्। नीतितत्त्वाविर्भावे च-

मानामिन्द्रिययोगोत्थमिह प्रत्यक्षमुच्यते।
द्रव्यं जातिर्गुण: कर्म विषयश्च चतुर्विध:।।इति।।

यदा तु इन्द्रियार्थसन्निकर्षस्य करणताभ्युपेयते तदा निर्विकल्पकस्य व्यापारत्वम्, सविकल्पकं फलम्। यदा पुनर्निर्विकल्पकस्य करणत्वमिष्टन्तदा सविकल्पकस्य व्यापारता हानोपादानादिबुद्धिर्फलमिति निष्कर्ष:।

तदेवमिन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति सुस्थिरम्। अत्र चेन्द्रियभिन्नद्रव्य- जाति- गुण- कर्मणां विषयत्वं भवति। तद्यथा - "मानमेयोदये"-

"इन्द्रियव्यतिरिक्तानि द्रव्याण्येषां च जातय:।
प्रायश्च गुणकर्माणि प्रत्यक्षाणीति वक्ष्यते।" [२४]।।इति।।

उपर्युक्तविवेचनेन विभिन्नदर्शनसम्मतप्रत्यक्षप्रमाणस्वरूपं प्रतीतिपथमायातीति शम् ।।

**सन्दर्भसूची-**


१. न्या.सू.१.१.४;
२. न्यायभाष्यम्-पृ-५८-६८
३. न्या.मुक्तावली-पृ-६४;
४. न्यायभाष्यम्-पृ-६८-७०;
५. न्या.सि.मुक्तावली
६. सांख्यकारिका-का-५८;
७. सांख्यतत्त्वकौमुदी-पृ-८०-८१;
८. मानमेयोदय:-पृ-११-१२;
९. श्लोकवार्त्तिकम्-पृ-१६८;
१०. श्लोकवार्त्तिकम्-पृ-१७२;
११. मानमेयोदय:-पृ-१८-२०;
१२. प्रकरणपञ्जिका-पृ-१०४;
१३. न्यायबिन्दु-पृ-४०;
१४. न्यायबिन्दु-पृ-४७;
१५. प्रमाणवार्त्तिकम्-३/५७;
१६. विवेकमार्तण्ड:– पृ-३३८;
१७. त. सं.-पृ-३३८;
१८. मानमेयोदय:-२१-२३;
१९. मानमेयोदय:-पृ-२३-२६;
२०. श्लोकवार्त्तिकम्-पृ-१७५;
२१. मानमेयोदय:-पृ-२६-२७;
२२. तर्कसंग्रह:
२३. श्लोकवार्त्तिकम्-पृ-१५२-१५६;
२४. मा.मे.-पृ-३;



नव्यन्यायविभाग:
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# अद्वैतवेदान्तनये आत्मतत्त्वविचार:

डॉ. प्रदीपचन्द्र आचार्य:

सांसारिकदु:खानलज्वालासंतप्ता: जीवा: तदुपरमोपायान् अनुसन्धन्ते सर्वदा । तत्र केचन संसारिकसुखेषु सांसारिकदु:खनिवृत्त्युपं तथा केचन इतोऽन्यथा सम्भवेदिति चिन्तयन्ति । शास्त्रकारा:, आचार्या: विभिन्नानि शास्त्राणि च अद्वितीयात्मन:स्वरूपज्ञानेन आत्यन्तिकदु:खनिवृत्ति: इति मुक्तकण्ठेन उद्घोषयन्ति । तथा श्रुतय:–

**ब्रह्म वेद ब्रह्मैव भवति** । मु.उ.-३/२/१

**तरति शोकमात्मवित्** । छा.उ.-८/४/२

**द्वितीयाद्वै भयं भवति** । बृ.उ.-१/४/२

सर्वोपरि ब्रह्मानन्दे निमज्जितस्य कुत: भयं न भवति । ब्रह्मण: स्वरूपभूतानन्दं विद्वान् अपरोक्षतया जानन् केभ्योऽपि ऐहिकदु:खहेतुभ्य: पारलौकिकभयहेतो: पापादेर्वा न विभेति । कर्माग्निसंभृतपुण्यपापरूपकं कर्मैव अकरणकरणाभ्यामग्निवत्संतापहेतुत्वाद् आत्मज्ञानेन पापपुण्यजन्यकर्मफलानि विनश्यन्ति । पञ्चदशीग्रन्थे विद्यते –

**आनन्दं ब्रह्मणो विद्वान्न विभेति कुतश्चन ।**

**एवमेव तपेन्नैषा चिन्ता कर्माग्निसंभृता ।।** प.द.-११/५

कोऽयमात्मेति शङ्कायामुच्यते अतति सततं गच्छति व्याप्नोति वा आत्मा । अत्सातत्यगमने इति धातो: सातिभ्यां मनिन्मनिणौ इति सूत्रेण मनिन् प्रत्यये आत्मेति शब्द: निष्पद्यते । अस्य पर्यायवाचिशब्दा: यथा–सातत्यशील:, आप्नोतीति आत्मा इत्यनेन परमकारणम्, चिद्रूप:, कर्तृत्वादिरहित:, परस्मादभिन्न:, प्रत्यगात्मा चेति । आत्मस्वरूपविषये विभिन्ना: दर्शनिका: विभिन्नानि मतानि उपस्थापयन्ति । तत्र चैतन्यविशिष्टं देहमात्मेति लोकायता: वदन्ति । केचन प्रणा: केचन अन्त:करणं केचन मुख्यप्राण: एव आत्मेति वदन्ति । पुत्र एवात्मेति केचित् आत्मा वै पुत्रनामासि इतिश्रुत्या उपस्थापयन्ति । क्षणभङ्गुरं संतन्यमानं विज्ञानमात्मेति योगाचारा: बौद्धा: । इच्छाद्वेषप्रयत्नसुखदु:खज्ञानाश्रय: आत्मेति नैयायिका: । उदयनाचार्यानुसारं आत्मा एव कत्ता तथा धर्माधर्मेच्छाद्वेषप्रयत्नादिनां नियामक: । प्राणापाननिमिषोन्मेषजीवनमनोगतीन्द्रियान्तविकारा: सुखदु:खेच्छाद्वेषप्रयत्नाश्च आत्मन: लिङ्गानि इति वैशेषिका: (वै.सू.-३/२/४) । दर्शनेऽस्मिन् आत्मन: बुद्धिसुखदु:खेच्छाद्वेषप्रयत्नसं-ख्यापरिमाणपृथक्त्वसंयोगवियोगविभागभावनाधर्माधर्मादय: चतुर्दशगुणा: स्वीकृता: । न कर्तेति सांख्या: । परन्तु देहप्राणान्त:करणेषु भिन्न: कर्त्तृत्वभोक्तृत्वरहित: ज्ञानाधिकरण्य: सजातीयविजातीयस्वगतभेदरहित: अपरोक्ष-ज्ञानात्मक: अद्वितीयस्वरूपत्मक: आत्मा । स एव आत्मा ब्रह्मपदेन अङ्गीकृत: अद्वैतवेदान्तिभि: ।

वस्तुत: एकमेव तत्त्वं परंब्रह्म नित्यशुद्धबुद्धमुक्तात्मकं सत्यं ज्ञानमनन्तं सर्वेषामज्ञानकल्पितानां अधिष्ठानकारणम् इति । एकस्यैवात्मन: अज्ञानकल्पतभेदा: जीवेश्वरादय: । एकस्यैव आत्मन: जीवपरमेश्वरसाधारण्य: चैतन्यत्मक: बिम्बभाव: । तस्यैव बिम्बस्य अविद्यात्मिकायां मायायां प्रतिबिम्बमीश्वरचैतन्यम्, अन्त: करणेषु प्रतिबिम्बं जीवचैतन्यम् च । चैतन्यमात्रं बिम्ब: परमात्मा परंब्रह्म एव । अत: अविद्यया प्रतिबिम्बित: आभासित: अवच्छिन्न: चैतन्यमात्ररूप: परमात्मैव जीव: । शाङ्करसिद्धान्तानुसारं ब्रह्मैव जीव: नापर: । अविद्यावशात् परमात्मनो: भिन्न इव लक्ष्यते । अत्र त्रयो वादा:, प्रतिबिम्बवाद:, अवच्छेदवाद:, आभासवाद: चेति स्वीकुर्वन्ति वेदान्तिन: ।श्रीपद्मपादाचार्यानुयायिनां प्रतिविम्बवाद:, श्रीवाचस्पतिमिश्रानुयायिनाम् अवच्छेदवाद:, श्रीसुरेश्वराचार्यानुयायिना-माभासवादश्च । तेन अविद्याकार्यान्त:करणं तत्र प्रतिबिम्बितो जीव: अन्त:करणावच्छिन्नं चैतन्यं जीव:, चैनन्यस्याभास: वा जीव: इत्युच्यते ।कर्मण: कर्तृत्वं सुखदु:खयोश्च भोक्तृत्वमस्मिन्नेव जीवे सम्भवति ।जाग्रत्स्वप्नसुषुप्तिषु तिसृष्ववस्थासु जीवोऽवतिष्ठते । स्थूलसूक्ष्मकारणशरीराभिमान्ययं जीव: क्रमश: विश्वतै-जसप्राणसंज्ञां लभते ।अविद्यावशिभूत: जीव: देहेन्द्रियै: सह तादात्म्यकारणात् शारीरकैन्द्रियिकमा- नसिकसुखदु:खानां भोक्ता भवति ।अविद्यापगमे ब्रह्मसाक्षात्कारे जाते स्वस्वरूपं ब्रह्मत्वमधिगच्छति ।आनन्दात्मकब्रह्मावाप्तिरेव जीवस्य मोक्षस्थिति: ।अयं जीव: नाणुर्न मध्यमपरिणाम:, अपि तु विभु: ।अस्य जीवस्य नानात्वमेकत्वं च पक्षद्वयं वर्तते । यथा - एकजीववाद: अनेकजीववाद: चेति । अविद्यात्मकोपाधेर्व्या-पकतया तदुपाधिकेश्वरस्यापि व्यापकत्वम् ।परन्तु अन्त:करणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम् । बिम्बप्रतिबिम्बकल्पनोपाधि: एकजीववादे अविद्या, अनेकजीववादे तु अन्त:करणानि एव । अत: अविद्यान्त:करणरूपोपाधिप्रयुक्त: जीवपरमात्मनो: भेद: ।उपाधिकृतदोषा: प्रतिबिम्बे जीवे एव वर्तन्ते न तु परमात्मनि । एतस्मात् कारणात् उपाधिभेदेन जीवभेद: । यथा च श्रुतौ –

एक एव हि भूतात्मा भूते भूते व्यवस्थित: ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।। ब्रह्मबिन्दूपनिषद् - १२

आचार्यशङ्करभाषया – जीव: चेतन: शरीराध्यक्ष: प्राणानां धारयिता तत्प्रसिद्धेर्वचनादिति (ब्र.सू.शा.भा.-१/१/६) । अविद्याकामकर्मविशिष्टकार्यकारणौपाधिकात्मा संसारी जीव: उच्यते । (बृ.उ.शा.भा.-३/८/१२) । प्रसङ्गेऽस्मिन् वेदान्तसारे - इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना एतदुपहितचैतन्यमल्पज्ञत्वानी-श्वरत्वादिगुणकं प्राज्ञ इत्युच्यते एकाज्ञानावभसकत्वात् । अस्य प्राज्ञत्वमस्पष्टोपाधितयाऽनतिप्रकाशकत्वात् । अस्यापीदमहङ्कारादिकारणत्वात् कारणशरीरम्, आनन्दप्राचुर्यत्त्वात् कोशवदाच्छादकत्त्वच्चानन्दमयकोश:, सर्वोपरमत्वात् सुषुप्ति एव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थानमिति ।एवंप्रकारेण एक: एव आत्मा अन्त:करणो-पाधिवशात् एकजीवरूपेण

अनेकजीवरूपेण वा प्रतिभाति । यद्यप्येक आत्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढः तथापि चित्तोपाधिविशेषतारतम्यादात्मनः कूटस्थनित्यस्यैकरूप्यस्याप्युत्तरोत्तरमाविष्कृतस्य तारतम्यमैश्वर्यशक्तिविशेषैः श्रूयते - तस्य च आत्मानमाविस्तरां वेद (ऐ.आ.-२/३/२, ब्र.सू.शा.भा.-१/१/११) । आत्मा ब्रह्म, व्यापकः, लयस्थानम्, उपादानम्, आप्लृव्याप्तौ इति धात्वार्थानुसारेण व्यापकः आत्मशब्दार्थः । विषयानत्तीत्यात्मेति व्युत्पत्या स्वचैतन्याभासेनोपलब्धृत्वमात्मशब्दार्थः । आत्मा स भोक्तुरपरे (ब्र.सू.शा.भा.–१/१/१) । जीवात्मापि ईश्वरादभिन्नः परमाकाशात् घटाकाशादिनामभिन्नवत् । परन्तु यथार्थस्वरूपज्ञानेन उपाध्युपरमात्मरमात्मनः जीवात्मा अभिन्नरूपेण वर्तते । अयं च जीवाख्य आत्मा स्वयं प्रकाशस्वरूपः **ज्ञोऽत एव** (ब्र.सू.-२/३/१८) इति वेदान्तसूत्रेण स्फुटं प्रतिपादनात् । अत्र वैशेषिकस्य ज्ञानाधिकरणमात्मेति मतं निरस्यं भवति । अत्र शङ्कराचार्यः स्फुटयति भाष्ये – परमेव ब्रह्माविकृतमुपाधिसम्पर्कात् जीवभावेन अवतिष्ठते इति । अस्मिन् अद्वैतवेदान्तसिद्धान्ते श्रुतिवाक्यजन्यज्ञानादन्येन साधनेन ब्रह्मसाक्षात्कारस्वरूपं नैव लभ्यते ।

मोक्षस्वरूपं तु जीवस्य ब्रह्मभावापन्नत्वम् । एकमेवाद्वितीयं ब्रह्म, नेहनानास्ति किञ्चन इत्यादिश्रुतिबलात् परमात्मनः आत्मानमभिन्नरूपेण चिन्तनात् जीवः निर्भयः सन् आत्यन्तकदुःखभावरूपं निरतिशयसुखं प्राप्नोति ।

अंशकालिकाध्यापकः, अद्वैतवेदान्तविभागः,
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्रीविहारः, पुरी

# पूर्वमीमांसादर्शने आत्मतत्त्वविमर्श:

डॉ. सन्तोषकुमार आचार्य:

आत्मतत्त्वविवेचयन्त: दार्शनिका: मिथो विवदमाना: सन्त: न किमपि जानन्तीति गीतावाक्यादनुश्रूयते यथा–

**आश्चर्यवत् पश्यति कश्चिदेनं आश्चर्यवत् वदति तथैव चान्य: ।**

**आश्चर्यवच्चैनमन्यश्रृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ।।** गी.अ. २/२९

प्रवचनद्वारा, बुद्धिद्वारा अथवा श्रवणेन आत्मा नोपलभ्यते । अतएव

**कठोपनिषदि श्रूयते - नायमात्मा प्रवचनेन लभ्यो**

**यमै वैष वृणुते तेन लभ्य स्तस्यैष आत्मा विवृणुते ततूं स्वाम् ।।** कठ.उ.१/२/२३

आत्मानुसन्धित्सूणां कृते श्रुति सावधानता अवलम्बनीया इति वदति यथा–

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।**

**क्षुरस्य धारा निशिता दूरत्या दुर्गपथस्तत्कवयो वदन्ति ।।** कठ १/३/१४

एवंभूतात्मन: स्वरूपं जिज्ञासिते सति उच्यते अतति सततं गच्छति व्याप्नोति वा आत्मा ।आदिशंकराचार्येण कठोपनिषद्भाष्ये तत्स्वरूपं प्रतिपादितम् ।

**यच्चाप्नोति यदादत्ते यच्चाति विषयानिह ।**

**यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते ।।**

श्रीमद्भागवद्गीतायामात्मन आकार: नास्तीति प्रतिपादित: भवति परन्तु दार्शनिका आत्मन: आकारविषये यद्यपि मौनमाचरन्ति तथापि परिमाणवान् आत्मा इति वदन्ति । तद्यथा (i) विभुपरिमाणवान् आत्मा (ii) मध्यमपरिमाणवान् आत्मा (iii) अणुपरिमाणवान् आत्मा इति ।न्यायवैशेषिका सांख्ययोगाद्वैतिन: मीमांसकाश्च आत्मन: विभूत्वमङ्गीकुर्वन्ति । जैना: मध्यमपरिमाणवान् आत्मा इति विश्वसन्ति । वेदान्तदर्शनस्य वैष्णवसम्प्रदाये अणुपरिमाणवान् आत्मा इति स्वीक्रियते । पूर्वमीमांसायामात्मतत्त्वविचार: शोधप्रबन्धस्य आलोच्यविषय: । कोऽयं मीमांसाशास्त्रमिति चेदुच्यते - जैमिनिमुनिरचितं वैदिकमन्त्रभाग पूजितविचारात्मकं शास्त्रं पूर्वमीमांसाशास्त्रम् । शास्त्रेऽस्मिन द्वादशाध्यायास्तथा २७४४ सूत्राणि सन्ति । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति । सूत्रानूसारेण सर्ववेदस्य मन्त्रब्राह्मणात्मकस्य कर्मणि समन्वय: प्रतिपादित: ।अत्र स्वर्गादिसाधनीभूतानि दर्शादिकर्माण्येव साधयितुं विधातुर्विश्वविधानम्, कर्मेतिमीमांसका: इति प्रसिद्धिरस्ति । पूर्वमीमांसादर्शने आत्मा न केवलां प्रतिशरीरभिन्न: न केवलां शरीररेन्द्रियादिभिन्न: अपितु अहमितिमानसप्रत्यक्ष गम्यो' विभु: नित्यश्चेति स्वीक्रियते । न तु विभुत्वे सर्वशरीरेष्वेक एवात्मा स्वीक्रियते । किं नानात्मा इति चेत् न, सत्येकत्वे यथा करणभेदेऽपि कर्तुरेकत्वाच्चक्षुषा दृष्टमर्थं मनसा स्मरति, तथा देवदत्तशरीरस्थेनात्मना दृष्टमर्थं यज्ञदत: प्रत्यभिजानीयात् । शरीरभेदेऽपि आत्मन: प्रत्यभिज्ञातुरेकत्वात् । कर्तुरेकत्वेऽपि मनोभेदाद्व्यवस्थेति चेन्न, करणत्वान्मनस:, करणभेदस्य च चक्षुरादे:

भेदव्यवस्थापकत्वायोगस्योक्तत्वात् । वायुदृष्टान्तेन स्पष्टीक्रियते, यथा–

**"वेणुरन्ध्रादिभेदेन भेद: षडजादिसंज्ञित: ।**
**अभेदव्यापिनो वायोस्तथा तस्य महात्मन: ।।"** इति

न हि वायुद्रव्यं सर्वत्रैकं, व्यक्तिभेदस्य स्पष्टत्वात् । अविलक्षणस्वभावस्य तु वायो: वेणुरन्ध्रकृतं षड्जादि वैलक्षण्यम् । एवमात्मनोऽपि परस्परं भिन्नस्य अविलक्षण स्वभावस्य पशुमनुष्यादिवैलक्षण्यं तत्तदेहसंबन्धकृतं, न स्वाभाविकमित्यर्थ: । तस्मात् प्रतिशरीरं भिन्ना एवात्मान:, सर्वगता:, नित्या इति स्वीक्रियते । एवंञ्च बद्धमुक्तादि व्यवस्थाऽपि युक्ततरा भवति । अत्र कर्ममीमांसायां कर्मोपयुक्तं जीवस्वरूपमुक्तम् । वास्तवं जीवस्वरूपं तु ब्रह्मीमांसायां प्रतिपादितम् । तदत्र आलोच्यविषय: न । अतएव वार्तिककारेणोक्तम् –

**"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्ति तां भाष्यकृदत्र युक्त्या**
**दृढत्वमेतद्विशय प्रवोध: प्रयाति वेदान्तनिषेवणेनेति ।।"**

मीमांसकमतानुसारमात्मनि कर्तृत्वं भोक्तृत्वं च स्त: । ज्ञानसुख दु:खादिगुणास्तस्मिन् समवायसम्बन्धेन विद्यन्ते । परं स्वात्मन: ज्ञानसुखादिस्वरूपत्वं वेदान्तिन इव नैते अङ्गीकुर्वन्ति । श्रूयते यज्ञकृन्मरणान्तरं स्वर्गं प्रति गच्छति मरणान्तरं पञ्चभौतिकंशरीरं विनश्यति इति सर्वेषां प्रत्यक्षसिद्धम् । तदानीमेव यस्तावच्छरीरं इन्द्रियादिकं च विहाय स्वर्गं गच्छति, स एवात्मा सुखदु:खादि फलाभोक्ता । आत्मन: स्वरूपप्रतिपादितोऽस्ति वार्तिके –

**यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यते ।**
**न परिस्पन्द एवैका क्रिया न कणभोजिवत् ।।** मो.श्लो.वा.पृ.७०७

जीवात्मा शरीराच्छरीरान्तरं गच्छति । प्रतिशरीरावच्छेदेन जीवात्मनो भिद्यन्ते । स्वानुभवगम्योऽयमिति कृत्वा अस्य मानसप्रत्यक्षवेद्यत्वमङ्गीक्रियते । प्रभाकरमते जीवात्मा भोक्ता, शरीरं भोगायतनं इन्द्रियं भोगसंचितम्, सुखदु:खादय: पृथिव्यादयश्च सर्वे भोगविषया इति । शरीरमिन्द्रियाणि विषयाश्च जीवात्मानं क्षिपन्ति । तदेवं पूर्वजन्मकर्मभिरूत्पन्नानां धर्माधर्माणां क्षय: क्रमश: फलभोगेनैव सम्भवति ।

**मीमांसकमते मोक्षस्वरूपम् –**

मीमांसामते प्रपञ्चसंबन्धे विलयो मोक्ष: । न त्वद्वैतमत इव प्रपञ्चप्रविलयो मोक्ष: । त्रिधा हि प्रपञ्च: पुरुषं बध्नाति । भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि भोग्याश्शब्दादयो विषया: । तदस्य त्रिविधस्याऽपि बन्धस्य आत्यन्तिकविलयो मोक्ष: । आत्यन्तिकत्वं नाम पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाश:, अनुत्पन्नानां च आत्यन्तिकोऽनुत्पाद: । कथमत्यन्तानुत्पत्ति: ? उच्यते उत्पादकयोधर्माधर्मयोनिश्शेषं परीक्षयात् । तदयं प्रपञ्च संबन्धो बन्ध, तद्विमोक्षश्च मोक्ष: । एवं विचारिते सति अशेषधर्मक्षयात् मुक्तस्य न किञ्चित् सुखं स्यात् । ततश्च अपुरुषार्थ: मोक्ष: स्यात् । नैष दोष: । न हि मुक्तस्यानन्दो धर्मजन्य: । तथा सति उत्पत्तिमत्तया विनाशो स्यात् । तत्रापुनरावृत्तिश्रुति विरोध: स्यात् । स्वभाविकस्त्वानन्द: संसारेणाभिभूत: सन् निर्मुक्त संसारस्याभिव्यक्तो भोग्यो भवति । स्वभाविकत्वेनानन्दस्य "आनन्दं ब्रह्मे" त्यादिश्रुति:

प्रमाणम् । ननु मुक्तस्य सर्वकारणहीनस्यानन्दानुभवः कथमिति चेन्न, ब्रह्मेन्द्रियाण्येव मुक्तस्य निवर्त्तन्ते । मनस्तु तस्यामवस्थायामनु वर्तत इत्येतदा- नन्दश्रुतित्वलादध्यवसीयते, एवं ज्ञानञ्च ।'' न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत'' । इति श्रुतेः । तस्मात् मोक्षावस्थायां मानसप्रत्यक्षेण परमानन्दमनुभव नात्मा अवतिष्ठते । यदुक्तम् –

**''निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः ।**
**यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते ।।''** इति

**मीमांसामते मोक्षसाधनम् –**

मीमांसामते त्रिविधामात्मज्ञानम् । तद्यथा –

(i) क्रत्वर्थमेकमात्मज्ञानम् – अविनाशी वा अरेऽयमात्मात्माऽनुच्छितिधर्मा मात्राऽसंसर्गस्त्वस्य भवतीति वाक्यवोधितत्वात् । (ii) गुणविशिष्टात्मज्ञानम् – अपहतपाप्मा विजरोविमृत्युर्विशोक विजिघित्सोऽपिपासः सत्यकामः सत्यसंङ्कल्पस्सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादि श्रुत्यानुरोधेन । (iii) केवलनिर्गुणात्मविषयकज्ञानम् – आत्मानमुपासीतेति वाक्यात् । एतादृशात्मज्ञाने सत्यपि नित्यनैमित्तिकानुष्ठानं विना जन्मान्तरकृतदुरितक्षयायोगात् अकरणनिमितानागतप्रत्यवायपरिहारयोगाच्च तत्फलोपभोगार्थं बन्धप्रसक्तौ मोक्षायोगात्, ज्ञानेन सह नित्यनैमित्तिकानुष्ठानमप्यावश्यकमिति ज्ञानकर्मसमुच्चयो मोक्षसाधनम् । न हि ज्ञानस्य मोक्षसाधनतया विधानेन कर्मणो मोक्षसम्बन्धो निवार्यते । न ह्यसंसार्यात्मज्ञानपरिपाकात् प्राक् कर्तृत्वभोक्तृत्वाभिमानानिवृतौ कर्मणि प्रवृत्त्यनुपपत्तिरस्ति । परिपक्वज्ञानेनैवात्मनः कर्मसम्बन्धवारणात् । अतः मोक्षप्रतिबन्धकीभूतबन्धकारणकर्मक्षयाय नित्यादिकर्मादीनि अपि कर्तुं शक्नोत्येव अतएव वार्त्तिककार वदति –

**मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्वयोः ।**
**नित्यनैमितिके कुर्यात्प्रत्यवाय जिहासया ।।** श्लो.वा.स.प.११०

इति शम्

**पादटीका -**

१. श्री.म.भ.गी.अ.र.श्लो.२

२. मी.सू.२/१/१

श्रीजगन्नाथसंस्कृतविश्वविद्यालयः
सर्वदर्शनविभाग, पुरी-३

# शक्तिग्रहोपायविमर्शः

शुभश्रीपण्डा

शक्तिग्रहोपायसामग्री कतिविधा ? केन माध्यमेन वक्तुरुच्चरितस्य पदस्यार्थे शक्तिमवधारयतीति जिज्ञासायां मुक्तावलीकृद्भिरुक्तम् –

**शक्तिग्रहं व्याकरणोपमानाद् कोशाप्तवाक्याद्व्यवहारतश्च ।**

**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।। इति**

तत्र धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद् भवति, यथा भू धातोः सत्तार्थे ति इति प्रत्ययः, तस्यार्थ कर्तृत्वमिति व्याकरणं बोधयति । यदि कुत्रचित् सति बाधके तन्मतं त्यज्यते, यथा-आख्यातस्थले । वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते, किन्तु नैयायिकेभ्यो मतमिदं न रोचते अतस्ते आख्यातस्य कर्तरि शक्तिं निराकृत्य कृतौ शक्तिं समर्थयन्ति, एवं च तत्र नैययिकानां मते प्रथमान्तार्थमुख्य-विशेष्यकशाब्दबोधः स्वीकृतः । आख्यातार्थः कृतिः चैत्रादौ प्रथमान्तपदार्थमुख्यविशेष्यकशाब्द-बोधस्वीकृततया आख्यातार्थः कृति-श्चैत्रादौ प्रथमान्तपदार्थमुख्यविशेष्यकशाब्दबोधस्वीकृततया आख्यातार्थः कृति-श्चैत्रादौ प्रथमान्तपदार्थे प्रकारीभूय भासते । यथा चैत्रस्तण्डुलं पचति इत्यादौ तण्डुलकर्मकपाका-नुकूलकृतिमांश्चैत्रः इति प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्तैः स्वीक्रियते । एवं च कृतौ आख्यातस्य शक्तिस्वीकारे शक्यतावच्छेदकं कृतित्वं, सा च जातिः, तेन रूपेण सर्वासां कृतीनामुपस्थितिर्जायते, यदि तु कर्तरि शक्तिः स्वीक्रियते तदा शक्य कृतिमत्, शक्यतावच्छेदकं कृतिमत्त्वम्, अर्थात् कृतिः सा च कृतिः नानाविधा, अतः शक्यतावच्छेदकनानात्वप्रयुक्तगौरवं शाब्दिकानां निश्चितम् । अत्रेदानीमियं जिज्ञासोदेति यद् यदि आख्यातस्य कृतौ शक्तिः स्वीक्रियते तदा आख्यातःप्रत्ययेन कर्तुरनभिधानात् ''अनभिहिते कर्तरि'' तृतीया इति नियमेन चैत्रादिपदानन्तरं तृतीयापत्तिरिति वाच्यम् । तत्र कर्तृगतसंख्यानभिधानस्यैव कर्तृवाचकपदोत्तरं तृतीयाविभक्तिस्वीकारेण उक्तदोषस्य परिहारः । तत्र कर्तृसंख्यानाभिधानयोग्यताघटककर्त्रसंख्याभिधानयोग्यत्वं च इतरविशेषणत्वेन तात्पर्य्याविषयत्वे सति प्रथमान्तपदोपस्थाप्य एव विवक्षितः । अत्र विशेषणस्य इतरविशेषणत्वेन तात्पर्य्याविषयत्वस्यानुपादाने यत्र चैत्र इव मैत्रो गच्छति इत्यत्र चैत्रेऽपि आख्यातार्थः संख्याया अन्वयापत्तिस्याद् तद् वारणाय विशेषणं दत्तम्, तथा सति चैत्रस्य इतरविशेषणत्वेन तात्पर्य्यविषयत्वाद् प्रथमान्तपदोपस्थाप्यत्वेऽपि न संख्यायारन्वयः । प्रथमान्तपदोपस्थाप्यत्वानुपादाने, यस्य इतरविशेषणत्वेन न तात्पर्यं यथा तण्डुलं पचति इत्यादौ विशेषणत्वमुख्यविशेष्यत्वाभ्यां-तण्डुलकर्मकपाकानुकूलव्यापारवत्तण्डुल इत्येवं शाब्दबोधे तात्पर्ये सति तत्र तण्डुले संख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्यत्वविषेषणम् । अस्मिन्पक्षे गौरवात् संख्याभिधा-नयोग्यत्वस्य अपरार्थस्वीक्रियते, तच्च धात्वर्थातिरिक्ताविशेषणत्वे सति प्रथमान्तपदोपस्थाप्यत्वमिति ।

यथा तण्डुलं पचति चैत्र इत्यादौ आख्यातार्थसंख्याया अन्वयः चैत्र एव, तस्य धात्वर्थारिक्ताविशेषणत्वेन प्रथमान्तपदोपस्थाप्यत्वेन च उपस्थितिरस्ति । स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय द्वितीयदलम्, प्रथमदलन्तु चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रादेर्वारणाय बोध्यम् ।

आख्यातस्य गौरवभिया यथा कर्तरि न शक्तिस्तथा मीमांसकाभिमतव्यापारेऽपि न शक्तिः । रथो गच्छति इत्यादौ कृतेर्वाधात् तत्र आख्यातस्य व्यापारे आश्रयत्वे वा लक्षणां विधाय शाब्दबोधः स्वीकरणीयः । जानाति, इच्छति, यतते इत्यादावपि सर्वत्र आश्रयत्वे लक्षणा, नश्यतीत्यादौ तु प्रतियोगित्वे लक्षणा बोध्या ।

उपमानाच्छक्तिग्रहो यथा गोसदृशो गवय इति, गोपदस्य गवयादौ शक्तिग्रहो जायते । कोशाच्छक्तिग्रहो-यथा मित्रादिपदस्य सूर्यादौ शक्तिः कोशेन व्युत्पादिता, कोशस्थलेऽपि सति वाधकोपस्थिते त्याज्यते यथा "गुणे शुक्लादयः पुंषि" इति कोशाद् नीलादिपदस्य नीलरूपादौ नीलविशिष्टे द्रव्ये च कोशेन शक्तिर्व्युत्पादिता किन्तु लाघवप्रियाः नैयायिकाः लाघवात् नीलादिपदस्य नीलरूपादावेव शक्तिमिच्छन्ति नीलादिविशिष्टे च लक्षणावृत्या कार्यं सम्पादयन्ति ।

आप्तवाक्यादपि शक्तिग्रहः यथा कोकिलः पिकपदवाच्यः, इत्यादि शब्दात् पिकादिपदानां कोकिले शक्तिग्रहः । एवं व्यवहारादपि कुत्रचिद् शक्तिग्रहः यथा यत्र द्वौ वृद्धौ प्रयोज्य-प्रयोजकौ, एकोऽनभिज्ञवालक त्रयः सन्ति, तत्र प्रयोजकवृद्धेन प्रोक्तं घटमानय, प्रयोज्यवृद्धः घटं आनयति, एवं च पुनः उच्चते घटं नय गां वधान इति वाक्यश्रवणाद् प्रयोज्यवृद्धेन तथैव व्यवहृतः, तत्र तथाविधं व्यवहारं दृष्वा पार्श्वस्थः वालो घटादिपदस्य कम्बुग्रीवादिमदर्थे, गवयादिपदस्य शास्नादिपदार्थे शक्तिं अवधारयति ।

अत्र मीमांसकाः इत्थं वदन्ति, यद्यपि व्यवहारबलात् प्रथमतो वाक्यस्यैव अर्थविशेषे घटानयनादिरूपे शक्तिग्रहो भवति । किन्तु घटं नय, गामानय इत्येवमावापोद्वापाभ्यां घटादिपदानां सर्वत्र कार्यान्वितघटे शक्तिं गृह्णाति वालः, घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणाद् तत्र कार्यत्वबोधं प्रति च लिङादीनामेव सार्मथ्याद् भूतले नीलो घटः इत्यादौ लिङादेरभावात् न शाब्दबोध किन्तु नैयायिकाः तन्मतं निराकृत्वा स्वमतं प्रदर्शयन्ति इत्थं प्रकारेण । यद्यपि प्रथमतः व्यवहाराद् वालः घटादिपदस्य शक्त्यवधारणेऽपि पश्चात्तस्य परित्यागोचिता । अत एव चैत्र पुत्रस्ते जातः, कन्या ते गर्भिणी जाता इत्यादौ मुखप्रसादमुख मालिन्याभ्यां हेतुभ्यां लिङ्गादेरभावेऽपि शाब्दबोधः अनुभवसिद्धः अनुमेयश्च । तत्र तं पश्य इत्यादिपदान्तराध्याहारे तु न मानानुभवः । एवं च चैत्र पुत्रस्ते जातो मृतश्चेत्यादौ तदध्याहारासम्भवात् तस्मात् घटादिपदस्य घटादिपदार्थमात्रे शक्तिः न तु कार्यान्विते तस्मिन्निति निष्कर्षः ।

वाक्यशेषाद् कुत्रचिद् शक्तिग्रहः यथा यवपदस्य, दीर्घशूकविशेषे, आर्याणां प्रयोगः, एवं च म्लेछाः कङ्गरूपार्थे प्रयोगं कुर्वन्ति, तत्र यज्ञ प्रसङ्गे वाक्यमिदं प्रोक्तं यवमयश्चरुर्भवति इति तत्र यवपदस्य कोऽर्थ इति सन्देहे जाते तत्रैव यज्ञप्रकरणे तस्य परिचयः "यदान्या औषधयो म्लायन्ते अथैते

मोदमानास्तिष्ठन्ति'' इति पुनश्च

**वसन्ते सर्वशस्यानां जायते पत्रशातनम् ।**
**मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ।।**

इति वाक्यशेषाद् यवपदस्य हि दीर्घशूकविशेषे शक्तिर्निर्णीयते, कङ्गौ च शक्तिभ्रमात् ते प्रयुञ्जन्ति । हर्य्यादिपदस्थले तु वाक्यशेषादेः विनिगमकस्याभावेन नानैव शक्तिः । विवरणादपि शक्तिग्रहः, विवरणन्तु तत्समानार्थकपदान्तरेण तदर्थकथनं यथा घटोऽस्तीत्यस्य विवरणाद् घटपदस्य कलशे शक्तिग्रहः, पचतीत्यस्य पाकं करोतीत्यनेन विवरणाद् आख्यातस्य कृतौ शक्तिग्रहः । प्रसिद्धपदसान्निध्यादपि शक्तिग्रहस्तु इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रहः इति शम् ।।

**सहायकग्रन्थाः—**

१. कारिकावली
२. न्यायसिद्धान्तमुक्तावली
३. व्याप्तिपरिष्कारः
४. न्यायकौस्तुभम्

नव्यन्यायविभागः
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# न्यायदर्शने अनुमानप्रमाणम्

**मिहिररञ्जनपण्डा**
शोधच्छात्र:

तार्किकै: चतुर्विधं प्रमाणमङ्गीक्रियते प्रत्यक्षम्-अनुमानम्-उपमानम्-शब्द इति । प्रत्यक्षप्रमाणेन परिज्ञातस्य अर्थस्य सिद्धि: अनुमानेन भवति । अतएव प्रत्यक्षनिरूपणानन्तरम् अनुमाननिरूपणम् । तत्र अनुमीयते अनेन इति व्युत्पत्त्या अनुमानशब्द: अनुमितिकरणपर: । तच्च प्राचीनमतानुसारेण व्यापारवदसाधारणकारणरूपम् । तेषां मते व्याप्तिज्ञानमेव करणं भवति । नव्यमते तु यादृशकारणाव्यवहितोत्त-रमनुमितिरुत्पद्यते तदेवानुमितिकरणं भवति ।अत: तेषां मते परामर्श एवानुमानं भवति ।

विश्वनाथभट्टाचार्यै: अनुमितौ व्याप्तिज्ञानस्यैव कारणत्वमङ्गीकृतम् । व्याप्तिज्ञानाभावे हेतो: पक्षधर्मत्वप्रतीतावपि न साध्यस्यानुमिति: इति तस्यैव साधकतमत्वात् कारणता स्वीकर्त्तव्या । तथा हि –

''व्यापारस्तु परामर्श: करणं व्याप्तिधीर्भवेत् ।
अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि ।।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ।'' इति[१] ।

अनुमितौ ज्ञायमानस्य लिंगस्य करणत्वं तार्किकै: नाभ्युपेयते, यदि ज्ञायमानस्य लिंगस्य करणत्वं स्वीक्रियेत तदा अनागतादिलिंगेन अनागतादिलिंगविषयकानुमिति: नोपपद्येत । अतो व्याप्तिज्ञानमेव करणतया स्वीकार्यमिति तार्किकाणां मतम् ।

न्यायसूत्रकारेण तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतोदृष्टञ्चेति[२] सूत्रेण अनुमानस्य प्रत्यक्षपूर्वकत्वं विज्ञाप्य त्रयो भेदा: प्रतिपादिता: ।

- पूर्ववत् अनुमानम् – यत्र कारणेन कार्यमनुमीयते तत् पूर्ववदनुमानं यथा मेघावच्छिन्नं गगनं दृष्ट्वा वर्षा भविष्यति इत्याकारकं यदनुमानं जायते तदेव पूर्ववदनुमानं जायते ।
- शेषवत् अनुमानम् – अनेन कार्येण कारणमनुमीयते यथा नद्यां वेगं प्रवाहं वा दृष्ट्वा अनुमीयते वृष्टिरभूत् इति ।शेषपदेनात्र कार्यस्यैव ग्रहणं क्रियते ।वेगप्रवाहादिकार्यं दृष्ट्वा कारणीभूतस्य पूर्ववृष्टेरनुमानं भवति ।
- सामान्यतोदृष्टमनुमानम् – यत्र कार्यकारणभावमन्तरापि वस्तुद्वयस्य नियतसहचारो दृश्यते । तत्र एकेन द्वितीयस्य यदनुमानं तत्सामान्यतोदृष्टमनुमानम् । यथा गमनमन्तरा एकस्थानात् अपरस्थानपर्यन्तं गन्तुं नैव शक्यते । भानोश्च एकस्थानात् अपरस्थाने स्थितिं दृष्ट्वा सामान्यतोदृष्टानुमानेन अनुमीयते यत् भानौ गतिरस्तीति ।

सांख्यतत्त्वकौमुद्यां च -

"त्रिविधमनुमानमाख्यातम् - तत् - तल्लिङ्गलिङ्गिपूर्वकम्[१] ।" इत्युक्तम् ।

"तत्र प्रत्यक्षकार्यत्वादनुमानं प्रत्यक्षानन्तरं निरूपणीयं तत्रापि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्यानु-सामान्यं तावल्लक्षयति– "तल्लिङ्गलिङ्गिपूर्वकमिति । लिङ्गं व्याप्यम्, लिङ्गि व्यापकम् । शङ्कित- समारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्ध व्याप्यम्, येन च प्रतिबद्धं तद्व्यापकम् । लिङ्गलिङ्गिग्रहणेन च विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति । धूमादिव्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययः तत्पूर्वकम् । लिङ्गिग्रहणञ्चावर्तनीयं, तेन लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शितम्भवति । तद्व्याप्यव्यापक- भावपक्षधर्मतापूर्वकमनुमानमित्यनुमानसामान्यं लक्षितम् । अनुमानविशेषांस्तन्त्रान्तरे लक्षितान्स्मारयति – "त्रिविधमनुमानमाख्यातं तत्" - इति ।

तत्सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधम् – पूर्ववत् - शेषवत् - सामान्यतोदृष्टञ्च । तत्र प्रथमं तावद्द्विविधं - वीतमवीतं च । अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम् ।[३] तत्रावीतं शेषवत्, शिष्यते परिशिष्यते इति शेषः, स एव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छेषवत् । यदाहुः– प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेष इति । वीतं च द्वेधा- पूर्ववत्सामान्यतोदृष्टञ्च । तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत्तत्पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्, तदस्य विषयत्वेनास्त्यनुमान- ज्ञानस्येतिपूर्ववत् यथा धूमाद् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य च वह्नित्वसामान्यस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् । अपरञ्च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षणसामान्यविषयं यथेन्द्रियविषयमनुमानम् । अत्र हि रूपादिज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते, यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादिस्वलक्षणमुपलब्धं तथापि यज्जातीयस्य रूपादि ज्ञाने करणत्वमनुमीयते तज्जातीयस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि नाकरणं, न चेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाग्दृशां, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः । सोऽयं पूर्ववतः सामान्यतोदृष्टात्सत्यपि वीतत्वेन तुल्यत्वे विशेषः । अत्र च दृष्टं दर्शनं सामान्यतः इति सामान्यस्य सार्वविभक्तिकस्तसिः, अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतोदृष्टमनुमानम् ।"[४] इत्थं वाचस्पतिमिश्रः गौतमनिर्दिष्टानुभेदानेव वीतावीतनाम्ना किञ्चिद्विशेषेण व्याकुर्याम्बभूव । कारिकावल्यामनुमानस्य त्रैविध्यं प्रतिपादितम्, तदुक्तम्[५]–

"त्रैविध्यमनुमानस्य केवलान्वयिभेदतः इति ।" तथा च अनुमानं त्रिविधम् – केवलान्वयि - केवलव्यतिरेकि-अन्वयव्यतिरेकिभेदात् । तत्र असद्विपक्षः केवलान्वयी, असत्सपक्षः केवलव्यतिरेकी, सत्सपक्षविपक्षः अन्वयव्यतिरेकी इति । अन्नंभट्टेन तु स्वार्थपरार्थभेदेन अनुमानस्य द्वैविध्यं प्रतिपादितम् । तथा हि[४] – "स्वयमेव भूयो दर्शनेन यत्र यत्र धूमः तत्र तत्राग्निः इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं

गत: तद्गते च अग्नौ सन्दिहान: पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र यत्र धूम: तत्र तत्राग्नि: इति ।'' तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते अयमेव लिंगपरामर्श इत्युच्यते तदेतत् स्वार्थानुमानम् । यत्तु स्वयं धूमात् अग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्, यथा पर्वतो वह्निमान् धूमवत्वात्, यो यो धूमवान् स स वह्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथेति । अनेन प्रतिपादितात् लिंगात् परोऽपि अग्निं प्रतिपद्यते । एतानि पञ्चावयववाक्यानि न्यायशब्देन व्यपदिश्यन्ते । एते चावयवा: प्रत्यक्षादिप्रमाणचतुष्टयमुपजीव्य प्रवर्त्तन्ते । तत्र आगममूलकं प्रतिज्ञावाक्यम्, अनुमानमूलकं हेतुवाक्यम्, प्रत्यक्षमूलकमुदाहरणवाक्यम्, उपमानमूलकमुपनयवाक्यम्, निगमनञ्च प्रमाणचतुष्टयमुपजीव्यैव प्रवर्त्तते । तदुक्तं भाष्यकृता[५] – आगम: प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपनय: उपमानम्, सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति शम् ।

**सन्दर्भा:–**


१. कारिकावली, का.-६६-६७

२. न्यायसूत्रम्-१-१-५

३. सांख्यकारिका-का.५;

४. सांख्यतत्त्वकौमुदी-पृ.६३-१०४;

५. कारिकावली, का.-७२



नव्यन्यायविभाग:

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# अभिधावृत्तिविचार:

गणेश्वरनायक:

शब्दार्थव्यवस्थासम्पादनाय अस्माच्छब्दात् अन्यस्य अर्थस्य प्रतीति: मा भूत् एतदर्थं शब्दार्थयो: संयोगसमवायादिसम्बन्धाभावेऽपि अनादि स्वाभाविकसम्बन्ध: मीमांसकवैय्याकरणौ स्वीकुरुत: । तर्योमतं निरसनाय आह महर्षिकणाद: ''सामयिक शब्दादर्थप्रत्यय:[१] इति सूत्रम् ।'' अस्य सूत्रस्य व्याख्या तावद् अन्येषु प्रशस्तपादभाष्य-न्यायकन्दली-लीलावतीप्रभृतिषु टीकाग्रन्थेषु स्पष्टं न दृश्यते, किन्तु मिश्रशङ्करेण सूत्रमिदं स्वीयोपस्कारे विवृतमित्थं प्रकारेण ''समय: ईश्वरसङ्केतस्तदधीनसामयिक यथा नकूलदम्ष्टाग्रस्पृष्टा या काचनौषधि: सा सर्वापि सर्पविषं हन्ति इति । एवं च अपरेण महर्षिणाक्षपादेन ''सामयिकत्वाच्छब्दार्थ-सम्प्रत्ययस्य[२]'' जातिविशेषे चानियमाद्[३] इति सूत्रद्वयं प्रासङ्गिकं प्रणीतम्, तत् सूत्रभाष्यकृता वात्स्यायनेन ''न समयाकारितं शब्दार्थव्यवस्थानं, किं तर्हि ? समयकारितम् । समयस्तु 'अस्य शब्दस्येदमर्थजात-मभिधेयमीति अभिधानाभिधेयनियमनियोग: तस्मिन् उपयुक्ते सति शब्दार्थसम्प्रत्ययो जायते इत्यादिरीत्या प्रथमसूत्रं दशिर्तम् । तथा शब्दार्थसम्प्रत्ययस्य सामयिकत्वादेव यथाकामम् ऋस्यार्यादिम्लेच्छानां शब्दविनियोगोऽर्थसम्प्रत्याय प्रवर्तते, स्वाभाविकत्वे तु यथा तैजसप्रकाशस्य रूपप्रत्ययहेतुत्वं देशभेऽपि नैव व्यभिचरितं भवति तथैव शब्दस्याप्यनियमो न स्यादित्यादिना च प्रदर्शितं द्वितीयसूत्रं व्याकृतम् ।

वार्तिककृतोद्योतकारेण समयकारितैव शब्दार्थव्यवस्था न तु शब्दार्थसम्बन्धप्रयुक्ता, समयस्तु ''अभिधानाभिधेयनियमनियोग एव, अयमेव वाच्यवाचकभावलक्षणसम्बन्ध: । शब्दार्थयो: स्वाभाविकसम्बन्धवादिनामपि अभिधानाभिधेयनियमनियोगोऽवश्यमन्तव्य एवेत्यादि'' दर्शितद्वितीयसूत्र-घटकजातिशब्दो देशपर इति च तत्र विस्तृतम् ।

तात्पर्यकृता वाचस्पतिना पुनरधिकं व्याख्यातं यथा गोशब्दस्य साश्नादिमान्नर्थोऽश्वशब्दस्य केसरादिमान्नेव न पुन: सास्नादिमानिति स्वरूपोभिधानाभिधेयनियमस्तस्मिन् नियोग एव समय-सङ्केतस्तत्कृतैव शब्दार्थव्यवस्था, न तु स्वाभाविकसम्बन्धकृता, स्वाभाविकसम्बन्ध -मात्रेणाऽजातसङ्केतग्रहस्य शब्दग्रहेऽर्थे विशेषप्रत्ययाजननात् अत: स्वाभाविकसम्बन्धवादिनोऽपि संकेत आवश्यको भवत्येव, ततो वर सङ्केतस्यैव शब्दार्थव्यवस्थाहेतुत्वमित्याशय: प्रकटीकृता: । एवं च जाति विशेषे चानियमाद, इत्यत्र ''जाति शब्दो देशपर:'' एक एव शब्दो देशभेदेन ऋष्यार्यम्लेच्छभेदेन च विभिन्नार्थपरो यत् लोके प्रयुज्यते तदपि स्वाभाविकपक्षे नोपपद्यते इत्यादि च प्रकृते प्रकाशो विहित: ।[४] पातञ्जले योगसूत्रे ''तस्य वाचक प्रणव:'' इत्येतत् सूत्रव्याख्यानावसरे वाच्यवाचकप्रणव इत्युल्लिख्य ''किमिदं संकेतकृतं वाच्यवाचकत्वमाहोस्वित् स्वाभाविकमिति संशयमुपस्थाय स्वाभाविकशब्दार्थयो: सम्बन्ध: शब्दार्थयो: ईश्वरसङ्केतस्तु तस्य प्रकाशक:, संकेतस्तु तस्येस्वरस्य स्थितमेवार्थमभिनयति इति भणितं भाष्यकृता ।

तत्र वाचपतिना इथ्थमुक्तम् वैशारदीनामकव्याख्यायाम्[५]'' पुन: पुन: शब्दार्थयो: स्वाभाविकसम्बन्धस्येश्वरसंकेतप्रकाशत्वे यत्र स्वाभाविकसम्बन्धस्य विरहस्तत्र सङ्केतशतेनापि तत्प्रकाशो न स्यात् । घटासत्वे प्रदीपसहस्रेणापि घटप्रकाशादर्शनात्, कृतसङ्केतस्तु शब्दस्तत्तदर्थं प्रतिपादयत्येव ।

अत: सङ्केताकृतमेववाच्यवाचकमित्यावरणपूर्वकं ''स्थितोऽष्य वाच्यस्य वाचकेन सह सम्बन्ध इति भाष्ये[६] व्याख्यातवान् । अत्र स्वाभाविकसम्बन्धपक्षोपपादनाय ''सर्व एव शब्दा: सर्वाकारार्थाभिधानसमर्था:, सर्वेषां शब्दानां सर्वकारैरर्थै: स्वाभाविक: सम्बन्ध:, ईश्वरसङ्केतस्तु प्रकाशको नियामकश्चेत्याशयस्तेनैव प्रकाशित: । किन्तु सर्वेषां पदानां सर्वार्थवाचकत्वं नैव कणादगौतमादिसम्मतम्, नापि व्यवहारिकं, न वा शब्दार्थयो: स्वाभाविकसम्बन्धस्य शब्दार्थव्यवस्थापि व्यावर्त्याभावात् शब्दार्थयो: स्वाभाविकसम्बन्धस्य शब्दार्थव्यवस्थापकत्वासम्भवादेव चात्र नियामकशब्देन शब्दार्थव्यवस्थापकतानिप्रकाशत्वेन सह ईश्वरसंकेतव्यैव प्रदर्शिता, एवं स्थितौ निष्प्रयोजनेन अनानुभाविके न च स्वाभाविकसम्बन्धेन न किमपि लाभ: ।

न्यायसारे च भासर्वज्ञेनापि शब्दार्थयो: स्वभाविकत्वं निरस्य सङ्केतस्यैव शब्दार्थव्यवस्थापकत्वं प्रतिपादितम् । तत्र स्वाभाविकशब्दार्थयो: स्वाभाविकसम्बन्धनिरासे व्यवहाराणामादिमत्वं हेतुतयोपन्यस्तम्, तत्र विक्रमादित्यश्रीहर्षादिवत् व्यवहारानादित्वे दृष्टन्ताभाव उपस्थापित: । देवदत्तेनोक्तं, अमुकशब्दादमुमर्थं प्रतिपद्यस्वेति'' एवं हि व्यपदिशति लोक इत्यादिना लौकिकव्यपदेशस्य समय: (संकेत:) प्रतिक्षिप्ता, दर्शयता संकेते एव शब्दार्थव्यवस्थापकता प्रतिष्ठिता, प्रतिक्षिप्ता च शब्दार्थसम्बन्धस्य शब्दार्थव्यवस्थापकता, ईश्वरेणापि संकेतं कुर्वता केनचिच्छब्देनैव कृतोऽभवेत् तस्य शब्दस्य केन शब्देन सङ्केत: इत्येवं रीत्या सङ्केतपक्षे अनवस्थामापादयत् ।

**सम्बन्धस्य न कर्ताऽस्ति शब्दानां लोकवेदयो: ।**
**शब्दैरेव हि शब्दानां सम्बन्धस्स्यात् कृत: कथम् ।।**[७]इति ।

पद्यमिदं उक्त्वा शाब्दिकस्य युक्तिश्चापाकृता । न केवलं शब्दैरेव शब्दानां सङ्केतोऽपि तु अङ्गुल्यादिना निर्दिश्य, हस्तेन वा संस्पृश्यामि अयं गौरित्यत्रापि संकेतो विधीयते[८] । तथा च ''अत्रायुष्मताज्ञातं विषयस्तु न लक्षित'' इत्यादि इच्छामात्रेण पृथिव्यादेरियत: कार्यस्य करणमस्मदादीनां यन्मनोरथपदवीमपि नाधिरोहति तदपि यत् सम्पद्यते तत्र भगवति नानुपपद्यते सङ्केतविधातृत्वमिति समाहितं जरन्नैयायिकेनेति शम् ।।

**सन्दर्भसूची–**


१. वैशेषिकसूत्रम् – ७,२,२०
२. न्यायसूत्रम् – २,१,५६
३. न्या.सू. – २,१,५७
४. वैशेषिकसूत्रम् ७.२.२०
५. योगसूत्रभाष्यस्य तत्ववैशारदीटीका-पृ.२९
६. योगसूत्रम् १/२७
७. वाक्यपदीयस्य हरिवृषभकृतस्वोपज्ञवृत्ति: १/२६ पृ.६८
८. न्यायमञ्जरी पृ.२२५



नव्यन्यायविभाग:
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# हेत्वाभासविचार:

डॉ. समरेन्द्रनारायणपण्डा

हेत्वाभासपदमिदं न्यायसूत्रकारेण गौतमेन प्रथमत: प्रयुक्तम् । यथा – सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता: हेत्वाभासा इति पञ्चविधान् हेत्वाभासान् स निरूपयामास । अनन्ता इमे हेत्वाभासा: तत्तत्स्थलभेदेन । अद्यापि प्रधानविभाग: पञ्चधेति प्रतिपादयितुमेव सूत्रकृता कण्ठरवेणैव पञ्चत्वमुक्तम् । यद्यपि कणादेन त्रयो हेत्वाभासा: अनपदेशपदेन वैशेषिकदर्शने प्रतिपादिता: । अथापि शिष्टयोरङ्गीकारे कणादानां न विप्रतिपत्तिरिति वैशेषिकसूत्रोपस्कारात् अवगम्यते ।

जयन्तभट्टस्तु न्यायकलिकायामेवाह – अहेतवो हेतुवदाभासमाना: हेत्वाभासा: । हेतो: पञ्चलक्षणानि पक्षधर्मत्वादीनि उक्तानि । तेषामेकैकापाये तत्र हेत्वाभासा भवन्ति । ''असिद्धविरुद्ध - अनैकान्तिक - कालात्यया-पदिष्टप्रकरणसमा:'' इति । यद्यपि प्रशस्तपादाचार्य: विरुद्धासिद्धसन्दिग्धेभ्यो भिन्नतया अनध्यवसितानामानं हेत्वाभासमङ्गीकरोति । वस्तुतस्तु स: असाधारणानैकान्तिक एवान्तर्भवतीति विज्ञेयम् । शिवादित्येनापि षष्ठ: अनध्यवसिताख्य: हेत्वाभास उररीकृत: ।

स्वार्थपरार्थभेदेन द्विधा भिन्नस्य हेतुपदवाच्यस्य लिङ्गस्य अङ्गानि पञ्च प्रतिपादितानि सप्तपदार्थ्यां शिवादित्येन । तथैव तर्कामृते जगदीशेन च, येषां वा अङ्गानां लोपे आभासविषयाणि लिङ्गानि भवेयु: । सर्वदेवसूरिणा प्रमाणमञ्जर्यां लिङ्गाभासा इति व्यवहृता इमे हेत्वाभासा: ।

हेत्वाभासानां सामान्यलक्षणमिदं भवति - ''लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मावच्छिन्न-विशेष्य-तानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिबुद्धिं प्रति तद्धर्मावच्छिन्नविषयतानिरूपित तत्सम्बन्धा-वच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्ताप्रकारताशालि अनाहार्याप्रामाण्यज्ञानाना - स्कन्दितनिश्चय:, तादृशाभावव्याप्यवत्तानिश्चयश्च प्रतिबन्धक इति ।

तर्ककौमुद्यां लौंगाक्षिभास्करेण हेत्वाभासा: पञ्चविधा इति प्रतिपादितम् । कारिकावल्यां विश्वनाथेनापि तथैव पञ्च हेत्वाभासा: अङ्गीकृता । यथा –

अनैकान्तो विरुद्धश्चाप्यसिद्ध: प्रतिपक्षित: ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ।। इति ।

रघुनाथेन पदार्थरत्नमालायामपि पञ्चहेत्वाभासा: प्रतिपादिता: ।

◆ सव्यभिचार: – एकत्र नियमेन अनवस्थिति: व्यभिचार उच्यते । तया सह वर्तत इति सव्यभिचार: । अतएव गौतमेनापि सव्यभिचार: अनैकान्तिकतया अभिवर्जित: । उदाहरणमिदमस्य नित्य: शब्द: स्पर्शत्वात् । कुम्भश्च स्पर्शवान् अनित्य: दृश्यते । शब्द: न तथा, स्पर्शवान् । अत: अस्पर्शत्वात् नित्य: शब्द इति । अत्र स्पर्शवत्वानित्यत्वे साध्यसाधनरूपे न भवत: । स्पर्शवानप्यणु: नित्य एवेति । आत्मादौ च अस्पर्शत्वादिति हेतु: नित्यत्वं व्यभिचरति । बुद्धिश्चास्पर्शा अनित्या दृष्टा । अत: उभयविधदृष्टान्तयोरपि व्यभिचारात् नास्ति साध्य-साधनभाव इति हेत्वाभासोऽयम् । एकस्मिन्नन्ते नियत ऐकान्तिक:, साध्यसाधक: अर्थात् पक्षे

सपक्षे च वर्त्तमानः । न ऐकान्तिकः अनैकान्तिकः । न केवलं पक्षे सपक्षे च किन्तु विपक्षे च वर्त्तमानः । सव्यभिचारोऽयं त्रिविधः – साधारणासाधारणानुपसंहारिभेदेन । तत्र सपक्षविपक्षवृत्तिः साधारणः सव्यभिचारः, यथा – पर्वतो वह्निमान् सत्वात्, इति । सपक्षविपक्षव्यावृत्तः असाधारणः, यथा – पृथिवी नित्या गन्धवत्त्वात्' इति । अन्वयव्यतिरेकदृष्टान्त- रहितोऽनुपसंहारी यथा – सर्वं तुच्छं प्रमेयत्वादिति ।

◆ विरुद्धः – स्वसिद्धान्तविरुद्धार्थसाधकः हेतुः विरुद्धः । अभ्युपगतं सिद्धान्तमेव विरुणद्धि अयमिति विरुद्धो नाम हेत्वाभासोऽयम् । वार्त्तिककारः अन्यदपि लक्षणं विरुद्धस्य अभिदधौ । प्रतिज्ञाविरोधी हेतुः विरुद्ध इति । साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वमिति फलितार्थः । यथा – शब्दो नित्यः कृतकत्वात् इति । अत्र कृतकत्वरूपो हेतुः नित्यत्वाभावेन अनित्यत्वेन व्याप्त इति साध्याभावव्याप्तत्वं हेतोः सम्भवतीति विरुद्धोऽयं हेत्वाभासः ।

◆ सत्प्रतिपक्षः – अयं गौतमेन प्रकरणसमपदेन व्यवहृतः । प्रकरणं नाम पक्षप्रतिपक्षौ विमर्शाधिष्ठानौ अनिर्णीतार्थौ । तेन प्रकारेण समः प्रकरणसमः । सत्प्रतिपक्षापरपर्यायः हेत्वाभासोऽयम् । यथा – शब्दो नित्यः श्रावणत्वात्, शब्दत्ववत् । शब्दोऽनित्यः कार्यत्वात्, घटवदिति । यस्य हेतोः साध्याभावसाधकः अपरः हेतुः विद्यते स सत्प्रतिपक्षो भवति । बौद्धादयः अस्य पृथक् हेत्वाभासत्वं नेच्छन्ति । न चास्य विरुद्धेऽन्तर्भावो भवितुमर्हति । विरुद्ध सत्प्रतिपक्षयोः भेदस्य स्पष्टत्वात् । प्रथमतया तात्पर्यटीकापरिशुद्धौ श्रीमदुदयनाचार्येण प्रकरणसमोऽयं सत्प्रतिपक्षपदेन व्यवहारि । किञ्च तं सत्प्रतिपक्षं त्रिधा विभाज्यापि समुपदर्शयामास तत्रैवम् – सिद्धोभयहेतुकम्, असिद्धोभयहेतुकं सिद्धसाध्योभयहेतुकञ्चेति ।

◆ असिद्धः – गौतमेनायं साध्यसम इति लक्षितः । साध्यवत् यत्र हेतुरपि साधनीय एव भवति स साध्यसम इत्युच्यते । वार्तिककारेण असिद्धं त्रैविध्यमेव अभ्युपगतम् – प्रज्ञापनीयधर्मसमानः, आश्रयासिद्धः, अन्यथासिद्धश्चेति । टीकाकारः वाचस्पतिमिश्रः असिद्धमेवं व्यभजत् । असिद्धिः प्रथमतो द्विविधा – स्वरूपतः असिद्धिः, हेतुत्वेन चासिद्धिरिति । नव्यनैयायिकैस्तु असिद्धः आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदेन त्रिधा अभ्युपगम्यते । आश्रयासिद्धः – गगनारविन्दं सुरभि, अरविन्दत्वात् सरोजारविन्दवत्, अयमेव पक्षासिद्धिरित्युच्यते । स्वरूपासिद्धस्थलं तावत् – 'शब्दो गुणः चाक्षुषत्वात्' इति । व्याप्यत्वासिद्धः – सोपाधिको हेतुः व्याप्यत्वासिद्ध इत्युच्यते । यथा – पर्वतो धूमवान् वह्नेः इत्यत्र आर्द्रेन्धनसंयोगः उपाधिः । सोपाधिकत्वात् वह्निरूपो हेतुः व्याप्यत्वासिद्ध इत्युच्यते ।

उपाधिस्तावत् साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति । अयं हि चतुर्विधः – केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति ।

◆ बाधः – सूत्रकृता गौतमेनायं कालातीत इत्यभिहितः । परिशुद्धौ उदयनाचार्येण बाधोऽयं दशधा प्रदर्शितः । अर्वाचीनैस्तु साध्यशून्यपक्षत्वं बाधः इत्युक्तम् । यस्य हेतोः साध्याभावः अन्येन प्रमाणेन निश्चितः स बाधितः । यथा - वह्निरनुष्णः द्रव्यत्वात्' इति । अत्र अनुष्णत्वरूपसाध्यस्याभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बोधोऽयम् । अयञ्च ग्राह्याभावनिश्चयरूप इत्यनुमितिप्रतिबन्धके भवति । इत्थं

सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष - असिद्ध-बाधभेदेन पञ्च हेत्वाभासा: नैयायिकैरभ्युपगता इति शम् ।।

**सन्दर्भग्रन्थसूची–**


१. न्यायसूत्रम्
२. न्यायभाष्यम्
३. न्यायवार्त्तिकम्
४. तात्पर्यटीका
५. तात्पर्यटीकापरिशुद्धि:
६. वैशेषिकसूत्रम्
७. तर्ककौमुदी
८. तर्कभाषा
९. न्यायसिद्धान्तमुक्तावली
१०. बौद्धतर्कभाषा
११. पदार्थरत्नमाला
१२. प्रमाणमञ्जरी
१३. तर्कामृतम्
१४. सप्तपदार्थी
१५. तर्कसंग्रह:
१६. वैशेषिकसूत्रोपस्कार:
१७. न्यायकलिका:
१८. प्रशस्तपादभाष्यम्



अतिथि-प्राध्यापक:

सर्वकारीयस्वयंशासित महाविद्यालय:,

अनुगुलम्, ओडिशा

# सङ्गति-मीमांसा

शुचिस्मिता नन्दी

अखिलेषु शास्त्रेषु निखिलेषु वा निबन्धेषु एकाभिधानानन्तरमपराभिधाने असङ्गताभिधानानौचित्यात् सङ्गतिसद्भावो भवत्येव, तथा तच्छास्त्रान्तर्गतयोर्निबन्धान्तर्गतयोर्वा 'पूर्वापरग्रन्थयोरर्थैक्यादेकवाक्यं साकाङ्क्षं चेद् विभागे स्यात् इति[1] जैमिनिसूत्रबोधिता साकांक्षत्वे सति एकार्थप्रतिपत्तिपरत्वरूपा, तदुपस्थाप्याकाङ्क्षानिवर्त्तकत्व, तन्निवर्तनीयाकांक्षोत्थापकत्वान्यतररूपसाकांक्षत्वघटिता या एकवाक्यता, तज्ज्ञानं यत् यदर्थसङ्गतार्थकं तत्तत्साकांक्षमिति व्याप्त्या निश्चितं सङ्गतिज्ञानसापेक्षम् । अत: सा सङ्गति किं लक्षणा, कतिविधा, किमुदाहरणेत्याकांक्षायामभियुक्तैरुक्तं सङ्गतिलक्षणमिहोपस्थाप्यते - 'आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थ: सङ्गतिरिति ।[2] अनन्तरमेव आनन्तर्यम्-चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । यन्निरूपणाव्यवहितोत्तरनिरूपणप्रयोजिका या जिज्ञासा, तज्ज्ञानविषयो ह्यर्थ: सङ्गति: । कार्ये ज्ञाते कारणज्ञानमिष्टसाधनमित्याकारककारणत्वविषयकज्ञानात्किमस्य कारणम्-इति प्रश्नमूलीभूता जिज्ञासा जायते । एवमेव कारणे ज्ञाते कार्यज्ञानमिष्टसाधनमित्याकारककार्यत्वविषयकज्ञानात् किमस्य कार्यम्-इति प्रश्नमूलीभूताजिज्ञासोदेति । अत: कार्यकारणाभिधानानन्तरं तत्कारणकार्या-भिधानप्रयोजक-तादृश-तादृश-जिज्ञासाजनक-ज्ञानविषयत्वात् कारणत्वकार्यत्वादौ सङ्गतिलक्षणसमन्वयो बोध्य: । सङ्गति-भेदाश्च इत्थमभियुक्तैरुक्ता:—

**सप्रसङ्ग उपोद्‌घातो हेतुतावसरस्तथा ।**
**निर्वाहकैक्य-कार्यैक्ये षोढा सङ्गतिरिष्यते**[3] ।। इति ।

तत्र पूर्वाभिहित-वस्तुसम्बन्धेन स्मृतस्य द्वेष्यज्ञानविषयताविरोधिरूपं जिज्ञासाविषयतावच्छेदकरूपं प्रसङ्गलक्षणम् । तदुक्तं संक्षिप्य-'स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग इति ।[4] प्रकृतोपपादकत्व-स्वरूपोपोद्घातो द्वितीया सङ्गति: । तदुक्तं-'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा:' इति ।[5] प्रकृतोपपादकविषयिणी किमस्योपपादकमित्याद्याकारिकां चिन्तामुपोद्घातसङ्गतिनि-र्वाहिकां विदुरिति तदर्थ: । तथा च निर्वाहकत्वरूपोपपादकत्वं द्वितीया सङ्गतिरिति फलितोऽर्थ: । हेतुतापदमजहत्स्वार्थलक्षणया कारणत्वकार्यत्वोभयपरम् । तथा च क्वचित् कारणत्वं क्वचिच्च कार्यत्वं तृतीया सङ्गति: । चतुर्थी चाऽवसररूपा । निर्वाहकैक्यं तदन्यत्वे सति तन्निर्वाहकनिर्वाह्यत्वं पञ्चमी सङ्गति: । एवमेव कार्यैक्यं-तदन्यत्वे सति तत्प्रयोज्यकार्यप्रयोजकत्वरूपा षष्ठी सङ्गति: ।

एतासु अन्त्या पक्षतापरामर्शग्रन्थस्थलेऽनुमितिरूपैककार्यप्रयोजकतया 'हलन्त्यम्' 'आदिरन्त्येन सहेता' इत्यादि सूत्रेषु च हलादिप्रत्याहारस्वरूपैककार्यप्रयोजकतया । उपान्त्या च 'सुद्ध्युपास्य:' 'मध्वरि:' 'धात्रंश:' 'लाकृतिरि'त्याद्युदाहरणपरकग्रन्थादौ । अनुमाननिरूपणानन्तरमुपमाननिरूपणे अवसर-स्वरूपा सङ्गति: । सा च विरोधिजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वरूपा । कारणत्वकार्यत्वसङ्गतिस्तु प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणस्थलानुमितिनिरूपणोत्तरमनुमाननिरूपणस्थलादौ । उपोद्घातसङ्गतिस्तु

अनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणे' व्याप्तिज्ञाने का व्याप्तिः 'इत्येतावन्मात्रमनभिधाय' अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः 'इत्युल्लेखेन माथुरीपञ्चलक्षणीग्रन्थादौ सूचितैव ।[६] प्रसङ्गाभिधा आदिमा सङ्गतिस्तु-काव्यादिनिरूपणान्तरं दोषगुणालङ्कारादिनिरूपणस्थलादौ सुप्रसिद्धैवेति शम् ।।

**सन्दर्भसूची—**

१. जैमिनिसूत्रम्, २.१.४६
२. अनुमितिगादाधर्या दीधितिः पृ.१४
३. अनुमितिगादाधरी, पृ.१८
४. तत्रैव, पृ.१८
५. तत्रैव, पृ.१९
६. व्याप्तिपञ्चकरहस्यम् पृ.१

नव्यन्यायविभागः
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# न्यायमतेन जीवस्य शरीराद्यतिरिक्तत्वसाधनम्

**प्रज्ञाराणी शतपथी**
शोधच्छात्रा

न्यायदर्शने देहाद्यतिरिक्त: आत्मा स्वीकृत: । अस्मिन् दर्शने [१]प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्वज्ञानान्नि:- श्रेयसाधिगम:'' इत्यादिना षोडशपदार्था: निरूपिता: । प्रमेयाश्च द्वादशधा विभक्ता: ।[२] ''आत्म-शरीर-इन्द्रिय-अर्थ-बुद्धि-मन:-प्रवृत्ति-दोष-प्रेत्यभाव-फल-दु:ख-अपवर्गास्तु ''प्रमेयम्'' इत्यादिना । द्वादशधा विभक्तेषु तेषु आत्मा प्रथम: परिगृहीत: । स चात्मा शरीरेन्द्रियादिभ्य: विलक्षण: भिन्नश्चेति प्रमाणपुरुस्सरमत्र साध्यते ।

आत्मनि प्रमाणविमर्श: – ''मानाधीना मेयसिद्धि:'' इत्यभियुत्कवचनात् आत्मनि किं प्रमाणम् इति जिज्ञास्यते प्रथमम् । ''अहं सुखी'' इत्यादिप्रत्यक्षं यद्यपि अस्ति सार्वजनीनम् । अथापि तस्य देहेन्द्रियाद्यतिरित्क आत्मविषयकत्वं यत्नसाध्यम् । तस्माद् अनुमानमेव शरणं जग्मु: नैयायिका: । अत एव न्यायसूत्रभाष्ये वास्यायन: आह –[३] ''तत्रात्मा तावत् प्रत्यक्षतो न गृह्यते'' इति। इदं भाष्यवचनं वाचस्पतिमिश्रेण स्वीयतात्पर्यटीकायां एवं व्याख्यातम् –[४] ''अहमिति ज्ञानं गौराद्याकारं शरीरावभासकं न शक्यं घटादि ज्ञानवत् दृगात्मनि प्रमाणयितुम्'' इति । एवं व्याख्याय ''परदेहवर्त्यात्माभिप्रायं वा'' इति पक्षान्तरप्रदर्शनं कृतम् । अनेन आत्मनि प्रत्यक्षमपि प्रमाणं भवितुम् अर्हतीति मिश्राणामभिप्राय इति ज्ञायते ।

न्यायवार्तिके उद्योतकर: – [४]''आगमेन प्रतिपन्न: आत्मा । तस्यानुमानेन प्रतिसन्धानार्थम्'' इति वदन् आगमस्यापि आत्मनि प्रामाण्यमङ्गीकरोति । वैशेषिकसूत्रेषु तु अहं प्रत्ययेन आत्मानं प्रसाद्य तत्र पुनरनुमानं दार्ढ्याय इति प्रथमं प्रतिपादितम् । अथापि-[५]''अहमिति मुख्ययोगाभ्यां शब्दवत् व्यतिरेकाव्यभिचाराद्विशेषसिद्धे: नागमिक:'' इति सूत्रे ''शब्दवत्'' इति उदाहरणात् यथा शब्दगुणेन आकाश: सिध्यति, तद्वत् अहं प्रत्ययेन आत्मा अनुमीयते इत्येव ज्ञायते । अत्र प्रकरणे प्रशस्तपादभाष्यमपि, इच्छादिगुणेन आत्मानं प्रसाद्य वत्कि ''तथा अहं शब्देनापीति'' । अयं च भाष्यखण्ड: श्रीधरेण कन्दल्यां अनुमानपरतयैव व्याख्यात: – यथा सुखादिभि: आत्मा अनुमीयते तथा अहं शब्देनापि अनुमीयते । अहं शब्दो लोके वेदे च अभियुक्तै: प्रयुज्यमान: न तावन्निरभिधेय: । तस्मात् योऽयिभधेय: स आत्मेति'' ।

यद्यपि ''अहं सुखी अहं जानामि'' इत्यादि प्रत्यया: आत्मविषयका: भवितुमर्हन्ति अथापि ''गौरोहम्'' इत्यादिप्रयोगात् देहातिरिक्ते एव मुख्य: इति नैव साधयितुं शक्यते । ''मम शरीरम्'' इतिवत् ''मम आत्मा'' इत्यप्यस्ति प्रयोग: । अत: अहं शब्दस्य शरिरविशयकत्वेऽपि ''राहो: शिर:'' इतिवत् ''मम शरीरम्'' इति प्रयोग: अन्यथापि उपपादयितुं शक्य: । तस्मात् अहं शब्दस्यापि देहातिरिक्तात्मविषयकत्वं उपादानसापेक्षम् ।

एवमेव चेदं उपपादितं कन्दल्यां – ''अहं'' प्रत्ययश्च न शरीरावलम्बन: परशरीरे अभावात् ।

स्वरशिरे एव अयं भवतीति इति चेत् न अविशेष ।

इत्थं च प्राय: नैयायिका: आत्मनि न प्रत्यक्षं प्रमाणयन्ति । किन्तु अनुमानमेव । परन्तु प्रत्यक्षेणापि आत्मानं साधयन्त: नैयायकैकदेशिन: सन्तीति जयन्तभट्ट: न्यायमञ्जर्या प्रमेयपरीक्षा प्रकरणे सत्पमान्हिके आह–

**[६]''तत्र प्रत्यक्षमात्मानं औपवर्षा: प्रपेदिरे ।**
**अहं प्रत्ययगम्यत्वात् स्वयूथ्या: अपि केचन ।।**

(औपवर्ष: मीमांसा वृत्तिकार:) तेषामयम् उपपादनक्रम:– ''घटमहं जानामि इति अस्ति सर्वजनीन: प्रत्यय: । तत्र घटमिति विषयभानं जानामीति ज्ञानस्य अहमिति कस्य भानम् ? न तावत् शरीरस्य तस्य जडत्वेन ज्ञानाश्रयत्वाऽभावात् । अत: आत्मैव तद्विषय: ।

ननु यदि आत्मा मनोजन्यप्रत्यक्षाविषय: कस्तर्हि ज्ञानस्य कर्ता ? आत्मैवेति ब्रुम: । कथमात्मन: कर्मण: कर्तृत्वम् ? ज्ञानं प्रति हि विषयत्वमेव हि कर्मत्वम् ? एवञ्च स्वविषयकज्ञानाश्रय: आत्मा इति न कोपि विरोध: । यदि पुन: कर्तृत्वकर्मत्वविरोधात् नात्मा प्रत्यक्ष: स्यात्, तर्हि अनुमानगम्योऽपि न स्यात् ।

**[७]''आंत्मानमात्मनाऽऽत्मैव लिङ्गादनुविनोतीति हि ।**
**तत्र नूनमुपेतव्य कर्तृताकर्मताऽपि च ।।**

न्यायसूत्रभाष्यकारोऽपि सम्वदतेऽत्र–''एतस्य ज्ञातृज्ञानविशिष्ट: पूर्वज्ञातोऽर्थ: विषय:'' इति । विशिष्ट विषयकत्वं प्रत्यक्षं विना विशेषणविषयकत्वं सम्भवति । तस्मात् प्रत्यक्ष: आत्मा । इत्थञ्च आत्मसाधने अनुमानमेव प्रमाणमिति प्राय: सर्वे नैयायिका: अङ्गीकुर्वन्ति । एकदेशिनस्त प्रत्यक्षमपि प्रमाणयन्ति । अन्ततो गत्वा आत्मविषयकत्वे उपपादनसापेक्षं प्रत्यक्षम्, अनुमानन्तु नैवमितिविशेष: पर्यवसति । वैशेषिकसूत्रे आत्मसाधकतया दश हेतवो निक्षिप्ता:–

[८]''प्राणपाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकारा: सुखदु:खेच्छाद्वेषप्रयत्नाश्च आत्मनो लिङ्गानि'' इति । तत्र प्रथमे कार्यरूपा: सन्त: सोपपत्यर्थं कारणमात्मानमुपापयन्ति अन्त्या: स्वाश्रयत्वेन आत्मानं इति विशेष: । न्यायसूत्रे अन्तिमहेतुषु ज्ञानमन्तर्भाव्य आहत्य षट् हेतव: प्रथमं निर्दिष्टा: – [९]''इच्छा - द्वेष - प्रयत्न - सुख - दु:ख - ज्ञानानि आत्मनो लिङ्गम्'' इति । इदञ्च न्यायसूत्रं त्रेधा व्याख्यातम् ।

१. अत्र भाष्यवाक्यमेव अस्ति – 'यज्जातीयस्य अर्थस्य सन्निकर्षात् सुखमात्मा उपलब्धवान् तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयम् आदातुमिच्छा एकस्य अनेकार्थदर्शिन: दर्शनप्रतिसन्धानात् भवन्ति लिङ्गमात्मन:' इति । कदाचित् सुखहेतुतया अनुभूतमर्थं कालान्तरे दृष्ट्वा तस्मिन् इच्छा उदेति । तेन ज्ञायते पूर्वकालीन एव इदानीमप्यस्तीति । न च देह: तथा । अत: देहातिरिक्त: आत्मा सिद्ध्यति ।

२. ''देवदत्तस्य रूप-रस-स्पर्शादिविषयका: प्रत्यया: एकानेकनिमित्तका: स्मृता: स: ममेति प्रतिसन्धानात् । अतिरिक्त: आत्मा सिध्यति ।'' ''योऽहं रूपं अद्राक्षं सोऽहं पश्यामि'' इत्यनुभव: समेषामस्ति । तेन चाक्षुषस्पार्शनप्रत्यक्षयो: भिन्नेन्द्रियजन्ययो: अनुसन्धाता एक एव स्थिर: आत्मा अस्तेति ज्ञायते । तदिदं तृतीये अध्याये स्पष्टीकृतं सुत्रकारेण ।

[१०]"दर्शन स्पर्शनाभ्यामेकार्थग्रहणात्" इति ।

इच्छादय: गुणा: परतन्त्रा: नाश्रयमन्तरेण तिष्ठनीति सामान्यतो दृष्टानुमानेन वा आत्मसिद्धि: ।कणादोत्कपूर्वहेतुषु इन्द्रियान्तरविकार: इत्ययं गौतमेनापि संगृहीत: । [११]"इन्द्रियान्तरविकारात्" इति तदीयं सूत्रम् । कस्यचित् आम्रफलस्य गृहीततद्रससाहचर्ये रूपे गन्धे वा केनचित् इन्द्रियेण गृहामाणे रसनस्य इन्द्रियान्तरस्य विकार: दत्तोदकसप्लव: गृह्यते । न चान्यदृष्टमन्य: स्मरति । अत: अतिरिक्त: आत्मा अङ्गीकर्तव्य: इति तदर्थ: । वेशेषिकसूत्रे दश हेतव: आत्मसाधकत्वेन निर्दिष्टा: । तै: सह भाष्यकार: चेष्टा रूपं हेत्वन्तरमपि व्याख्यातम्– "शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरिहार – योग्याभ्यां प्रवृत्ति – निवृत्तिभ्याम्, सारथिरिव प्रयत्नवान् विग्रहस्य अधिष्ठाता अनुमीयते" इति । तदयं हेतु: कारिकावल्यां संगृहीत: [१२]"रथगत्येव सारथि:" इति ।

**सन्दर्भग्रन्था:–**

१. न्यायसूत्रम्-१.१.१

२. न्या.सू-१.१.९

३. न्यायवार्तिक - १.१.९

४. न्यायवार्तिकम् – १.१.९

५. वै.सू – ३.२.१७

६. न्यायमञ्जरी - १.१.९

७. न्यायमञ्जरी – १.२.९ आत्मपरीक्षाप्रकरणे

८. वै.सू.३.२.४

१०. न्या.सू - ३.१.१.

११. न्या.सू - ३.१.१२

१२. कारिकावली - ५०

न्यायविभाग:
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीराजीवगान्धिपरिसर:, श्रृङ्गेरी

# शक्तिविषये कुमारिलभट्टमतम्

पौर्णमासी आचार्य

मीमांसादर्शने शक्तिविषये विशेषतो भट्टप्रभाकरयो: मतं पृथक् दृश्यते तत्र कुमारिलभट्टस्यायं सिद्धान्त: । ते सर्वत्रैव हि कारणे कार्योत्पादिकां कार्यानुकूलां शक्तिं समर्थयन्ति, सा च शक्ति:पदार्थान्तरात्मिका यथा तत्र मुक्तावलीकारेण विशेषत: पूर्वपक्षे भट्टस्य मतमुल्लेखितम्, यथा दाहं प्रति दाहजनिका शक्ति: कारणम् । सा च शक्ति: वन्हौ तिष्ठति इति सा शक्ति: कुत्रचित् ज्ञाता सति कारणता, कुत्रचित् अज्ञाता सत्यपि कारणता सिद्धैव । यथा दाहजनिका कार्यानुकूला या शक्ति: सा वह्न्यादावज्ञातायामपि कारणम् । शाब्दबोधे च तदनुकूलपदार्थोपस्थितौ च ज्ञाता सत्येव वा कारणता इति सिद्धान्तयन्ति । एवं च तेषां मते गवादिपदानां गवाद्यर्थे न शक्तिरपितु गवाद्यर्थविषयकशाब्दबोधात्मके ज्ञाने, एवं च तन्मते वाचकत्वं न तद्विषयकज्ञानानुकूलाशक्तिमत्वम् । यदि च एवं वाचकत्वमुच्यते तदा चक्षुरादेरपि घटाद्यर्थविषयकबोधजनकत्वेन घटादेरपि वाचकत्वं स्याद् । अत: तद्विषयकत्वशाब्दत्वोभयधर्मावच्छिन्नजन्यतानिरूपितजनकतावत्वरूपमेव तद्वाचकत्वम् । अत एव एतेषां मते ज्ञानमात्रे मेयस्येव मितिमात्रोरपि भानेऽपि गवयादिघटादिपदस्य न मितिमातृवाचकत्वापत्ति: । मितिमातृविषयकत्वस्य गवादिपदजन्यतावच्छेदककोटौ प्रवेशविरहात् । एवं च लाक्षणिके गङ्गादिपदे च लक्ष्यतीराद्यर्थविषयकशाब्दबोधजनकत्वं पदेऽपि अतिरिक्तैव, किन्तु सा शक्ति: न घटाद्यर्थविषयता, घटाद्यर्थविषयकज्ञाननिरूपितैव घटपदस्य शक्ति: ज्ञानस्यैव शक्यत्त्वेऽपि तज्ज्ञानशक्तत्वमेव तद्वाचकत्वम् । तच्च वाचकत्वं तद्विषयकशाब्दबोधजनकतावच्छेदकधर्मवत्त्वम् ।

वस्तुतो घटाद्यर्थविषयकज्ञानस्यैव घटादिपदशक्यत्वेऽपि तज्ज्ञाननिष्ठवाच्यत्वं तज्ज्ञानविषयीभूतेऽर्थे आरोप्य तदर्थे वाच्यत्वव्यवहार: । घटादिनिष्ठशाब्दधीजनकतावच्छेदको धर्मश्च वह्न्यादिनिष्ठदाहानुकूला शक्तिरिव पदार्थान्तरमेव शक्त्याख्य: । लाक्षणिकपदे तु न शक्ति: तस्य शाब्दबोधानुभवजनकत्वाभावात् । मञ्चा: क्रोशन्तीत्यादौ लक्ष्यार्थमञ्चरथपुरुषादे: शाब्दबोधविषयताया: आवश्यकत्वाद् । अन्यथा पूर्वाननुभूतस्य पुरुषादे: प्रतीत्यनिर्वाहाद् अननुभूतस्य स्मरणासम्भवात् । एतावता लक्ष्यार्थस्य शाब्दबोधविषयत्वानुपपत्तिस्तु नैव । गङ्गायां घोष: इत्यादौ शक्तघोषादिपदस्य स्वार्थस्येव लक्ष्यार्थतीरादेरपि शाब्दबोधजनकत्वाभ्युपगमाद् ।

तत्र नैयायिकेभ्यो मतमिदं नहि रोचते । यतो हि एतन्मते गङ्गायां घोष: इत्यादौ गङ्गादिलाक्षणिकपदानां तीरादिलक्ष्यार्थवाचकत्वनिरास:, तत्रत्यशाब्दबोधे तत्तल्लक्ष्यार्थस्याप्रवेशम्, लक्ष्यार्थस्य स्वतन्त्रस्मरणं स्मृतस्य लक्ष्यार्थस्य समभिव्याहृतघोषादिपदैरसंसर्गाग्रहं चाभिमत्यैव विहित: । किन्तु येषां मञ्चस्थपुरुषाणां यस्य पुंस: पूर्वं कदापि नानुभव: तेषां तस्य मञ्चा: क्रोशन्तीत्यादिलाक्षणिकपदघटितवाक्यस्थलीयशाब्दानुभवे प्रवेशोऽपरिहार्य्य एव, पूर्वानुभवस्य तत्र:भावेन अननुभूतपुरुषाणां स्मरणस्य स्मर्यमाणपुरुषाणां समभिव्याहृतपदार्थैरसंसर्गाग्रहस्य च तत्र वक्तुमशक्यतैव । ततश्च तत्र लक्ष्यार्थस्य शाब्दबोधविषये तदनिच्छतोऽपि आपतिते सति गङ्गादिलाक्षणिकपदानां तीरपुरुषादिलक्ष्यार्थवाचकत्वं तन्मते दुर्वारमेवापद्यते

तदनुभवजनकत्वात्तेषाम् । न च तत्र पूर्वाननुभूतपुरुषादेः स्मरणासम्भवे शाब्दबोधानुभवोऽपि असम्भव एव वृत्तिज्ञानजन्यस्मरणात्मकतदुपस्थितेः शाब्दानुभवकारणस्य अभावादिति वाच्यम् । शाब्दानुभव-पदार्थोपस्थित्योः समानप्रकारकत्वमात्रेण न तु समानप्रकारकविशेष्यत्वेन कार्यकारणभावमभ्युपगच्छतां मीमांसकानां मते पूर्वाननुभूतस्यापि मञ्चस्थपुरुषादेः तदन्वयीतरपदार्थक्रोशकर्तृत्वादिसम्बन्धबाधाभावरूप-योग्यतावशेन शाब्दानुभवे प्रवेशसम्भवात् । येन पुंसा मञ्चस्थत्वप्रकारेण कश्चन व्यक्तिविशेषोऽनुभूतः तदनुभवजन्या या मञ्चस्थत्वप्रकारिकोपस्थितिः, सैयोपस्थितिः समानप्रकारतया पूर्वानुभूतव्यक्तितो भिन्नामननुभूतामपि व्यक्तिं स्वान्वयीतरपदार्थक्रोशकर्तृत्वसंसर्गबा- धरूपयोग्यतावशाद् तत्र जायमानशाब्दबोधे तन्मीमांसकसिद्धान्तानुसारमेव भासयेत इत्यावेदितं नैयायिकैः ।

शालिकनाथेन प्रकरणपञ्चिकायाः विमलाञ्जनाख्यसप्तमप्रकरणे ''यदा वेदार्थविदामग्रगण्यस्य भगवतस्सकलनयनिधेर्जैमिनेरपौरुषेयशब्दस्यार्थेन सम्बन्धोऽभिमतः इत्युल्लिख्य ''स जैमिनि हि मेने, यद्यपि देवदत्तादिशब्दानां पुरुषसंकेतितनिबन्धनं वाचकत्वं तथापि गवादिपदेष्वनुमानं कर्तुं न शक्यते ।

अर्थापत्तिलक्षणस्य कार्यस्यान्यथाप्युपपत्तेरनैकान्तिकत्वादिति वृद्धव्यवहारनिबन्धनाद्धि स्वार्थे वाचकत्वशक्तिज्ञानादपि बालानां शब्दार्थप्रतिपत्तिर्दृश्यते, ''तेनैकान्ततः सङ्केत एव कल्पयितुं न शक्यत[१] इत्युपन्यस्तम्, एतावता मीमांसकानां संकेतोऽपि अभिमत एवेति संक्षेपः ।।

**सन्दर्भग्रन्थाः—**


१. मानमेयोदयः

२. भाट्टदीपिका

३. भाट्टचिन्तामणिः

४. भाट्टभाषाप्रकाशः

५. शक्तिवादः



नव्यन्यायविभागः

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# लक्षणसामान्यलक्षणम्

विश्वरञ्जनजेना

लक्षणसामान्यलक्षणं तावत् असाधारणधर्मो लक्षणमिति ।[१] धर्मे असाधारण्यं च-अव्याप्त्यतिव्याप्त्यसम्भवात्मकदोषत्रयरहितत्वे सति । लक्ष्यतावच्छेदकसमनियतत्वमेव । समनियतपदार्थश्च-व्याप्यत्वे सति व्यापकत्वम्, व्यापकत्वे सति व्याप्यत्वम्वा । व्यापको व्याप्यश्च समनियतार्थ इति यावत् । यथा-गोः सास्नावत्त्वधर्मो लक्षणम् । तच्च लक्षणं द्विविधम्-तटस्थलक्षणं, स्वरूपलक्षणं च । तत्र प्रथमं स्वस्मिन् असाधारणधर्माश्रये स्वेतरेभ्यः सकलेभ्यः सजातीयेभ्यो विजातीयेभ्यश्च भेदसाधकं व्यावर्त्तकमित्युच्यते । कैश्चित्तु कतिपयेभ्य एव स्वेतरेभ्यो व्यावर्त्तकं स्वस्मिंश्च कदाचिदेव विद्यमानं तटस्थलक्षणमिति । उपपाद्यते च तैर्यथा 'शाखाग्रे चन्द्र' इत्यत्र दिगन्तरस्थिततारकादिभ्य एव व्यावर्तकं तटस्थलक्षणम्, न तु शाखोर्ध्वदेशचन्द्रसमीपतारकादिभ्य इति । यथा वा उत्पत्तिक्षणे पृथिव्यामवर्त्तमानं गन्धवत्वमिति पृथिव्याः लक्षणं यतो वा इमानि भूतानि जायन्ते यतो जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ती[२]त्यादिश्रुतिबोधितं जगज्जन्मादिकमपिपूर्ववदेव तटस्थलक्षणं ब्रह्मणः । यतोहि-जगज्जन्मादिकमसमवायिकारणेभ्य एव स्वेतरभ्यो व्यावर्त्तकम्, न तु सम्भावितोपादानकारणाभावेभ्यः प्रधानपुरुषादिभ्य इति ।

स्वरूपलक्षणन्तु-केषाञ्चिन्मतानुसारं लक्ष्येतरेभ्यः सकलेभ्यो व्यावृत्तं यल्लक्ष्यं तद्बोधनसमर्थ-लक्ष्यस्वरूपात्मकमेव लक्षणम् । यथा- तेजसो लक्षणं प्रकृष्टप्रकाशवदिति, यथा वा-पृथिव्याः पृथिवीत्वमिति । ब्रह्मणोऽपि नित्यशुद्धबुद्धत्वादिकम्, सर्वदैव तत्रावस्थितं तदात्मकं सकलेतरव्यावृत्तलक्ष्यबोधकं स्वरूपलक्षणमेव । वस्तुतो व्यवहारप्रयोजकः स्वरूपात्मकोऽसाधारणधर्म एव स्वरूपलक्षणम् । लक्षणप्रयोजनं च इतरेभ्यो व्यावर्त्तनं व्यवहारश्चेति द्विविधं निर्गलितम् । प्रसिद्धं च — व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति ।

तत्र इतरव्यावृत्तेरेव लक्षणप्रयोजनत्वस्वीकारे, व्यवहारस्य लक्षणप्रयोजनत्वानङ्गीकारे इतरभेदात्मिकाया व्यावृत्तेरभिधेयत्वादेश्च व्यावर्त्तकत्वाभावेन प्रयोजनविरहेण लक्षणस्य यल्लक्षणं तल्लक्ष्यत्वविरहात् लक्ष्यतावच्छेदकसमनियतत्वरूपासाधारणधर्मत्वस्य लक्षणलक्षणस्य तत्र सत्त्वेन तत्रातिव्याप्तिः स्यात्, तत्परिहाराय असाधारणधर्मात्मकलक्षणलक्षणे व्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं चाऽवश्यं निवेशनीयम् । व्यावृत्तेरिव व्यवहारस्यापि लक्षणप्रयोजनत्वाङ्गीकारपक्षे तु व्यावृत्तेः

व्यावर्त्तकत्वाभावेऽपि व्यवहारप्रयोजकत्वेन लक्षण-लक्षण-लक्ष्यता तत्रापीष्टैव । तथात्वे च तद्व्यावर्त्तकं व्यावृत्त्यभिधेयत्वादिभिन्नत्वं तत्र नैव निवेश्यम्[३] इति शम् ।।

**सन्दर्भाः—**


१. तर्कसङ्ग्रहदीपिका, पृ.१६-१७

२. तैत्तिरीयोपनिषद् ३/१

१. 'व्यावर्त्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्, व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम् ।' इति, तर्कदीपिका-टीका, पृ.१८,२१



नव्यन्यायविभागः

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# श्रीरघुनाथशिरोमणि:

**शिवमकुमारमिश्र:**

तार्किकश्ङ्रिोमणि: कल्पनाधिनाथ: श्रीरघुनाथशिरोमणिरासीद्बङ्गदेशीय: ब्राह्मण: । न्यायजगति के न जानन्ति श्रीरघुनाथशिरोमणिम् । अयमाचार्य: स्वीयप्रतिभया संसारे प्रतिष्ठामवाप । प्रतिष्ठितोऽयं जन: बाल्यकाले नाना दु:खानि प्राप्तवान् । विधातुरियं महती विडम्बना कदाचिदेवोत्तमविद्वान् सुखी भवति । बाल्यावस्थायामेव पितृवियोगो जात: अस्याचार्यस्य ।

एकस्मिन् दिनेऽयं शिरोमणि: स्वीयमातुरादेशानुसारेण अग्निमानेतुं समीपस्थां विशालपाकशालां गतवान् विलक्षण प्रतिभावानयं बालक: सरलस्वभावमापन्न: सन् पात्रग्रहणमन्तरेणै उपस्थितो बभूव । यत्र गतवान् सा भोजनशाला तत्कालीनस्य नैयायिक प्रवर-आचार्यसार्वभौमस्य आसीत् । तस्यां भोजनशालायां नैके शिष्या: विचरन्त: आसन् तान् दृष्ट्वा मह्यमनलं देहीत्युवाच श्रीरघुनाथ: । पात्रविहीनमेनं विचार्य 'अग्निं गृहाण' इति सोपहासमूचु: श्रीसार्वभौमशिष्या: । झटित्येव अधस्ताद्धूलिमुत्थाप्य जगाद 'दीयतामग्नि'रिति रघुनाथ: ।

इदं सर्वं दृश्यदर्शनं विदधान आसनासीन: श्रीसार्वभौमस्तस्य बालकस्याऽलौकिकीं प्रतिभां मनसा विचिन्तयन् बालकस्यानुगमनं चकार ।

'गृहमागत्य तदीयमातरमुवाच - हेमातस्तेऽयं बालकश्चास्ति महान् बुद्धिमान् प्रतिभावान् प्रत्युत्पन्नमतिमाँश्चेति मे मति: । अयञ्च बालको महानेव तार्किको भवितुमर्हति यदि भवतीमं बालकं मह्यं चेद् दद्याद् । अयञ्च मत्त: सर्वमपि न्यायशास्त्रं पठित्वा महांस्तार्किकोभविष्यतीति मे विश्वास: ।

अनन्तरं श्रीरघुनाथस्य माता सादरं सविनयञ्च प्रोवाच यदयन्तु चास्ति मदीय: समुपकार: । ततश्च तदानीमेव बालकमात्मना सहैव स्वगृहमानीतवान् महान् विद्वान् श्रीसार्वभौम: । तथा 'क' 'ख' इत्यादिवर्णानामेव प्रारम्भिकीं शिक्षां प्रारभे ।

प्रश्न: – एकस्मिन् दिने श्रीरघुनाथ: स्वीयं गुरुं श्रीसार्वभौमं प्रति यद्-हे गुरो ! अस्यैव अर्थात् 'क' इत्यस्यैव नामधेयं 'क' इति कथमस्ति कथं वोच्यते ? 'ख' इत्यस्य 'ग' इत्यस्य वा नामकरणं 'क' इति कथं न कृतमित्युच्यताम् ?

उत्तरम् – 'क' इति ब्रह्मा । ब्रह्मैव च सृष्टे: सर्वत: प्राक् समुत्पन्नो जात: अत एव ब्रह्मा इत्यस्य स्थानीय: 'क' एव सर्ववर्णेषु 'क' इति नाम्ना प्रोच्यते । एवम्भूतं समाधानं श्रावणप्रत्यक्षविषयीकृत्य बालकस्य महान् सन्तोषो जातस्तथा गौरवप्रयोज्याया: गुरुभक्ते: श्रद्धायाश्च वास्तविकं गुरुवरं श्रीसार्वभौमं प्रति परमसंवर्धनमभूत् ।

श्रीरघुनाथो महानैयायिकस्य श्रीवासुदेवसार्वभौमस्य पार्श्वे सकलं शास्त्रं समधीत्यान्ततो गत्वा विशेषजिज्ञासानिवृत्तये आहोस्वित् परीक्षणं कर्त्तुकाम: श्रीपक्षधरस्य महान्यायशास्त्रविदुष: सकाशं गतवान् । श्रीरघुनाथ एकाक्षिविहीन: 'काण' आसीदित्यपि विज्ञेयम् ।

तत्र स्वस्थानभूतं प्रभूतं स्वगृहं समागतं श्रीरघुनाथं विलोक्य सर्वेऽपि तत्रत्याः खल्वन्तेवसन्तः समुपहसितवन्तः को भवानेकलोचन इत्यादिना । अर्थात् –

''आखण्डलः सहस्राक्षः विरूपाक्षस्त्रिलोचनः ।
अन्ये द्विलोचनाः सर्वे को भवानेकलोचनः ।।''

कल्पकः श्रीरघुनाथशिरोमणिरुत्तरं दत्तवान् –

''आखण्डलः सहस्राक्षः विरूपाक्षस्त्रिलोचनः ।
यूयं विलोचनाः सर्वेऽहं न्यायैकलोचनः ।।''

'को भवानेकलोचनः' इत्यस्याऽन्यदप्युत्तरं दत्तवान् श्रीरघुनाथशिरोमणिः –

''विदुषां निवहैरिहैकमत्या यद्दुष्टं निरटङ्कि यच्च दुष्टम् ।
मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव ।।''

पुनः पक्षधरमिश्रो ब्रूते –

''वक्षोजपानकृत काण ! संशये जाग्रति स्फुटे ।
सामान्यलक्षणा कस्मादकस्मादपलप्यते ।।''

याथार्थ्येनास्य प्रश्नोत्तरं दत्तवान् श्रीशिरोमणिः – सामान्यलक्षणायाः 'अत्र वदन्ती' ति कल्पे ।

अनुमितिग्रन्थे मङ्गलप्रकरणे सगर्वं सर्वानेव नैयायिकान् महानैयायिकान् वा निर्भर्त्सितवान् श्रीरघुनाथशिरोमणिः–

न्यायमधीते सर्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः ।।

अर्थान्तरञ्च – हे सुधियः ! अस्य न्यायशास्त्रस्य किमपि रहस्यं केचन नैयायिका विद्वांसो विज्ञातुमीशते किमु ?

नव्यन्यायस्य मूलभूतग्रन्थस्य चिन्तामणौ श्रीरघुनाथशिरोमणेश्चास्ति 'दीधिति' नाम्नी टीका । इमामेव टीकामाश्रित्य गादाधरी टीका, जागदीशीटीकानामपि निर्माणं जातम् ।

श्रीशिरोमणेष्टीका अन्यत्रापि ग्रन्थान्तरेष्वपि सन्ति । चिन्तामणिग्रन्थे यास्ति श्रीपक्षधरस्य 'आलोक' टीका तत्राप्यस्ति श्रीशिरोमणेः 'दीधिति' नाम्नी टीका । इयञ्च टीका मौलिकग्रन्थवत् वर्तते समानमाना इति ।

एवं खण्डनखण्डखाद्यग्रन्थे कुसुमाञ्जलिग्रन्थे, तथा किरणावलिप्रभृतिषु ग्रन्थेष्वपि सन्ति सर्वथा सन्तोषमादधानाष्टीका अनतिप्रकाशमाना इति ।

अपि चाऽस्त्यस्य 'स्वतन्त्र पदार्थसंग्रह' नामकस्तावदेको ग्रन्थः, यस्मिन् ग्रन्थेऽयं महानुभावः पृथकत्वस्य गुणत्वं खण्डितवान् । तथा कालदिशोर्द्रव्यत्वं निराकृतवान् 'दिक्कालौ नेश्वरादतिरिच्येते' इत्यादिना ।

अपि च सामान्यलक्षणायाः, केवलान्वयिनः, केवलव्यतिरेकिणः, प्रागभावस्य,

अभावविषयकबुद्धित्वा-वच्छिन्नं प्रति प्रतियोगिज्ञानस्य कारणतायाश्च खण्डनञ्चकार । इत्थञ्च नानाविधानां पदार्थानां खण्डनं मण्डनञ्च विदधौ श्रीशिरोमणि: । एवं स्थिते इदमेव निर्णीयते यदेवं विधं खण्डनं मण्डनञ्च विदधानस्तथा स्वीयबुध्युप जनूतन न्यायपदार्थकल्पनामाश्रित्यैव श्रीरघुनाथ: 'शिरोमणि' इत्युपाधिभाजनभूतोऽभूदिति ज्ञायते ।

श्रीगङ्गेशोपाध्यायानन्तरं तार्किकनिष्ठमहत्वावच्छिन्नत्वेन प्रसिद्धिं लभमानो नैयायिकशिरोमणि: खल्वयमेव श्रीरघुनाथशिरोमणिरभूदिति ।

श्री शिरोमणेर्जन्म १४७७ ईसवीये नदियाप्रान्ते बभूव । यश्च नदियाप्रान्तो नदिया, नदिया शान्तिपुरप्रभृतिशब्दावल्यापि समुच्यमाना भवति ।

आरम्भवादभावेन भासमानेऽस्मिन् संसारसागरे सततं 'पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्' इति श्रीशङ्कराचार्योक्तन्यायेन जननमरणप्रबन्धाग्निना दन्दह्यमानानां जनानां पुनरागतिशून्यं सर्वथा अशून्यमानन्दवनलक्षणलक्षितं द्वैतात्मकं मार्गं विस्तारयामास नैयायिकशिरोमणि: श्रीरघुनाथ: । डॉ. हरिदत्तशास्त्रिप्रभृतयो विद्वांसोऽस्य महानुभावस्य काल: १५०० ई० स्वीकरोति । एतावता अयमाचार्य: नव्यन्यायस्य मूलभूतस्तम्भेषु द्रढीयान् स्तम्भ इति शम् ।।

नव्यन्यायविभाग:
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# शक्तिविषयकप्रभाकरसिद्धान्तः

**सुस्मिता दाशः**

मीमांसका: प्रभाकरमिश्रगुरव: कथयन्ति यत् शाब्दबोधाय केवलं पदानां सामर्थ्यं नास्ति, किन्तु कार्यान्वितघटादिबोधे एवं घटादिपदानां सार्मथ्यं, एवं च तेषां मते भूतले नीलो घट इत्यादि वाक्यात्र शाब्दबोध:, सवार्ण्यपि वाक्यानि प्रयोज्यप्रयोजकवृद्धव्यवहार प्रयोज्यानि । यथा गामानय गाम् वधानेत्यादीनि । तत्र प्रवर्तकत्वेन कार्यताबोधकलिङादिपदघटितानि ततश्च तद्व्यवहारदर्शिनो वाला अपि कार्यविषयकगवाद्यर्थकशाब्दबोधं प्रत्येव गवादिपदानां सामर्थ्यम् अवधारयन्ति, एवं च पश्चादपि गवादिवपदानां कार्यन्वितगवादौ शक्तिज्ञानेनैव कार्यान्विता: गवादया: ज्ञायन्ते । अतएव कार्यान्विते गवादावेव गवादिपदानां शक्तिरिति । एतेषां मते सर्वत्रैव कार्यत्वविषयतानिरूपितगवाद्यर्थविषयताशालिशाब्दत्वावछिन्नं प्रति ज्ञायमानगवादिपदत्वेन कारणम् । वाचकत्वञ्चात्र तद्विषयनिष्ठावच्छेदकताकशाब्दबोधनिष्ठजन्यतानिरू-पितजनकतावत्वम् । अस्मिन्मते तत्पदकार्यतावच्छेदककोटिप्रविष्टगवाद्यर्थविषयता क्वचिद् परम्परया क्वचित् साक्षात् कार्यत्वविषयतानिरूपिता भवति । घटमानयेत्यादौ आनयनादिनिष्ठविषयता कार्यत्वविषयतया परम्परया निरूपिता । लिङादिपदस्येव गवादिपदस्यापि कार्यतावाचकत्वं तु नैव स्वीक्रियते, यतोहि पूर्वदर्शिततद्विषय-कत्वशाब्दत्वोभयेत्यादिकार्यतावच्छेदककोटिप्रविष्टतन्निष्ठावच्छेदकतायां निरूपितत्वनिष्ठावच्छेदकत्वनि-रूपकत्वस्य निवेश: कृत: । तथा च पर्य्यवसितं चात्र निरूपितत्वनिष्ठा-वच्छेदकत्वानिरूपकतदविषयत्वनि-ष्ठावच्छेदकताकशाब्दबोधनिष्ठजन्यताकजनकत्वमेव । कार्यत्वविषय-तायाञ्चनिरूपितत्व- विषयतानिरूपकत्वस्य एव सत्वाद् गवादिपदस्य कार्यतावच्छेदकत्वापत्तेरभाव: । अत्रेयं शंका समुत्थिता यतो हि यत्र अतीतानागतपदज्ञानादपि शाब्दबोधो जायते: तत्र कार्यानुकूला शक्ति: नहि सम्भवति । अत्र-कथं तादृशस्थले शाब्दबोध ? इति चेद् तत्रोच्यते मीमांसकै: अस्माकं मते पदानां नित्यत्वाद् अतीतानागतत्वस्य तत्र अभावात् । गुरुपादप्रणीत ''मीमांसाप्रस्थाने कारणीभूतपदार्थमात्रे-ऽतीन्द्रियधर्मविशेषरूपा कार्यानुमेया-तिरिक्तपदार्थात्मिका शक्ति: । सा च शक्ति: वन्यादिदाहस्थले अज्ञातापि कार्य जनयति शाब्दबोधस्थले च ज्ञातैव पदार्थोपस्थापिका । यथोक्तम् –

**शक्ति: कार्यानुमेयत्वाद् यद्गतैवोपयुज्यते ।**
**तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयाऽपि वा**[१] ।। इति ।

वार्तिककारकुमारिलस्य मतमिदं पार्थसारथिमिश्रेण स्वीयशास्त्रदीपिकायामाविष्कृतम् । प्रभाकरमतेऽपि, यद्यपि पदनिष्ठा शक्तिरतिरिक्त एव पदार्थ:, अतिरिक्तापि सा शक्ति न केवलेऽर्थे, नार्थज्ञाने अपितु कार्यान्वितस्वार्थे अथवा अन्वितस्वार्थे एव । तावतापि यथा घटाद्यर्थवाचकत्वं घटादिपदस्य कार्यताया अपि वाचकत्वं तु न । यतो हि एतन्मते सर्वत्रैव शाब्दबोधे कार्यत्वभानोपपत्तये कार्यत्वविषयता-निरूपितघटाद्यर्थविषयताशाली शाब्दत्वावछिन्नं प्रति ज्ञायमानघटादिपदत्वेन य: खलु कार्यकारण-भावोऽङ्गीकृत: । तत्र कार्यतावच्छेदकीभूता या घटाद्यर्थविषयता तद्विशेषणीभूता या साक्षात्परम्पर-यासाधारण्येन विवक्षिता विषयता तदंशे निरूपितत्वविशेषणभिन्नाऽवच्छेदकत्वनिवेशेनैव उक्तापत्ते: निवारणम् ।

अस्यायमाशय: यदर्थनिष्ठविषयता यत्पदस्य कार्यतावच्छेदिका भवति तस्यैव वाचकतया तत्पदं व्यवहृतं भवति, यद्विषयकत्वनिष्ठावच्छेदकताकशाब्दबोधनिष्ठजन्यताकजनकत्वं यत्पदस्य भवति, तद् वाचकत्वमेव तस्य इति यत्सामान्यतस्तद्वाचकलक्षणं तत्र कार्यत्वविषयताभिन्नत्वं निवेश्य घटादिपदस्य कार्यतावाचकत्वं निराकृतं भवति । एतन्मतेऽपि अतीतानागतपदस्थलेषु पदानामसत्वेन अहेतुत्वविरहोऽविद्यमानपदेषु हेतुतावच्छेदकीभूतशक्त्यभावादिति तु नाशङ्क्यम् । अस्मिन् मतेऽपि पदानां नित्यत्वेन अतीतानागतानामभावात् ।

पदानामनित्यत्वस्वीकर्तृणां मीमांसकानां मते तु अर्थनिरूपिता शक्ति: पदज्ञाने एव तज्ज्ञानशक्त्यैव तस्य वाचकत्वम् । मीमांसकविशेषमते एव वस्तुतोऽर्थस्य वाचकता पदज्ञाने एव किन्तु पदज्ञानगतां वाचकतां पदे आरोप्य आरोपितवाचकतामादाय पदे वाचकत्वव्यवहार: । मीमांसागुरुप्रभाकरप्रतिपादितसिद्धान्तोऽपि नैयायिकेभ्यो न रोचते, तत्र कुसुमाञ्जलौ उदयनाचार्येण, चिन्तामणौ गङ्गेशोपाध्यायेन अतिरिक्तशक्तिपदार्थसद्भावे प्रमाणाभावं दर्शयित्वा शक्तेरतिरिक्तत्वं खण्डितम् । एवं च तत्र व्युत्पादिता शक्ते: कारणत्वस्वरूपता वह्न्यादिना दाहादौ जननीये चन्द्रकान्तमण्यादे: प्रतिबन्धकत्वेन सूर्यकान्तमणेरुत्तेजकत्वेन वह्न्यादे: कारणत्वेन प्रतिबन्धकाभावस्य च सहकारिकारणत्वेन प्रतिबन्धकाभावविधया प्रतिबन्धाकाभावकालीनकार्योत्पादजनिकायावत्सामग्रीसमाजादेव कार्यस्य उत्पत्ति:, तदभावाच्च कार्यस्यानुपत्तिर्दृश्यते, अतोऽनेनैव कार्यकारणभावसम्भवे अतिरिक्तयेन्द्रियशक्तिपदार्थकल्पनाया आवश्यकता नहि प्रतीयते ।

एवं ज्ञायमाननित्यपदानां कार्यान्वितस्यार्थे पदार्थान्तरात्मककार्यानुकूलशक्तिमत्वेन हेतुतां स्वीकुर्वन्तोऽर्थात् कार्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्दानुभवं प्रति ज्ञायमाननित्यपदानां कार्यानुकूलशक्तिमत्वेन हेतुतामङ्गीकुर्वतो मीमांसकमतविशेषस्यापि मतं निराकृतं नैयायिकेन । यतो हि घट: कर्मत्वमानयनं कृतिरित्यादिनिराकांक्षेभ्य: पदेभ्य: जायमानोपस्थितित: घटकर्मकानयनविषयकशाब्दबोध केनापि न मन्यते तेषां मतेऽपि एतादृशस्थले शाब्दबोधवारणाय तत्पदार्थान्वितत्तत्तदर्थविषयकशाब्दबोधे तत्तत्पदसांकाक्षतत्तत्पदसमूहरूपस्य ज्ञायमानस्य साकांक्षपदसमूहरूपवाक्यस्य तज्ज्ञानस्य वा कारणत्वे आवश्यके सति वृत्तिज्ञानजन्यपदार्थोपस्थितेरेव तत्सहकारिकारणत्वमङ्गीकृत्य आपत्यनुपपत्यो: निवारणे स्वतन्त्रतया पदार्थान्तरात्मिका शक्तिकल्पने मानाभाव इति शम् ।।

सन्दर्भग्रन्था:–

१. मीमांसाश्लोकवार्त्तिकम्
२. प्रकरणपञ्जिका
३. भाट्टदीपिका
४. वृहती – शावरभाष्यम्

नव्यन्यायविभाग:
राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)
श्रीसदाशिवपरिसर:, पुरी, ओडिशा

# नव्यन्यायप्रवर्त्तकाचार्यः

सोमकान्त वेहेरा

प्राचीनन्यायदर्शने पदार्थानां ज्ञानं सुतरामतिशेते, परन्तु नव्यन्यायधारायां प्रमाणस्य ज्ञानं, तस्यैव मुख्यत्वेन विचारः क्रियते ।प्राचीनन्यायदर्शनस्य भाषा सुलभा, सरला च विद्यते, परन्तु नव्यन्यायदर्शनस्य भाषा अत्यन्तगूढा अवच्छेदकावच्छिन्नसहिता दृश्यते । बौद्धानां कुतर्केण यदा सनातन धर्मावलम्बिनः आक्रान्ता आसन् तदा परमात्मनः अपारकरुणाकटाक्षेण कश्चिद्बालकः सम्बभूव । मिथिलाक्षेत्रे परमपावनजानकीधाम्नि अयं 'गंगेश' इति नाम्ना प्रसिद्धः । साम्प्रतिक - मधुबनी मण्डले (जिलायाम्) 'मङ्गरौनी' इति ग्रामे अस्य जन्म अभवदित्याचार्याः प्रमाणयन्ति ।अस्य ग्रामस्य प्राचीनसंज्ञा 'मङ्गलवनी' इत्यासीत् ।परिगणितचतुर्दशविद्याघटकीभूतेन न्यायविस्तरेत्येनेन न्यायदर्शनं जरीगृह्यते ।श्रीमद्महर्षिगोतमेन विरचितस्य प्रमाणप्रमेयेत्यादिषोडशपदार्थप्रतिपादकस्य पञ्चाध्यायस्वरूपस्यास्य न्यायदर्शनस्य प्रमाणस्वरूपं केवलमेकमेवांशमादाय श्रीगङ्गेशोपाध्यायश्चिन्तामणिग्रन्थ-महानिनिबन्धभूतं विरचयामास । चिन्तामणिग्रन्थश्चतुर्षु भागेषु विभक्ताः सन्ति ।

महानिबन्धभूतश्चिन्तामणिग्रन्थोऽयं कणादतर्कवागीशकृतेन मणिव्याख्यानेन, नैयायिकशिरोमणिकल्पना-धिनाथरघुनाथकृतेन दीधितिव्याख्यानेन, वर्धमानोपाध्यायविहितेन चिन्तामणिप्रकाशेन, श्रीशङ्करमिश्रकृतेन चिन्तामणिमयूखेन, श्रीपक्षधरमिश्रविहिततत्त्वचिन्तामण्यालोकेन, श्रीभवानन्द सिद्धान्ततर्कवागीशविहतया तत्त्वचिन्तामणिटीकया, श्रीरघुदेवन्यायालङ्कारकृतया तत्त्वचिन्तामणिगूढार्थदीपिकया, महामहोपाध्यायगदाधर- भट्टाचार्यकृततत्त्वचिन्तामणिव्याख्यानादिभिर्भूषितोऽयं ग्रन्थो सहदेव महत्त्वं प्राप्तवान् ।

चिन्तामणिग्रन्थोऽयं द्वादशशताब्द्या अन्ते (अन्तिमसमये) विरचितः श्रीमतागङ्गेशेन ।एतेनैव ग्रन्थेन श्रीमतो जन्मकालः द्वादशशताब्द्या अन्तिमो भागात्मकः ज्ञायते ।

यतस्तत्तत्स्थलेषु समुल्लिखितेन 'एतेन खण्डनकारमतमपास्तम् इत्यनेन ज्ञायते यत् 'खण्डनकारः' दशमशतक स्योत्तरभागे विद्यमान आसीत् ।

आचार्यगङ्गेशः चतुर्णां प्रमाणानां प्रदर्शनेन 'चिन्तामणिग्रन्थमाध्यमेन सम्पूर्णेऽपि न्यायशास्त्रे स्वीयं न्यायवैदुष्यं संसाधयामास ।

अयञ्चोदयनाचार्यस्य विदुषोऽनन्तरकालावच्छेदेन जायमानः खल्वेको नैयायिकप्रवररत्नभूतो विद्वान् एवाभूत् मिथिलामण्डलमण्डनरूपो गङ्गेशो मिथिलादेशनिवासी, तथा अलौकिकपाण्डित्यपूर्ण 'वर्धमानोपाध्यायस्य' जनकश्चासीत् ।

महानुभावोऽयं भगवत्याः कृपाप्रसादेन अलौकिकप्रतिभां प्राप्तवानित्येको जनश्रुतिः श्रयते ।तद्यथा – श्रीगङ्गेशः स्वीयमातुलगृहे निवसन्, गाश्च चारयन् स्वयं जीवनं चापयन्नासीत् । अस्य मातुलानी सर्वदा चास्मै पर्युसितं भोजनं कर्पदिकाख्यमददत् । एकस्मिन् दिने बुभुक्षित एवायं गाश्चारयितुं गतवान्, अथ च

सायंकालेऽप्ययं नागतवान् गृहम् । यद्यपि गङ्गेशः मन्दमतिरासीत्तथापि निर्भीकः । एकदा एतस्य सतीर्थ्याः गङ्गेशं सर्वथा निर्भीकं मन्यमाना रात्रौ प्रेषयामासुः, अग्नेश्चेतुं श्मशानघट्टे । सर्वभूतसंयोगित्वेन सर्वत्र विराजमाना श्रीजगज्जननी जगदम्बापार्वती गङ्गेशस्य निर्भीकतां मन्दबुद्धितां संन्निरीक्ष्य हर्षप्रकर्षवदना सती वरं ब्रूहीति प्रोवाच ।

ततश्चायं श्रीगङ्गेशो न्यायशास्त्रस्य पूर्णवैदुष्यपरिपूर्णां न्यायविद्यां मे देहीत्युवाच । 'तथास्त्विति' वरं प्रदाय माता पार्वती तत्रैवान्तर्दधे ।

तादृशजगद्वन्द्यमातृप्रदत्तवरप्रदानरूपकारणवशादेव आचार्यो गङ्गेशः अलौकिकप्रतिभां प्राप्तवान् । ततेः आगते गङ्गेशे मातुलो वदति 'त्वं गौः' इति । श्रीगङ्गेशो बूते गोत्वावच्छिन्नो गौर्भवति, अर्थाद् गोत्वं यस्मिन्नधिकरणे वर्त्तते स एव गौः कथ्यते, इति 'गो' शब्दस्य प्रवृत्तिनिमित्तम् = शक्यतावच्छेदकं यद् गोत्वं तदधिकरणं गौरित्यर्थः । तच्च गोपदस्य प्रवृत्तिनिमित्तं गोत्वं नास्ति मयीति नाऽहं गौः ।

किन्तु ब्राह्मणत्वरूपस्य प्रवृत्तिनिमित्तस्य, मनुष्यत्वरूपस्य वा प्रवृत्तिनिमित्तस्य मयि सत्तेनाऽहं ब्राह्मणो वा मनुष्यो वाऽस्मीत्युभयत्वावच्छिन्नो वेति । गौरिति शब्दप्रयोग औपचारिकश्चेत्तदा भवानपि गौः। उक्तञ्च –

''किं गवि गोत्वमुतागवि गोत्वञ्चेद् गविगोत्वमनर्थकमेतत् ।
भवदभिलषितमगोरपि गोत्वम्भवतु भवत्यपि सम्प्रति गोत्वम् ।।

इदञ्च श्लोकात्मकं प्रमाणं श्रीगङ्गेशोपाध्यायस्य जीवनचरित्रे विलोक्यताम् ।

अस्य गङ्गेशोपाध्यायस्य विषये केषाञ्चिद् विदुषामिदमप्यस्ति कथनं यत् – गङ्गेशोऽयं कस्मिंश्चिद् विद्यालयं अधीयान आसीत् । तत्र वारमेकं रात्रौ छात्राणां पठनसमाप्त्यनन्त रमुपहासेऽयं परामर्शो जातो यदीदानीं रात्रौ द्वादशवादनानन्तरं कश्चिच्छात्रः श्मशानं व्रजेच्चेत्, ततश्च प्रमाणभूतं तत्रत्यमग्निं तदभावे भस्म वाऽऽनयेत्तदा तदा तं वयं परमधन्यवादपात्रं पुरस्कारार्हञ्च मन्यामहे ।

तदा गंगेश उवाचअहं जिगमिषामि । गच्छन्तं तमेकच्छात्रो व्याजहार यत् श्मशान इतोऽस्तिदैशिक-परत्वमापन्नो देशोऽतस्त्वं भगवत्याः 'तारा' देव्या नाम वाचा समुल्लिखन् मनसा संस्मरंश्चेतः प्रयाहि । गङ्गेशोऽपि गच्छन् भगवत्याः तारादेव्या नामधेयं सम्यग् रटन् संस्मरंश्च तस्याश्चरणारविन्दयोस्तथा लीनोऽभूद् येन स्वात्मानपि विस्मृतवान् ।

श्मशानप्रदेश प्राप्त्यन्तरकालावच्छेदेन पश्यति गङ्गेशः – साक्षात् पुरोवर्तिप्रदेशावच्छेदेन जगद्वन्द्या भगवती जगदम्बा तारा तत्रैव चास्ति । जगदम्बायाः भगवत्याः तारादेव्याः साक्षाद् दर्शनं विधाय महान्तंहर्षप्रकर्षमुपागमत् श्रीगङ्गेशः ।

श्रीतारा – वरं ब्रूहि वत्स ।

गङ्गेशः - न्यायशास्त्रे पूर्णवैदुष्यपूर्णां विद्यां कामये ।

श्रीतारा - 'तथास्तु' इत्युक्त्वा सा भगवती तारा तत्रैवान्तर्दधे ।

आशीर्वादानेन श्रीगङ्गेशोपाध्यायोऽनुपमन्याय-वैदुष्यसम्पन्नो मतिनिष्ठं मान्द्यञ्च सर्वथा सर्वतोभावेन

दूरीकुर्वाणोऽद्भुतं विलक्षणमलौकिकं न्यायशास्त्रीयं पूर्णं पाण्डित्यं समवाप्तवान् । तस्मिन् समये अस्य महाभागस्य कोऽपि प्रतिपक्षी नासीत् ।

प्रातः काले जायमाने एव छात्राः शयानं श्रीगङ्गेशोपाध्यायं दृष्ट्वा प्रोचुः – अये गौ ! समुत्तिष्ठ । 'गौः' इत्यस्य 'मूर्ख' इत्यर्थः । यतो 'गौ'रस्ति पशुः, पशुश्च मूर्खो भवत्येव ।

उत्तरत्वेनाह श्रीगङ्गेशः यद् गोत्वावच्छिन्नत्वेन मां सम्बोधितवन्तो भवन्तः । तत्र मया पृच्छयन्ते सर्वेऽप्यन्तेवसन्तो भवन्तः ।

भवतां सर्वेषामेव 'गौ'रिति कथनं मां प्रति सर्वथा निराधारमेव, यतो नाडहमस्मि गौरिति । गवि एव गोत्वस्य वर्त्तमानत्वात् । यदि च गोभिन्ने गोत्वं वर्त्तते इत्युच्यते, तदा भवानपि गौः तर्हि मामेव कथं गौरिति वदति भवान् । तथा चेदमेव पूर्वोक्तमनुवदति –

''किं गवि गोत्वमुताऽगवि गोत्वंचेद् गवि गोत्वमनर्थकमेतत् ।

भवदभिलषितमगोरपि गोत्वं भवतु भवत्यपि सम्प्रतिगोत्वम् ।।'' न्या.सि.मु.

नव्यन्यायविभागः

राष्ट्रिय-संस्कृतसंस्थानम्(मा.वि)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# समुद्घोषणा


| | | |
|---|---|---|
| पत्रिकाया: नाम | – | तर्कतरङ्गिणी |
| प्रकाशनावधि: | – | वार्षिकी (२०१६-१७) |
| आई.एस.एस्.संख्या | – | (ISSN) 2394-5109 |

विश्वविद्यालयानुदानायोग-स्वीकृतिसंख्या– UGC Approved Sl.No. : 63733

| | | |
|---|---|---|
| भाषा | – | संस्कृतम् |
| प्रकाशनसंस्था | – | नव्यन्यायविभाग:, राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:) श्रीसदाशिवपरिसर:, पुरी |
| मुद्रक: प्रकाशकश्च | – | नव्यन्यायविभाग: |
| संकेत: | – | राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:) श्रीसदाशिवपरिसर:, पुरी |
| सम्पादक: | – | डॉ. महेशझा: |
| जातीयता | – | भारतीय: |
| पत्राचारसंकेत: | – | नव्यन्यायविभागाध्यक्ष:, राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:) श्रीसदाशिवपरिसर:, पुरी |
| मुद्रणालय: | – | अन्नपूर्णा प्रिण्टर्स, पुरी |
| पत्रिकाऽधिकारी | – | नव्यन्यायविभागाध्यक्ष:, राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालय:) श्रीसदाशिवपरिसर:, पुरी |


अहं समुद्घोषयामि यन्मदीयाऽवगत्यनुसारेणोपरि प्रदत्तानि सर्वाण्यपि तथ्यानि यथार्थानीति ।


**डॉ. महेशझा:**

नव्यन्यायविभागाध्यक्ष:

राष्ट्रियसंस्कृतसंस्थानम्

(मानितविश्वविद्यालय:) श्रीसदाशिवपरिसर:, पुरी

ललितमतिशिष्याणां स्नानोपयोगधुन्धरा

विबुधहृदयामोदा लेखाम्बुजैः परिशोभिता ।

त्रिदिवतटिनीतुल्या श्लाघ्या नयाध्वसमाश्रिता

जयतु नितरामेषा सर्वत्र तर्कतरङ्गिणी ।।